# पूर्वार्धे साक्ष्यादग्रन्थनामानि

# साक्षिविशेषनामानि

## साक्षिपृष्ठांकाः

तीर्थस्वरूपविश्रामः १

८७-१४उपधानसिद्धिः महानिशीथे तत्प्रामाण्यं महाप्रभावता अनुपधानेऽनन्तसंसारिता आशायाऽध्ययनं अभ्यामाय आगमव्यवहारेऽनियमः ऋषभदत्तजिनदत्तौ महाश्रुतस्कन्धता स्वकृते न योगाः, आलोचनावद्भावशुद्धिः, योग्याः, कुमते स्मरणेऽपि पापं, निर्युक्तिसूत्रभेदः २३०

इति पौर्णिमीयकमतनिराकरणविश्रामः ३

८०-८९ कूर्चपुरीयो जिनेश्वरः द्रव्यदानं जिनवल्लभः गणधरमार्धशतकोक्तं वृत्तं चित्रकूटचण्डिकामठेऽवकाशः षष्ठकल्याणकोपदेशः व्याघ्रोपमः संघः निग्पत्यता विधिसंघः जिनदत्तात् खरतरः द्रव्यमुनिः सोमचन्द्रो जिनदत्तनामाधिष्ठितः जिनदत्तदेवभद्रजिनवल्लभसमुदायविचारः लम्बकर्णाद्युक्तिः जिनशेखरचर्चा रुद्रपल्लीयवर्णनं तीर्थानुकृतिः वर्षद्वये जिनदत्तः जारगर्भसीमन्तं दिग्बंधः शाखादिच्छेदः जिनवल्लभजिनदत्तचेष्टाफलं चामुण्डिकौष्ट्रिकखरतरनामानि (१२०४) गूर्जरभूपावली प्रभावकचरित्रान्तर्गतं वृत्तं तत्पिण्डार्थः दर्शनसप्ततिकावृत्तिगतं शतपद्यामौष्ट्रिकः खरतरपट्टावली जेसलमेरुशिलालेखाऽऽचारांगदीपिकाविचारः महावीरचरित्रार्थदीपिकापाठपरावृत्तिः वर्धमानसूरिकृतश्रीऋषभचरित्रप्रशस्तिः पद्मप्रभीयमुनिसुव्रतचरित्रमर्बुदाचललेखः जिनसुन्दरीयदीपालिकाकल्पः अष्टसप्ततिका-(११६४) प्रश्नैकषष्टिशतकं प्रकरणाद्युपसंपत् पट्टावलीभेदाः वीजामतीयो धर्मदासः पार्श्वचन्द्रोक्तिः खरतरपट्टावली मृषा तपागणपट्टावली रामदेवगुरुर्जिनवल्लभः कल्याणकस्तवनं दर्शनसप्ततिकापट्टावली जिनपतिर्मर्यादाकारकः जङ्ज्ञास्तवनं प्रायोऽनुवादः आचारांगदीपिकापट्टावली उपदेशसप्ततिकावचः तपोटनिंदा गणधरमार्धशतकोक्ता निंदा मलतन्दुलजलादिसिद्धिः सिद्धान्तस्तववचः असत्समतयः ज्योतिष्ककरण्डे प्रक्षेपः अर्थदीपिकाप्रक्षेपः २२२

नमः श्रीवीतरागाय



महोपाध्यायश्रीमद्धर्मसागरगणिकृता स्वोपज्ञा

# श्रीप्रवचनपरीक्षा ।





(कुपक्षकौशिकसहस्रकिरणः)

प्रणम्य श्रीमहावीरं, विश्वविश्वार्थदीपकम् । कुपक्षकौशिकादित्यं, स्वोपज्ञं विवृणोम्यहम् ॥ १ ॥

इह हि तावत् प्रारिप्सितप्रकरणस्य निर्विघ्नपरिसमाप्त्यर्थमादौ मङ्गलं वक्तव्यं, तेन देवत्वेन सम्प्रतितीर्थसाधिपतिं श्रीमहावीरं नमस्कर्तुं गाथामाह—

पणमिअ णाणनिहाणं वीरजिणं असुररायकयसरणं । सुरवरसीसविभूसणचरणरयं चारुवयणवयं ॥१॥

'वीरजिणं'ति विशेषेण ईरयति—प्रेरयति कर्मशत्रूनिति वीरः रागादिजेतृत्वाज्जिनः वीरश्चासौ जिनश्चेति (वीरजिनः) कर्मधारयः,

वर्धमानतीर्थाधिपतिः सान्वर्थनामा श्रीमहावीरोऽपश्चिमो जिनेन्द्रस्तमित्यर्थः, किं कृत्वा?—'प्रणम्य' मनोवाक्कायप्रह्वीभावेन त्रिधा नमस्कृत्येत्यर्थः, किंलक्षण वीरजिन ?—'ज्ञाननिधानं' ज्ञानं—समस्तवस्तुविषयकसाक्षाद्यथार्थविभासरूपं तस्य निधानमिव यः, यथा रत्नानां निधानमाश्रयस्तथा भगवानपि केवलज्ञानात्मकत्वेनातीतानागतवर्तमानकालवर्तिसमस्तवस्तुप्रकाशरूपस्याश्रय इति ज्ञानातिशयः १, पुनः किंभूतं?—'असुरराजकृतशरणं' असुरराजः—चमरेन्द्रस्तेन कृतं शरणं यस्य स तथा तम्। शरणकरणं त्वेवम् —एकदा सपरिवारेन्द्रसमरेन्द्रः स्वशीर्षोपरिसिंहासनस्थं शक्रं निरीक्ष्योत्पन्नेर्ष्यः शक्राशातनधिया कदाचित् शक्रपराजितः श्रीवीरजिनशरणात् मे मोक्षो भवत्विति श्रीवीरजिनं शरणीकृत्य सौधर्मं गतः, शक्रपराजितो भीतः सन् रक्ष रक्ष वीरेति ससंभ्रमकम्पाकुलः श्रीवीरचरणयोरन्तराल एव प्रविष्टः, दत्तोपयोगेन शक्रेण श्रीवीरशरणात् विमुक्त इत्यपायापगमातिशयः२, पुनरपि कीदृशं वीरं?—'सुरवरशीर्षविभूषणचरणरजसं' सुरवराणां—शक्रेशानादीनामिन्द्राणां शीर्षाणि—मस्तकानि तेषां विभूषणम्—अलंकरणशीलं चरणयोः—पादयोः रजो—रेणुर्यस्य स तथा तम्, प्रायो मर्त्यानाममर्त्याः पूज्याः,तेषामपि शक्रेशानादयो देवेन्द्राः, तेषामपि भगवान् पूज्य इति पूज्यपूज्यपूज्यत्वात् पूजातिशयः३, पुनरपि कीदृशं?—'चारुवयणवय'ति चारुवचनव्रज, चारुः—प्रधानः स्यात्पदलाञ्छितत्वेनान्यतीर्थिकैरबाध्यो वचनानां—घटपटस्तम्भकुम्भाम्भोरुहादिपदार्थाभिधायकवाक्यादीनां व्रजः—समूहो यस्य स तथा तम्, यद्वा चातुर्गतिकजनानामपि प्राणिनां दुःखोपनिपातोपतप्तानां शरणभूतत्वेन चारु—प्रधान वदने—मुखे वचो—वचनं यस्य स तथा तम्, दुःखापगमहेतुत्वेन जिनवरवचनादन्यत् किमपि शरणं नास्ति, यदुक्तं वाचकमुख्यश्रीउमास्वातिवाचकैः—"जन्मजरामरणभयैरभिद्रुते व्याधिवेदनाग्रस्ते लोके। जिनवरवचनादन्यत्र नास्ति शरणं क्वचिल्लोके ॥ १ ॥" इति वचनातिशयः ४।

इति मूलातिशयचतुष्टयविशिष्टो भगवान् भवत्येव विघ्नोपघातक इति भावमङ्गलभूतं भगवन्तं श्रीवीरजिनं नमस्कृत्येति गाथार्थः ॥ १ ॥ अथ गाथाषट्केन ग्रन्थकर्तुरुपकर्तॄन् भावमंगलभूतान् त्रीन् सूरीन् नमस्कर्तुमाद्यसूरिस्तुतये गाथायुग्ममाह—

जेणं दूसमसमए कुपक्खबहुले अ भारहे वासे। अच्छिन्नंपि अ तित्थं पभाविअं पुण्णचरिआए ॥२॥

चंदुव्व सोमलेसो सयलविहारेण लोअणाणंदो ॥ आणंदविमलसूरी संविग्गो सव्वविक्खाओ ॥३॥

येन भगवता भारते वर्षे अस्मिन् भरतक्षेत्रे 'कुपक्षबहुले' वक्ष्यमाणलक्षणैर्दिगम्बरादिपाशपर्यन्तैः कुमतैर्व्याप्ते 'दुष्षमासमये' पञ्चमारकलक्षणे 'अच्छिन्नमपि' सततप्रवृत्तिमदपि तीर्थं 'चाउवण्णो संघो तित्थ'मिति वचनात् श्रमणादिसमुदायलक्षणं 'पुण्णचर्यया' पवित्रक्रियया 'प्रभावितं' प्रौढिमानं प्रापितम्, अयं भावः—यावज्जीवं षष्ठाष्टमतपोविधानेन तीर्थकृदाज्ञाप्रवर्त्तनपुरस्सरं सदुपदेशदानेनानेकेभ्यपुत्रशतप्रव्राजनेन च 'अहो एते जैनप्रवचने महानुभावाः विद्यमानामपि धनादिसम्पदं परित्यज्य दुष्करक्रियाकारिण' इत्यादिरूपेण सकलजनप्रशंसां प्रापितमिति। अत्राच्छिन्नमिति तीर्थविशेषणेन वक्ष्यमाणानां दिगम्बरादिपाशपर्यन्तानां स्वमतिविकल्पितोपदेशेनात्मसात्कृतस्य श्रमणाभासादिसमुदायस्य तीर्थत्वं निराकृतं, नहि कुपाक्षिकसमुदायस्तीर्थं भवितुमर्हति, तस्य स्वस्वमताकर्षकशिवभूत्यादिमूलकत्वेन तीर्थकरादेव सततप्रवृत्तिमत्त्वाभावात्, तच्चैवं—दिगम्बरस्तावत् श्रीवीरनिर्वाणात् नवोत्तरषट्शत (६०९) वर्षातिक्रमे शिवभूत्यपरनाम्नः सहस्रमल्लतः संजातः, यदागमः—"छव्वाससयाइं नवुत्तराइं तइआ सिद्धिं गयस्स वीरस्स। तो बोडिआण दिट्ठी रहवीरपुरे समुप्पन्ना" १॥ इति, अत्र दिगम्बरस्तावदित्थं प्रष्टव्यः—भो दिगंबर! त्वदुत्पत्तेः पूर्वं श्रीवीरजिनप्रवर्तितं तीर्थमासीन्न वा?, आसीच्चेत् तर्हि बोटिकानुत्पत्तावनन्यगत्या श्वेताम्बर एव तीर्थं सम्पन्नम्, अथ नासीत्

तर्हि व्युच्छिन्नं तीर्थं शिवभूतिना प्रादुष्कृतमिति श्रोतुमप्यकल्प्यं, न हि व्युच्छिन्नं तीर्थं तीर्थकरमन्तरेण केनापि प्रादुष्कर्तुं शक्यते, तीर्थकराधिक्यप्रसङ्गादित्युभयथाऽपि दिगम्बरस्तीर्थबाह्यः संपन्न', यत्तु दिगम्बरात् श्वेताम्बरोत्पत्तिरिति त्वदीयं वचः, तच्च 'सुव्वरा य समणा निरंबरा मज्झ पाउरणाइं । होंतु अ मे परथाई अरिहो मि कसायकलुसमई ॥१॥ " इत्यादिश्रीभद्रबाहुस्वामिप्रभृतिप्रणीतनिर्युक्त्यागमभावितस्तेन देवानांप्रिय ! प्रलापकल्पमेवेति दिगम्बरसमुदायो नाच्छिन्नं तीर्थमिति बोध्यम् १॥ एवं पौर्णिमीयकोऽपि श्रीवीरात् १६२९ वर्षे विक्रमात् ११५९ वर्षे श्रीमुनिचन्द्रसूरिगुरुभ्रातृमात्सर्याच्चतुर्दशीयपक्षनिर्गतात् चन्द्रप्रभाचार्यात् प्रवृत्तो न तीर्थं, युक्तिस्तु प्राक्केवाप्यवसारणीया, चतुर्दशीयपक्षान्निर्गतत्वं च तदीयैरप्युक्तं, यदुक्तम्–दुर्वादिद्विरदाङ्कुशः समभवच्छ्रीसिरोभञ्जने, श्रीचन्द्रप्रभसूरिराट् स भगवान् प्राचीकटत् पूर्णिमाम् । तस्माज्जैनवचोऽमृतमुष्णमधुः श्रीधर्मघोषाह्वयः, श्रीमद्भद्रेश्वरसूरिरस्त्वचकलत् शाखा द्वितीया प्रभाम् ॥२॥" इति पौर्णिमीयपक्षसंस्कृतक्षेत्रसमासवृत्तिप्रशस्तौ । तथा श्रीममतीर्थकृच्चरित्रप्रशस्तावपि तदीयैरेव चन्द्रप्रभाचार्यादेव पूर्णिमाप्रकटनं भणितमिति, तथा–'वडगच्छाओ पुण्णिम पुण्णिमओ सड्ढपुण्णिमचलया । दोहिवि आगमनामा कुचयरा खरयरो आओ ॥१॥' तथा सङ्घेन निवार्यमाणोऽपि चन्द्रप्रभाचार्यः पूर्णिमापाक्षिकं प्रकाशितवानित्यस्मत्पूर्ववचः । किञ्च–यथा गुरुभ्रातृश्रीमुनिचन्द्रसूरिमात्सर्यात् ११५८ वर्षे चतुर्दशीयपक्षाच्चन्द्रप्रभाचार्यात् पूर्णिमापक्षः समुत्पन्न इति प्रसिद्धिः न तथा अमुकहेतुनाऽमुकाचार्यतोऽमुकसंवत्सरे पूर्णिमापक्षाच्चतुर्दशीपक्ष इति प्रसिद्धिः कर्णकोटरपथमवतीर्णा, अत एवाच्छिन्ने तीर्थे विद्यमाने तन्निर्गतः पूर्णिमापक्षस्तीर्थबाह्य एव २॥ तथा खरतरोत्पत्तिरपि विक्रमसंवत् १२०४ वर्षे श्री(श्री)जिनवल्लभोत्थापकजिनदत्ताचार्यादेव जाता, तत्रापि स एव तावदित्थं प्रष्टव्यः–भोः खरतरेत्यादिमभोपरपथोगमो

युक्तिः प्राग्वदवगन्तव्या, ये त्वाञ्चलिकसार्द्धपौर्णिमीयकागमिकनामानः कुपाक्षिकास्ते पौर्णमीयकमूलका एवेति निजनिजनाम्ना
विश्रामे वक्ष्यामः, तेन पौर्णिमीयके तीर्थबाह्ये सिद्धे ते तु सुतरां तीर्थबाह्या एवेति 'पद् कुपाक्षिका जीर्णा' इति जनप्रसिद्धिः ६॥
अथाधुनिकानां चतुर्णां मध्ये लुम्पाकमतं वि० १५०८ वर्षे लुम्पकलेखकात् प्ररूपणामधिकृत्य प्रवृत्तं, तत्प्ररूपणा च जिन-
प्रतिमानिषेधमूलिका, तन्मते वेषधराः पुनः वि० सं० १५३३ वर्षे सीरोहीप्रत्यासन्नारघट्टकवास्तव्यप्राग्वाटज्ञातीयभाणा-
ख्यादेव प्रवृत्ताः,एतदुत्पत्तिर्विस्तरतस्तु एतन्नाम्नाऽष्टमविश्रामे वक्ष्यते, अयं च प्रवचनबाह्यतयाऽऽबालगोपालाङ्गनानामपि प्रतीतः७॥
एवं कडुकबीजापाशचन्द्राः स्वस्वनाम्ना मताकर्षका अपि बोध्याः,उपलक्षणादन्येऽप्युपधानाद्यपलापिनस्तथाभूता एवावगन्तव्याः१०॥
एते दशाप्यतीर्थकरमूलकाः न तीर्थं, किंतु मरुमरीचिकायां जलाभास इव तीर्थाभासास्तीर्थबाह्या इति ॥

ननु तपागणोऽपि वि० १२८५ वर्षे श्रीजगच्चन्द्रसूरितो जातः,सोऽप्युक्तयुक्त्या कथं तीर्थमिति चेद् उच्यते—न हि श्रीजगच्चन्द्रसू-
रिर्वटगच्छात् कुतश्चिन्निमित्ताद् विपरीतप्ररूपणया चन्द्रप्रभाचार्यादिवत् पृथग्भूतः,किन्तु प्रमादवशेन क्रियाशिथिलं साधुसमुदायं
परित्यज्य निजगुर्वाज्ञया श्रीआणन्दविमलसूरिवत् श्रीसुधर्मस्वामिनोऽच्छिन्नपरिपाट्या समागतां दशविधचक्रवालसामाचारीक्रि-
यां कुर्वाणं यावज्जीवमाचामाम्लतपोऽभिग्रहेण कृशाङ्गीभूतं श्रीजगच्चन्द्रसूरिं दृष्ट्वा राज्ञा तपा इत्याख्या वक्तव्येत्युक्तं,ततःप्रभृति
वटगणस्यैव तपा इत्याख्या प्रससार, न ह्येतावता प्रागुक्तयुक्तिरत्रावतरति,अन्यथा श्रीसुस्थितसुप्रतिबुद्धाभ्यामेव कौटिकनाम्ना
गणः, ततोऽपि श्रीचन्द्रसूरेश्चन्द्रगच्छसंज्ञा,ततोऽपि चन्द्रगच्छीयेन श्रीउद्योतनसूरिणा श्रीसर्वदेवसूरेर्वटे सूरिपदकरणात् श्रीस-
र्वदेवसूरितो वटगच्छ इतिरूढिरित्येवं कौटिकादिगणा अप्यच्छिन्नं तीर्थं न स्युः, तस्मान्नामान्तरप्रादुर्भावेऽप्याचारप्ररूपणयोरच्छि-

मताऽभ्युपगन्तव्या, लोकेऽपि साधुश्रेष्ठिमन्त्रिवद्धनस्यादिनामान्तरसंभवेऽपि न कुलाचारादे॰ किंचिद् बाधकं, प्ररूपणाचारयोर्या
च्छिन्नता नात्र गच्छे केनापि पराकर्तुं शक्या, अतस्तपागणसंज्ञक एव साम्प्रादिसमुदायरूपतीर्थं संप्रति भरतक्षेत्रे, नान्य इति बोध्यम् ॥
एतेन वयमागममनुसृत्य प्रवर्त्तामहे, किमस्माकं परम्परया प्रयोजनमित्यादिकाचार्पिन्यक्कारोऽपि परास्ता, परम्परानङ्गीकारात्, पर
म्परामूलकत्वादागमस्य, यदागमः—"तिविहे आगमे पं॰, तं॰—अत्तागमे अणंतरागमे परंपरागमे"त्ति श्रीअनुयोग॰, तत्रात्मागमा
नन्तरागमौ गणधरशिष्यान्तावधी व्युच्छिन्नौ, तृतीयस्तु परम्परागम, स च परम्परामन्तरेणासंभवीति कथं परम्परानङ्गीकारे
आगमानुसारेण प्रवृत्तिर्भवतोऽपि?, न हि घटानङ्गीकारे तद्गतरूपादीनामपि स्वीकारः सम्यक् स्यात्, किंच—स्वमतिविकल्पनयाऽ
प्यागमानुसारेण प्रवर्तने तीर्थकामता त्वभिप्रायैव, नन्वागमानुसारेण प्रवर्त्तितस्य स्वसमुदायस्यैव तीर्थत्वाभ्युपगमात् कुतस्तीर्थता
पतेदिति चेत् नैवं, आगममूलकमपि तीर्थं स्यादित्येवं क्वाप्यागमेऽनुपलम्भात् महाशयाभाषितत्वात्, अथ भावः—"तित्थं चाउवण्णो, संघो
सो पढमए समोसरणे। उप्पन्नो अ जिणाणं वीरजिणिंदस्स बीयंमि॥१॥"त्ति प्रवचनवचनप्रामाण्यात्, तीर्थं हि समुत्पन्नकेवलज्ञानात्
तीर्थकरादेव स्यात्, न पुनः कुतश्चिदप्यपरस्माद्धेतोः, तेन वयमागमानुसारेण प्रवर्त्तामहे इति वचनं पिता मे कुमारब्रह्मचारीति
वचनवद्वक्तव्यम्, आगमविरुद्धप्रवृत्तिमतोऽप्यात्मन आगमानुसारेण प्रवृत्तेर्भणनात्, न हि क्वाप्यागमे श्रुतव्यवहारिणा व्यव
स्थापितोऽपि साध्व्यादिसमुदायस्तीर्थं स्यादित्यादि दृष्टं श्रुतं वा, तेन तीर्थं तीर्थकरमूलकमेव, न पुनरागममूलकमितरपुरुषमूलकं वा
स्यादित्यत्र बहु वक्तव्यं, किंचिच्चैतेन तित्थं चाउवण्णो इत्यादिद्वयगाथात् आरभ्य तीर्थस्वरूपनिरूपणावसरे किंचित्केवलपुस्तकम्
उत्सूत्राकन्दप्ररूपणावसरे च वक्ष्यते इति बोध्यम्॥ ननु स्वभावेन पृच्छामः—तीर्थाभ्युपगतमपि किंचिदागमासंगतं दृश्यते तत्र

किं कर्त्तव्यमितिचेद् उच्यते, न हि आगमासंगतमभ्युपगच्छत् तीर्थं स्यात्, न वा तीर्थमागमासंगतमभ्युपगच्छेत्, शीतोष्णस्पर्शयोरि-
वागमासंगततीर्थाभ्युपगमयोरन्योऽन्यं विरोधस्यानादिसिद्धत्वात्, तस्मात् सदोपदृशामेव मरुमरीचिकाजलज्ञानदृष्टान्तेन तीर्थाभ्युप-
गतमागमासंगतमिवाभाति, न पुनर्निर्दोषदृशामपि, अत एव तीर्थाभ्युपगतां पर्युषणाचतुर्थीं परित्यज्य पञ्चमीं स्वीकुर्वाणस्तीर्थबाह्य
इत्यञ्चलमतनिराकरणविश्रामे वक्ष्यामः॥ ननु कालकसूरेः पूर्वं तीर्थकृद्गणधरादिमहापुरुषैः पञ्चम्यामेव पर्युषणा कृतेति बुद्धिम-
वलम्ब्य तथा कुर्वतामस्माकं कथं तीर्थबाह्यतेति चेद्, उच्यते—चतुर्थीप्रवर्तककालकसूरेरारभ्याद्य यावत् चतुर्थ्याश्रितं तीर्थमच्छिन्नमिति
तवापि प्रतीतम्, एवंविधे तीर्थे विद्यमाने तत्प्रतिकूलचारी पञ्चम्याश्रितस्त्वं स्वत एव तीर्थबाह्यः संपन्नो, यो यतः प्रतिकूलाचारवर्ती
स ततो बाह्य इति तु गोपालस्यापि प्रतीतम्॥ किंच—श्रीऋषभजिनपरिणयनकालात् पूर्वभाविनां यौगलिकमनुष्याणामपरिणीत-
भ्रातृभगिनीसंबंधोऽपि दम्पतिभावाश्रितो यथा निर्दोषतया व्यवह्रियमाणोऽनिन्द्यो भवन्नपीदानीन्तनमनुष्याणां सदोषो यावदपाङ्क्ते-
यहेतुश्च स्यात् तथाऽत्रापि बोध्यं, तेन सार्वजनीनप्रवृत्तौ सत्यां तद्विपरीतप्राचीनप्रवृत्तेः सत्पुरुषाचरिताया अपीदानीमनादरणीयत्व-
मेवेति बोध्यम्, चतुर्थीपर्युषणायाश्च सार्वजनीनत्वं प्रवचने प्रतीतमेव, नहि तदानीं पञ्चमीपर्युषणामाश्रितः कोऽपि पक्ष आसीद्,
अत एव चतुर्थीपर्युषणाश्रितस्य यतो बाह्यत्वं भण्यते तत्पक्षस्यैवाभावादनन्यगत्याऽपि चतुर्थ्याश्रितमेव तीर्थं, ततो बाह्यत्वं च
पञ्चमीपर्युषणाश्रितस्य समुदायस्य स्फुटमेव, तस्य बाह्यत्वव्यपदेशहेतोश्चतुर्थीतीर्थस्य विद्यमानत्वादिति सिद्धम्—'अच्छिन्नंपि अ
तित्थं पभाविअं पुण्णचरिआए'त्ति॥ तथा 'चंदुव'त्ति स श्रीआणंदविमलसूरिर्युगप्रवरो—युगप्रधानः संविग्नः संविग्नत्वादि-
गुणैरद्वितीयोऽत एव सर्वविख्यातः—सर्वत्र ख्यातिभाक्, किंलक्षणः?, चन्द्रवत् सोमलेश्यः, सकलविहारेण लोचनानन्दः, सकले

इत्यर्थः,तेनैव कारणेन श्रीहीरविजयगुरुरिति नामा, हीति दुःखहेतुर्विरहिजनस्य शोककारणं इः–कामो यस्मात् स हीः–चंद्रो रविः–सूर्यस्तयोर्जयो यस्य सः, तयोर्जेतेत्यर्थः,स चासौ गुरुश्चेति,श्रिया युक्तस्तथा श्रीहीरविजयगुरुः एवंविधं गुरुं प्रणम्य, किंलक्षणं ?–प्रणयस्य भावः–उत्पत्तिर्यस्मात् स प्रणयभावो भावनिर्देशात् स्नेहहेतुत्वमापन्नं–प्राप्तं, समस्तलोकवल्लभमित्यर्थः, किं कुर्वन्तं ?–स्नेहलोचनाभ्यां–सस्नेहनयनाभ्यां लोकान् पश्यन्तं, करुणैकरसार्द्रलोचनावलोकनशीलमिति गाथायुग्मार्थः ॥५–६॥ अथ श्रोतृजनप्रवृत्तिनिमित्तमभिधेयं प्रयोजनं च दर्शयन् गाथामाह—

**वीरजिणजम्मसङ्कन्तभासरासिप्पभावओ पउरा। पवयणपूआऽसहणा कुपक्खिआ ते म्मि दंसेमि ॥७॥**

तान् कुपाक्षिकानहं दर्शयामि–वाग्गोचरीकुर्वे इत्यन्वयः। 'अस्मदो म्मि अम्मि अम्हि हं अहं अहयं सिने'ति प्राकृतसूत्रेण म्मि, अहमित्यर्थः, यत्तदोर्नित्याभिसम्बन्धात् तान् कान् ?, ये 'कुपाक्षिकाः' पक्षः–अङ्गीकारः प्रयोजनं येषां ते पाक्षिकाः उत्सूत्रभाषणादिना कुत्सितास्तीर्थनिन्द्याः ते च ते पाक्षिकाश्च कुपाक्षिका इति व्युत्पत्त्या उत्सूत्रभाषिणोऽभिनिवेशमिथ्यात्विन इत्यर्थः, वर्त्तन्त इति वार्त्तमानिका क्रिया अध्याहार्या, तेन निस्सत्ताकीभूतसंताना जमाल्यादयो न वक्ष्यन्ते, किन्तु विद्यमानसन्तानाः दिगम्बरादिपाशपर्यन्ता वक्ष्यन्त इत्यर्थः। अथोत्सूत्रभाषिणां स्वरूपभाषणाय विशेषणमाह–'**पवयण**'त्ति, किंलक्षणास्ते ?–'प्रवचनपूजाऽसहनाः' प्रवचनस्य पूजाया–अभ्युदयस्यासहना–द्विषः, यतः शिवभूतिचन्द्रप्रभाचार्यादयोऽनन्तानुबन्धिकषायोदयिणः प्रवचनपूजाभिभूतय एव नवीनमतप्रवर्त्तका अभूवन्, कथमन्यथा स्वयंसिद्धं सिद्धिसौधसौख्यास्वादकल्पं तीर्थं परित्यज्य नवीनमतकल्पनाक्लेशेनात्मानं अकदर्थयिष्यन् ?। ते च कुपाक्षिकाः कियन्तः?–'**पउर**'त्ति प्रचुराः–प्रचुरसंख्याकाः, प्रचुरत्वे हेतुमाह–'**वीरजिण**'त्ति

साधुविहारक्षेत्रेऽस्खलितप्रतिबन्धविहारेण लोचनानन्दकारि, सकललोकानामिति गम्यम्, चन्द्रोऽपि सह कलाभिर्वर्तत इति सकला-संपूर्णो, मासनिर्देशात् सकलत्वेन विहारो-गगनमण्डले चङ्क्रमण तेन जननेत्राणामानन्दकारीति चन्द्रसाम्य ॥ यावज्जीव विकृत्या-दिपरिहारमन्तरेण संविग्नत्वादिगुणैरद्वितीयपरम्परितशिरोमणिर्पं० श्रीजीतविजयगणिवर्य प्रमुदस्य मे प्रव्रज्याप्रतिपत्तिहेतुकः सूरिः शतो मल्लनिमित्त स्वशिष्योपरीकृत इति गाथायुग्मार्थः ॥२३॥ अथ ज्ञानसंपत्त्युसेन परमोपकारिणं सूरिं स्तुतिगोचरीकुर्वन्नाह-

तस्स पए पुण अहिणवसूरो दूरट्ठिआण पहुतावो । सिरिविजयदाणसूरी नामेणवि कुमयतमग्घणो ॥४॥

तस्य-श्रीआणन्दविमलसूरेः पदे-पट्टे श्रीविजयदानसूरिः,स च किलक्षणः?-'अभिनवसूरिः' दृश्यमानसूर्यापेक्षया विल-क्षणः सूर्यः, अथ वैलक्षण्यमेव स्पष्टयति-'दूरट्ठिय'त्ति दूरस्थितानां बहु-भूयानसङ्ख्याप'-प्रतापप्रभावः परामर्शो यस्मात् स तथा, अन्यस्तु प्रभूतवनानामुदयास्तसमय एव दूरो भवति, तदानीं च न बहुतापः, किन्त्वल्पताप इति वैलक्षण्य, तथा 'नाम्नाऽपि' नाम मात्रेणापि 'कुमततमोमथन' कुमतान्धकारनाशकृत्, अन्यस्तु सूर्यः स्वोदयेनैव तमो नाशयति, न पुनर्नाममात्रेणापीति वैलक्ष-ण्यमितिगाथार्थः ॥४॥ अथ यन्नामवाप्येद प्रकरणमारभ्यते तं सूरिं नमस्कर्तुं गाथायुग्ममाह—

तस्सवि पयमि विहिणा पगीकाऊण सोमसूरे अ । घडिओ उभयसहावो तेण सिरिहीरविजयगुरू ॥५॥

संपइ तं जुगपवरं पणमित्ता पणयमायमायण्ण । सवमि अ जिअलोए सोमत्त नेहनयणेहिं ॥६॥

तस्यापि-श्रीविजयदानसूरेरपि 'पयमि'पदे श्रीहीरविजयसूरिः विधिना-विधात्रा घटितो-निष्पादितः, किं कृत्वा?-सोमसू-रौ-चन्द्रभास्करावेकीकृत्योभयस्वभावो घटितः, अयं भाव-चन्द्रसूर्योपमितयो प्रागुक्तयोर्गुणान् समुदायीकृत्योभयस्वभावो घटित

इत्यर्थः,तेनैव कारणेन श्रीहीरविजयगुरुरिति नामा, हीति दुःखहेतुर्विरहिजनस्य शोककारणं इः—कामो यस्मात् स हीः—चंद्रो रविः—
सूर्यस्तयोर्जयो यस्य सः, तयोर्जेतेत्यर्थः,स चासौ गुरुश्चेति,श्रिया युक्तस्तथा श्रीहीरविजयगुरुः एवंविधं गुरुं प्रणम्य, किंलक्षणं?—
प्रणयस्य भावः—उत्पत्तिर्यस्मात् स प्रणयभावो भावनिर्देशात् स्नेहहेतुत्वमापन्नं—प्राप्तं, समस्तलोकवल्लभमित्यर्थः, किं कुर्वन्तं?—स्ने-
हलोचनाभ्यां—सस्नेहनयनाभ्यां लोकान् पश्यन्तं, करुणैकरसार्द्रलोचनावलोकनशीलमिति गाथायुग्मार्थः ॥५–६॥ अथ श्रोतृजन-
प्रवृत्तिनिमित्तमभिधेयं प्रयोजनं च दर्शयन् गाथामाह—

**वीरजिणजम्मसङ्कन्तभासरासिप्पभावओ पउरा। पवयणपूआऽसहणा कुपक्खिआ ते म्मि दंसेमि ॥७॥**

तान् कुपाक्षिकानहं दर्शयामि—वाग्गोचरीकुर्वे इत्यन्वयः। 'अस्मदो म्मि अम्मि अम्हि हं अहं अहयं सिने'ति प्राकृतसूत्रेण म्मि, अहमित्यर्थः, यत्तदोर्नित्याभिसम्बन्धात् तान् कान्?, ये 'कुपाक्षिकाः' पक्षः—अङ्गीकारः प्रयोजनं येषां ते पाक्षिकाः उत्सूत्रभाषणादिना कुत्सितास्तीर्थनिन्द्याः ते च ते पाक्षिकाश्च कुपाक्षिका इति व्युत्पत्त्या उत्सूत्रभाषिणोऽभिनिवेशमिथ्यात्विन इत्यर्थः, वर्त्तन्त इति वार्त्तमानिका क्रिया अध्याहार्या, तेन निस्सत्ताकीभूतसंताना जमाल्यादयो न वक्ष्यन्ते, किन्तु विद्यमानसन्तानाः दिगम्बरादि-पाशपर्यन्ता वक्ष्यन्त इत्यर्थः। अथोत्सूत्रभाषिणां स्वरूपभाषणाय विशेषणमाह—'**पवयण**'त्ति, किंलक्षणास्ते?—'प्रवचनपूजाऽसहनाः' प्रवचनस्य पूजाया—अभ्युदयस्यासहना—द्विषः, यतः **शिवभूतिचन्द्रप्रभाचार्यादयो**ऽनन्तानुबन्धिकषायोदयिणः प्रवचनपूजा-भिभूतय एव नवीनमतप्रवर्त्तका अभूवन्, कथमन्यथा स्वयंसिद्धं सिद्धिसौधसौख्यास्वादकल्पं तीर्थं परित्यज्य नवीनमतकल्पना-क्लेशेनात्मानं अकदर्थयिष्यन्?। ते च कुपाक्षिकाः कियन्तः?—'**पउर**'त्ति प्रचुराः—प्रचुरसंख्याकाः, प्रचुरत्वे हेतुमाह—'**वीरजिण**'त्ति

वीरजिनजन्मसम्बन्धेन तदुपलक्षितं नक्षत्रमुत्तरफाल्गुनीरूपं प्राप्त, तत्र सङ्क्रान्तो—मेषादिराशिचारानुक्रमेणागतो भस्मराशिः—भस्मराशिनामा क्रूरग्रहः, एकस्मिन् नक्षत्रे द्विसहस्रवर्षस्थितिमान्, तस्य प्रभावो—महिमा तस्मात्, श्रीमहावीरस्य निर्वाणावसरे जन्मनक्षत्रे संक्रान्तभस्मराशिमाहात्म्यात् कुपाक्षिकबाहुल्यमित्यर्थः, ननु द्विसहस्रवर्षान्ते श्रीवीरजन्मनक्षत्रात् व्यतिक्रान्ते भस्मराशौ कुपाक्षिकप्राचुर्यं भविष्यति उत नेति चेदुच्यते, प्रायो न भविष्यतीति संभाव्यते, यतस्तदानीं निर्ग्रन्थानां निर्ग्रन्थीनां च पूजाऽभिवृद्धिरुक्ता, यदागमः—"जं रयणिं च णं समणे भगवं महावीरे जाव सव्वदुक्खप्पहीणे तं रयणिं च णं खुद्दाए भासरासी नाम महग्गहे दोवाससहस्सट्ठिई समणस्स भगवओ महावीरस्स जम्मनक्खत्तं संकंते तप्पभिइं च णं समणाणं निग्गंथाणं निग्गंथीण य नो उदिओदिए पूआसक्कारे पवत्तई, जया णं से खुद्दाए जाव जम्मनक्खत्ताउ वइक्कते भविस्सइ तया णं समणाणं निग्गंथाणं निग्गंथीण य उदिओदिए पूआसक्कारे भविस्सइ" त्ति श्रीपर्युषणाकल्पे, तादृशी च पूजा कुनृपकुपाक्षिकेषु बलवत्सु सत्सु न संभवति, तेषां च प्रवचनपूजाया असहिष्णुत्वात्, तत्र कुनृपास्तावत् कल्किराजपुत्रस्य दत्तनाम्नो राज्ञ आरभ्य पञ्चमारकपर्यन्तमसंभविनः, यदुक्तं श्रीहेमाचार्यपादैः—"पितुः पापफलं घोरं, शक्रशिक्षां च संस्मरन्। दत्तः करिष्यति महीमर्हच्चैत्यविभूषिताम् ॥१॥ पञ्चमारकपर्यन्तं, यावदेषमतः परम्। प्रवृत्तिर्जिनधर्मस्य, भविष्यति निरन्तरम् ॥२॥" इति श्रीमहावीरचरित्रे श्रीशत्रुञ्जयमाहात्म्ये च, एवं सर्वदेशविसंवादिनो दिगम्बरात्खरतरकादयः कुपाक्षिका अपि दत्तनाम्नो राज्ञ आरभ्य पञ्चमारकपर्यन्तमसंभविनोऽवगन्तव्याः, द्वयोरपि प्रवचनपीडापूजाभिभवकारित्वेन तौल्यात्, ननु कुनृपा बलवन्तः प्रवचनपूजाया असहिष्णवः सन्तः पराभविष्णवः संभवन्ति, तत्कृतो तेषां सामर्थ्यात्, कुपाक्षिकास्तु वराकाः प्रायः प्रवचनभीता एव वर्तमानाः कथं प्रवचनपूजां पराभवन्तीति चेत् सत्यं, यद्यपि स्वातन्त्र्यात् किञ्चित्कर्तुमसमर्था एव,

तथाप्येकारिमैत्रीवशात् कुनृपादिप्रेरणाद्वारा तथा संभवन्त्येव, यद्वा यथा कुनृपेभ्यः संभावितशङ्कया प्रवचनप्रभावनाप्रभविष्णवोऽपि
कालानुभावाच्चेतोदौर्बल्याच्च न प्रवचनं प्रभावयितुं प्रभवन्ति तथा कुपाक्षिकेभ्योऽपि भूयःसंपर्कवशाद्दाक्षिण्यात् तत्कृतोपहासनिन्दा-
दिशङ्कया च प्रवचनप्रभावनाप्रभवोऽप्यप्रभवः स्युः, तथा कालानुभावात्। ननु कुपाक्षिकबाहुल्ये सत्यपीदानींतनपूजावत्तदानीमपि
पूजासत्कारो भवतु किं बाधकमितिचेदुच्यते, यो हीदानींतनः पूजात्कारः स च भाविनः स्फीतपूजासत्कारस्य बीजभूतो,न पुनः स्वयं
स्फीतः, यतः कुपाक्षिकबाहुल्ये सत्यास्तामन्यो जनः सुमार्गपतितोऽपि भूयान् जनः कुपक्षसुपक्षयोस्तुल्यधिया प्रवर्त्तमानः पूजासत्कारं
कुर्वन्नपि वस्तुगत्या द्वेषिमुद्रां नातिक्रामति, यदाहुः श्रीहेमसूरयः–"सुनिश्चितं मत्सरिणो जनस्य, न नाथ! मुद्रामतिशेरते ते।
माध्यस्थ्यमास्थाय परीक्षका ये, मणौ च काचे च समानुबन्धाः ॥१॥ इत्ययगम्यमध्यात्मेति द्वात्रिंशिकायाम्, अतस्तत्कृतः पूजासत्का-
रोऽप्यकिञ्चित्कर एव, यस्त्वनन्यमनाः सुपक्षमेव कक्षीकृत्य प्रवर्त्तते स चाल्पीयान् स्वयमप्रभुश्चेति तत्कृतपूजासत्कारोऽपि न स्फीत
इति बोध्यं, तस्मादुदितोदितपूजासिद्ध्यर्थं द्वयोरप्यनयोर्विशेष्यविशेषणभावेऽभ्युपगते न किंचिद्बाधकं, वैपरीत्ये तु बाधकमिति
स्वयमेवालोच्यम्॥ अत्राभिधेयं तावत् कुपाक्षिकान् दर्शयामीति साक्षादेवोक्तं, प्रयोजनं च द्वेधा–परमपरं च, तत्र परं प्रयोजनं मोक्षः,
अपरं च मोक्षाङ्गं कुपाक्षिकपरिज्ञानं,यतो 'ज्ञाता हि शत्रवो न पराभवंती'तिकृत्वा कुपाक्षिका अपि सम्यक् परिज्ञाय परित्यक्ताः सन्तो न
मोक्षमार्गविघ्नकरा भवन्ति,इत्यतः कुपाक्षिकपरिज्ञानं मोक्षाङ्गम्, अज्ञातास्त्वनादृता अप्यानुकूल्यादिभापणादिना सुगतिहन्तारः संसार-
हेतवश्च भवन्ति, यदागमः–"जे भिक्खू वा २ परपासंडाणं पसंसं करेज्जा जेआवि निण्हगाणं पसंसं करेज्जा जे आवि निण्हगाणं आय-
यणं पविसिज्जा जे आवि निण्हगाणं गंथं सत्थं पयं अक्खरं वा परूवेज्जा जे णं निण्हगाणं संतिए कायकिलेसाइए तवेइ वा संजमे-

इ वा गाणेइ वा विण्णावेइ वा सुए वा पंडिवेइ वा अभिमुहमुद्धपरिसामज्झगए सिलाहेज्जा सेऽवि अ णं परमाहम्मिएसु उववज्जेज्जा, जहा सुमती"ति श्रीमहानिशीथचतुर्थाध्ययने,तथा "जे जिणवयणुत्तिण्णं वयणं भासंति जे उ मण्णंति । सम्मद्दिट्ठीणं तद्दंसणंपि संसारवुड्ढिकरं ॥१॥ इति भाष्यकारवचः । किंच-संसारस्य मूलं साधुरूपेणाप्युत्सूत्रभाषिण एव,यदागमः-"सच्चेआ दिट्ठीओ जमव्वरांमरणग मत्तमईस । मूलं संसारस्स उ हवंति निग्गंथरूवेण॥१॥ति श्रीआवश्यकनिर्युक्तौ, तिष्ठतु दूरे कुपाक्षिकपक्षानुरक्तो जनः, यः कश्चित्तथाविधशुभकर्मपरिणत्या श्रीसुधर्मस्वामिनोऽविच्छिन्नप्रवृत्तिमानयं तपागण एव तीर्थं, पौर्णिमीयकादयो हि निपमांदुत्सूत्रभाषिणो महामिथ्यादृष्टय इत्येवरूपेण निश्चयनयानुसारेण सम्यग्दृष्टिरपि व्यवहारतोऽहं पौर्णिमीयकः खरतर आञ्चलिको वेत्यादिरूपेणात्मानं स्थापयन् कुपाक्षिकमार्गपतितः सोऽपि 'ववहारनउच्छेए तित्थुच्छेओ हवइऽवस्सं' मित्यादिप्रवचनस्तुकायागमवचनात् सन्मार्गपतितानां सम्यग्दृशां द्रष्टुमप्यकल्पः, यदागमः-"उम्मग्गदेसणाए चरणं नासंति जिणवरिंदाणं । वावण्णदंसणा खलु नहु लब्भा तारिसा दट्ठुं ॥१॥" इति श्रीवन्दनकनिर्युक्तौ, एतच्चूर्णिर्यथा-जे पुण जहिच्छालंभ गहाय अण्णेसिं सयाण संसारं नित्थरितुकामाणं उम्मग्गं देसयंति तस्स गाहा, उम्मग्गदेसणाए चरण-अणुट्ठाणं नासंति जिणवरिंदाणं, सम्मत्तं अप्पणो अण्णेसिं च, ते वावण्णदंसणा जया, ते चरणं न सद्दहंति, मोक्खो अ विणए करणे अ भणिओ, अण्णेसिं च मिच्छत्तुप्पायणेण, एवमादिएहिं कारणेहिं वावण्णदंसणा, खलुसद्दा जइवि केई निच्छयविहीए असावण्णदंसणा तहवि वावण्णदंसणा इव दट्ठव्वा, ते अ दट्ठुंपि न लब्भा, किमंग पुण संवासो संभुंजणा सुयणो वा, इयरो अविसइत्थो, सो अ ववहिअसंभवो दरिसिओ चेव, न लब्भा नाम न कप्पंति, णायवियणं ॥ इति श्रीआव० चूर्णौ पत्र४३४ संख्ये पुस्तके२१८ पत्रे,तथा "पयमक्खरंपि इक्कंपि जो न रोएइ सुत्तनिद्दिट्ठं । सेसं रोअंतोऽविहु

मिच्छद्दिट्ठी जमालिव्व॥१॥" इति श्रीविशेषावश्यकवृ०३४८ पत्रे,तथा "आयरिअपरंपरए आगयं जो उ छेअबुद्धीए । कोवेइ छेअ-वाई जमालिनासं स नासीही ॥१॥ इति श्रीसूत्रकृदङ्गनिर्युक्तौ,एवमन्यत्रापि जिनोक्तस्य पदमात्रस्याप्यपलापिनोऽप्यभिनिविष्टा बोध्याः,आसतां जिनोक्तापलापिनः,तीर्थाभ्युपगतस्याप्यपलपने निह्नवमार्गानुपातित्वं स्याद् , यदुक्तं *दशमे उज्जिंतसेलसिहरेति गाथाप्रामाण्ये–"उज्जयंत"त्ति तात्स्थ्यात् तद्व्यपदेश इतिन्यायादुज्जयन्तपर्वतालंकरणस्य श्रीनेमिनाथस्य स्तुतिर्विधीयते, चशब्दो विशेषकः, तेनायं जिनस्तुतित्वाद्दर्शनविशोधकत्वात् कर्म्मक्षयादिकारकत्वात् संवेगादिकारकत्वादशठसमाचरितत्वात् बहुश्रुताचरितत्वात् जीतव्यवहारानुपातित्वाद्भाष्यकारादिभिराख्यातत्वादावश्यकचूर्णिकृतोऽप्यनुमतत्वात् अनिषिद्धत्वात् पारम्पर्यागतस्यार्थस्य निषेद्धुमशक्यत्वात् (निषेधे च) निह्नवमार्गानुपातित्वादाज्ञाप्रकारत्वाच्चेत्यतो युक्त एवायमधिकारः, एवमग्रेतनोऽपीति" श्रीधर्मघोषसूरिकृतायां संघाचारवृत्तौ,अत्र तीर्थाभ्युपगतस्य दशमाधिकारस्याप्यनङ्गीकारे निह्नवमार्गानुपातित्वं प्रदर्शितं,न चैवं सत्यप्याधुनिकाचार्यैं राकारक्तादयोऽभिनिविष्टा नोक्ता इति शङ्कनीयं,श्राद्धविधिविनिश्चयादौ अभिनिवेशमिथ्यात्वित्वेन भणनात् , तथाहि–हुं नंदेंद्रियरुद्र११५९ कालजनितः पक्षोऽस्ति राकाङ्कितो, वेदाभ्रारुण१२०४ काल औष्ट्रिकभवो विश्वार्क१२१३ कालेऽञ्चलः। षद्त्र्यर्केषु१२३६ च सार्द्धपौर्णिम इति व्योमेन्द्रियार्के१२५० पुनः,काले त्रिस्तुतिकः कलौ जिनमते जाताः स्वकीयाग्रहात् ॥१॥ इति श्राद्धविधिविनिश्चये, अत्र स्वकीयाग्रहादित्यनेनाभिनिवेशमिथ्यात्वममीषामुक्तं, तथा आंचलिकोऽभिनिवेशग्रस्तोऽत्रान्यत्र च बहुषु स्थानेषु निगदितः, तथा श्रीमुनिसुन्दरसूरयोऽप्याहुः–"आज्ञाभङ्गान्तरायोत्थानन्तसंसारनिर्भयैः। सामाचार्योऽपि पाश्चात्यैः, प्रायः, स्वैरं प्रवर्त्तिताः ॥१॥ उपधानप्रतिक्रान्तिजिनार्चादिनिषेधतः । न्यूनिता दुष्पमादोषात्प्रमत्तजनताप्रियाः॥२॥ यत्तत्प्रासुकमिष्टाम्बु-

प्रभृत्यादिगुणसंपदा। श्रीस्पन्देऽप्यगमेष्वग्रामरमालक्षणोज्झिता ॥२॥" इत्यत्रोपधानतिषेधको राकारत्कादिः प्रतीत एव, आदानां प्रतिक्रान्तिनिषेधकः स्तनिका स्त्रीणां जिनपूजानिषेधक' स्वरतरमस्येते कीदृशा' ?–'आज्ञाभंगे'त्यादि, तत्राज्ञाभङ्गस्तीर्थकृदुक्तप्रतिषे धेन अंतरायस्य तदन्यपुण्यप्रकृतीनां साम्यामुत्य'–प्रादुर्भूतो योऽनन्तसंसारस्तस्माभिर्भया–भयरहिताः, इत्यनेन विशेषणेनाभिनिवेश मिथ्यात्वमात्र एवोक्ताः इति गुर्वावल्यां, तथा श्रीकुलमण्डनसूरिभिरपि विचारामृतसंग्रहे "पूर्णिमापाक्षिकप्ररूपकचन्द्रप्रभाचार्य संघेन निवारितोऽप्यभिनिवेशमत्यजन् सङ्घात्' कृत" इत्यादि, तथा होइ मंगलपाठिनोऽपि श्रीधर्मघोषसूरिभिरभिनिवेशिन उक्ताः, तथा श्रीमलयगिरिणाऽप्यावश्यकवृत्तिं कुर्वता वृत्तिमध्ये सा गाथा हवइ इति पाठत एव लिखिता", एवमिमयार्थिना तत्त्वरुचि- निरीक्षणीयेति। परमार्थं ज्ञात्वा कदाग्रहाभिनिवेशादिविलसितकल्पितमागमानुक्तं होइत्ति मुक्त्वा साक्षात्परम्परागतसूत्रान्तर्गत श्री वज्रस्वामिप्रभृतिदशपूर्वधरादिबहुश्रुतसंविग्नसुविहितव्याख्यानसमादृतं हवइत्ति पाठतोऽष्टषष्टिवर्णप्रमाणं परिपूर्णं नवकारसूत्रमध्ये गम्यं, तथैवं–"नमो अरिहंताणं नमो सिद्धाणं नमो आयरिआणं नमो उवज्झायाणं नमो लोए सव्वसाहूणं। एसो पंचनमुक्कारो, सव्वपा- वप्पणासणो। मंगलाणं च सव्वेसिं, पढमं हवइ मंगलं ॥१॥ अस्य च व्याख्यानं यदेव श्रीवज्रस्वाम्यादिभिः छेदग्रन्थादिमध्ये लिखितं तदेव भक्तिबहुमानातिशयतो विशेषतश्च भव्यसत्त्वोपकारकमिति दर्श्यते तथाही"त्यादि श्रीधर्मघोषसूरिकृतायां सङ्घाचारवृत्तौ पत्रे २४९ संख्ये पुस्तके १२१ पत्रे, अत्र होइ मंगलमिति पठतां कदाग्रहाभिनिवेशविलासः कथितः, ननु 'हवइ मंगल'मिति पाठः श्रीवज्र स्वामिना कृतः, पूर्वं तु 'होइ मंगल'मित्येष पाठ आसीदिति चेन्मैवं, हवइ मंगलमिति पाठस्यानादिसिद्धत्वात्, नहि क्वाप्यागमे श्रीवज्रस्वामिना पाठः परावर्त्तित इति दृष्टः श्रुतो वा, किन्तु श्रीवज्रस्वामिना सूत्रमध्ये लिखितः, यदुक्तं–"एवं त तं पञ्चमंगलमहा-

सुअक्खंधस्स वक्खाणं तं महया पबंधेणं अणंतगमपज्जवेहिं सुत्तस्स य पिहभूआहिं निज्जुत्तिभासचुण्णीहिं जहेव अणंतणाणदंसणधरेहिं तित्थयरेहिं वक्खाणियं तहेव समासओ वक्खाणिज्जंतं आसी, अहऽण्णया कालपरिहाणिदोसेण ताओ निज्जुत्तिभासचुण्णीओ वुच्छिन्नाओ, इओ अ वच्चंतेण कालसमएणं महड्ढिपत्ते पयाणुसारी वयरसामी दुवालसंगसुअहरे समुप्पण्णो, तेणेसो पंचमंगलमहासुअक्खंधस्स उद्धारो मूलसुत्तस्स मज्झे लिहिओ, मूलसुत्तं पुण सुत्तत्ताए गणहरेहिं अत्थत्ताए अरिहंतेहिं भगवंतेहिं धम्मतित्थगरेहिं तिलोअमहिएहिं वीरजिणिंदेहिं पण्णविअंति वुद्धसंपयाउत्ति" ॥ श्रीमहानिशीथसूत्रेऽध्ययने ४। किंच–श्रीवज्रस्वामिकृतत्वेन हेतुनाऽनङ्गीकारवचनमपि महामोहहेतुः, सर्वेषामपि गर्हणीयस्य दोषद्वयस्य सद्भावात्, तथाहि–वज्रस्वाम्यकृतेऽपि तत्कृतमिति महापुरुषस्य कलङ्कदानमुभयलोकविरुद्धमित्येको दोषः, "जो कण्णाइ धणेण य निमंतिओ जुव्वणंमि गिहिवइणा। नयरंमि कुसुमनामे तं वयररिसिं नमंसामि ॥१॥" इत्यादिस्तुतिवचनैः श्रीभद्रबाहुस्वामिप्रभृतिमहापुरुषैः स्तुतो युगप्रधानोऽप्यागमव्यवहारी श्रीवज्रस्वामी सर्वजनप्रतीतः, आगमव्यवहारिणां चाज्ञा न तीर्थकृदाज्ञातो भिन्ना, अतस्तदाज्ञोल्लङ्घने तीर्थकृतामप्याज्ञाया उल्लंघनमावश्यकमिति द्वितीयोऽपि महादोषः, तस्मादास्तां तत्कृतनिश्चये, तत्कृतसंशयेऽपि 'हवइ मंगल'मित्येवं भणनीयं स्यात्, कर्ता च श्रीवज्रस्वामी अभ्युपगंतृ च श्रीमहावीरप्रवर्त्तितं तीर्थम्, एवं च सति यः कश्चिद्वराको नाभ्युपगच्छेत् तस्य महति संकटे पतनं, तथाहि–श्रीवज्रस्वामी तदाज्ञा चेत्युभयमप्याराध्यत्वेन तीर्थस्याभिमतमित्यविवादेन युष्माकमपि सिद्धं, तथा यदि 'हवइ मंगल'मिति श्रीवज्रस्वामिकृतमिति यौष्माकीणोऽभिप्रायः स्यात् तथापि श्रीवज्रस्वामिकृतत्वेन तीर्थाभिमतत्वेन च तत्तथैवांगीकर्त्तव्यम्, अन्यथा तीर्थबाह्यता शक्रशतैरपि पराकर्त्तुमशक्या, तस्मात् यथा श्रीकालकसूरिप्रवर्त्तिता पर्युषणाचतुर्थी तीर्थाभिमता तीर्थबहिर्भ-

तीर्थोद्भिर्भवनमीतेरुभयत्रापि तौल्यात्॥ किंच चतुर्थी तावत्
धनमीत्या अभ्युपगता,तद्रीत्यैव 'हवइ मंगल'मित्यप्यभ्युपगन्तव्य, 'हवइ मंगल'मिति युगप्रधानेनागमव्यवहारिणा श्रीवज्रस्वा-
मिना कृतमित्यस्रवेय पुस्तका विकल्प्य नाङ्गीकृतमिति कः श्रीकालकसूरिणा प्रवर्तितेति असद्भिश्रुतेति निश्चयेऽपि साऽभ्युपगता 'हवइ मंगल'मिति युगप्रधानेनागमव्यवहारिणा श्रीवज्रस्वा-
श्रीकालकसूरिणा प्रवर्तितेति असद्भिश्रुतेति निश्चयेऽपि साऽभ्युपगता मवतां गुरुभिर्लिखित इत्यनुस्यूतेण दर्शयन्तु, तदीय दर्शन तु
मिना कृतमित्यस्रवेय पुस्तका विकल्प्य नाङ्गीकृतमिति कः कीदृशो मवतां गुरुभिर्लिखित इत्यनुस्यूतेण दर्शयन्तु, तदीय दर्शन तु
वयमपि समीहामहे। एतेन श्रीपार्श्वनाथसन्तानीयस्य केशिकुमारस्यापत्यानामस्माकं परम्परायातो 'होइ मगल'मिति पाठः श्रीवी-
रतीर्थादपि पुरातनः केनापि परावर्तुं न शक्यते इति मुधाभिमानोऽपि निरस्त', “जे अज्जत्ताए समणा निग्गंथा विहरंति ते
सोहम्मावच्चिज्ज"त्ति प्रवचनवचनात्, केशिकुमारापत्यत्वपूत्करणे गौरवाभावात्, श्रीकेशिकुमारेणापि श्रीगौतमपार्श्वे पञ्चमहाव्रतोपा
दाने श्रीवीरतीर्थमेव प्रतिपन्न,तीर्थं च श्रीवीरेण श्रीसुधर्मस्वामिन एवानुज्ञातं,तस्मात् तीर्थोत्सर्पणेच्छवः श्रीसुधर्मस्वाम्यपत्यत्वमेव
नमेवात्मनः स्थापयन्तु, श्रीपार्श्वनाथतीर्थिकभवने प्रयोजनाभावात्। किंच-केशिकुमारापत्यानि यदि संविग्नाः स्थविरा अभविष्यन्
तर्हि श्रीमद्भद्रबाहुस्वाम्यादय' स्थविरावल्यादौ तन्नामान्यप्युदकीर्तयिष्यन्, तानि च लेशतोऽपि नोत्कीर्तितानि, तस्मात्श्रीकेशि
कुमारसंतानव्यतिकरः श्रीगौतमवत्सलात इति संभाव्यते,ननु यदुक्त 'हवइ मगल'मित्यनङ्गीकारे तीर्थबाधता स्यात् तदयुक्तं, केशि
कुमारापत्यानां 'होइ मगलिकास्तीर्थ'मित्युच्यमाने साम्प्रतीनागमस्यैवामान्यता स्यादिति महाबाधक,तत्कथमिति चेच्छृणुत, तीर्थ-
द्वयानुष्ठेयसंभवो भवतामपि सम्मतः, तथा च यदि होइमांगलिकास्तीर्थं तर्हि हवइमांगलिकानामतीर्थत्वापत्त्या श्रीवज्रस्वाम्यादी-
नाममान्यता स्यात्, तदमान्यतायां च श्रीमद्भद्रबाहुस्वामिप्रभृतिप्रणीतानां श्रीआवश्यकनिर्युक्त्यादीनामप्यमान्यता स्फुटैव,यतस्तत्र
'त वयररिसिं नमसामि'त्ति [illegible] श्रीवज्रस्वामी महानुभावतया वर्णितः सर्वसम्मतः, तस्मादनन्यगत्या होइमांगलिकानां

तीर्थवाह्यताभणने न किञ्चिद्बाधकं पश्यामः। क्वाप्यागमे केशिकुमारसंतानीयोऽमुकनामा स्थविरो होइमांगलिकत्वेन प्रतीतो महानु-
भाव इत्याद्यदर्शनात्, ननु-न हि वयं हवइमांगलिकानामतीर्थत्वं वदामः, किंतु वीरतीर्थं तदायत्तमेव जानीमः,परं यदा श्रीकेशि-
कुमारेण श्रीगौतमसमीपे पञ्चमहाव्रतोच्चारनियतश्वेतवर्णाद्युपेतनेपथ्यमार्गोऽङ्गीकृतस्तदानीं प्रतिक्रमणादिसामाचार्या होइमंगल-
मितिपाठे च सन्नपि किंचिद्भेदः श्रीगौतमस्याप्यभिमतः, अतो न केशिकुमारेण परित्यक्तः, स चास्माकं परम्परागत इति धीर-
स्माकमिति चेत्, तदयुक्तं, नमस्कारादिषडावश्यकपाठस्य प्रतिक्रमणाद्यनुष्ठानस्य च चतुर्विंशतेरपि तीर्थकृतां तीर्थेषु भेदाभावाद्,
अन्यथा श्रीऋषभतीर्थिकानां कोटिशः श्रावकादीनां श्रीअजिततीर्थोत्पत्तिसमये नमस्कारादिषडावश्यकस्य पाठस्यान्यथासंभवे प्राची-
नपाठविस्मारणपुरस्सरं पुनरन्यथा पाठनं युज्यते,एवं यावत् श्रीवीरतीर्थोत्पत्तिसमयेऽपि, तथा चाच्छिन्नश्रावककुलमर्यादा विलुप्येत,
तस्मात् कुलक्रमायातनियतानुष्ठानातिरिक्ते कथंचिद्भेदोऽपि न दोषाय, तत्रापि नमस्कारपाठस्य नित्यत्वात् तीर्थवर्त्तिना केनापि
पराकर्त्तुमशक्यत्वात्, किंच-पाठपरावृत्तिरपि किंचिन्निमित्तमासाद्यैव ज्यायसी, यथा चतुर्विंशतिस्तवाध्ययने प्रत्युत्सर्पिण्यादौ
केवलज्ञान्यादिऋषभादिपद्मनाभादिरूपेण तीर्थकृन्नाम्नां पार्थक्यं पाठपरावृत्तिकल्पनायां कारणं, साऽपि कल्पना न तीर्थान्तरमधि-
कृत्यापि, तत्रोक्तकारणाभावाद्, एवमङ्गादिष्वपि यत्र क्वापि तथाविधकारणं तत्रैव पाठपरावृत्तिः कल्पनीया,न पुनः सामायिकादि-
द्वादशाङ्गीपर्यन्तस्य सकलस्यापि श्रुतस्य प्रतितीर्थं पाठपरावृत्तिरेव कल्पनीया, निमित्ताभावे नैमित्तिकस्याप्यभावात्, वस्तुतस्तु
गणधराणां ज्ञानावरणीयादिकर्मक्षयोपशमवैचित्र्यमेव पाठरचनायां हेतुः, तदपि पाठभेदमधिकृत्य नियतानुष्ठानोपयोगिश्रुताति-
रिक्तस्थले बोध्यम्, अन्यथा द्वयोर्बहूनां वा गणधराणां परस्परमावश्यकादिमण्डलीव्यवहारो न स्यात्, श्रावकाणामपि साधु-

समीपे प्रतिक्रमणावसरे व्यामोहस्यानुपरतिरेव स्यादित्येव पर्यालोचनया यथा श्रीधर्मघोषसूरिभिः सङ्घाचारवृत्तौ कथित तथैव पथ्यमिति श्रद्धाविपर्यीकार्यमिति ॥ नन्वत्र प्रकरणे देशविसंवादिनो राकारकादयो दिगम्बरव्यतिरिक्ता नवैवोद्दिष्टास्तथा दशमो होड्मांगलिकोऽपि कथ नोद्दिष्ट इति चेदुच्यते, पूर्वाचार्यैर्यथा राकौष्ट्रिकादयोऽनभिमतत्वेन तिरस्कृता न तथा होड्मांगलिका अपि, तत्र किं निदानमिति चेदुच्यते, राकौष्ट्रिकादयो हि तीर्थभयरहितास्तीर्थानभिमतप्ररूपणया तीर्थस्य प्रातिकूल्यमाचरन्तस्तीर्थकदेशं साध्वादिसमुदाय विप्रतार्य प्रथमत एव तीर्थाद्बहिर्भूतास्तीर्थादूरवर्तिनो द्रष्टुमप्यकल्प्यतया तीर्थेन परिहृताः, होड्मांगलिकास्तु न तथा, किंतु तीर्थभयशङ्का मन्यमाना विद्यादिचमत्कारेणान्यतीर्थिकभक्तान् क्षत्रियादीन् प्रतिबोध्य श्रावकीकृतवन्तः, अत एव तेषां टिप्पनकभावका इति रूढि, ते च तीर्थप्रत्यासन्नाः प्रायो न तीर्थप्रतिकूलप्रवृत्तिमन्त , संप्रत्यपि तथैवोपलभ्यमानाः प्रायो दृश्यन्ते, अत एव तत्कृतानां ग्रन्थानामपि प्रायोऽङ्गीकृतिरेव तीर्थस्य, यतस्ते तीर्थभीत्या प्रायो नोत्सूत्ररचनारसिका इति हेतुना सर्वथा तीर्थेन न तिरस्कृता इति संभाव्यते,तत्त्वं तु बहुश्रुतगम्यम् ,अतोऽत्र प्रकरणे तदनुद्देशोऽपि नो दोषावहो,राकास्यस्तु जातिदोषेणैव स्वस्रोतश्चेरारभ्य स्वस्वजीवावसायिनः तीर्थे प्रति प्रतिपक्षभूता निरन्तरं दुराशया एवेतिकृत्वा तेषामेवोद्देशः फलवान् , ये तु तत्कल्पा संप्रत्यधिका अपि केचिद्दृश्यन्ते तेऽकिञ्चित्कराः उत्सूत्रमधिकृत्योद्दिष्टतुल्या अत्रैवान्तर्भावनीयाः, तथा च सति सिद्धं—कुपाक्षिकपरिज्ञानमपरं प्रयोजनं, तच्च परप्रयोजनहेतुरितिकृत्वा,परं प्रयोजनं मोक्ष इति स्वत एव सिद्ध्यति, सत्यपि फलकारणे कार्यस्य स्वत एव भवनादिति द्वेधापि प्रयोजनमभिधेयकथनेन सूचितमिति बोध्यमितिगाथार्थः ॥७॥ अथ दशानामप्युद्दिष्टानां कुपाक्षिकाणां यथाभवनक्रमेण नामान्याह—

**खवणय[१] पुण्णिम[२] खरयर[३] पल्लविआ[४] सड्ढपुण्णिमा[५]ऽऽगमिआ[६]।**
**पडिमा[७] मुणिअरि[८] वीजा[९], पासो पुण[१०] संपई दसमो ॥ ८ ॥**

क्षपणको–दिगम्बरः[१] पूर्णिमाशब्देन पाक्षिकत्वेन पूर्णिमामभ्युपगच्छन् पौर्णिमीयकः[२] 'खरहर'त्ति खरतर औष्ट्रिकापरनामा,[३] 'पल्लवो' वस्त्रांचलः तमेव सामायिकादौ श्रावकाणामुपदिशतीति पाल्लविकः-आञ्चलिकः[४] सार्द्धपौर्णिमीयकः–पौर्णिमीयकभेदविशेषः[५] आगमिकः-त्रिस्तुतिकः[६] 'पडिमामुणिअरि'त्ति प्रतिमा च मुनिश्च प्रतिमामुनी, जिनविम्बसाधू इत्यर्थः, तयोररिः-वैरी, 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इति प्रतिमारिर्लुम्पाकः,[७] मुन्यरिः–कडुकः[८], यद्यपि मुनिवैरिणो दिगम्बरादयो दशापि भवन्ति, तथापि साध्वाभासं स्वकीयं स्वकीयं गुरुं साधुत्वेन प्रतिपन्नाः, कडुकस्तु नास्मद्दृक्पथमायान्ति मुनय इति नाममात्रेणापि तत्स्वीकारशून्य इति कडुक एव मुनिवैरित्वेन प्रसिद्धः, एवं प्रतिमावैरित्वमपि लुम्पाकमते रूढम्, अन्यथा सर्वेऽपि कुपाक्षिकाः प्रतिमावैरिण एव सन्ति, तत्कथमिति चेच्छृणुत, तीर्थकृत्प्रवर्तितं तीर्थं परित्यज्य तीर्थाभिभूतये नवीनमार्गाविष्करणेन तीर्थकृद्वैरित्वे सिद्धे कथं तत्प्रतिमामंतृ सिद्ध्यतीति स्वयमेवालोच्यं, वंध्यो–लुंपाकमतान्निर्गतो वीजाख्यनामा वेषधरस्तस्मात्प्रवृत्तस्य मतस्य लोके वीजामतीति रूढिः[९], 'पाशः' पाशचन्द्रो नागपुरीयतपागणान्निर्गत्य प्ररूपणया प्रायो लुम्पाकमतसदृशः[१०], स च पुनः सम्प्रति वर्तमानो दशमोऽवगन्तव्यः, संप्रतिशब्देनैतत्प्रकरणकाले दशानामपि विद्यमानत्वमसूचि, अत एव सूत्रोक्तानामपि जमाल्यादीनामग्रहणेऽपि न व्यामोहः, संप्रति तदीयसंतानस्य निस्सत्ताकीभूतत्वेनाकिञ्चित्करत्वादिति गाथार्थः॥८॥ अथ दशानामपि तीर्थात् पार्थक्ये स्वरूपमाह—

**पढमिल्लुआण उदए तित्थाओ केऽवि निग्गया केऽवि। तत्तोवि केऽवि मुच्छिमकप्पा पावाण पावयरा ॥९॥**

प्रथमानाम्—अनन्तानुबन्धिनां क्रोधादीनामुदये, तीर्थप्रद्वेषिणामुत्सूत्रभाषिणामनन्तानुबन्धिन एव क्रोधादय उदिता भवन्ति, अन्यथा चातीर्थं तीर्थतया तीर्थं चातीर्थतया वितथभणनासंभवात्, 'तीर्थात्' श्रीसुधर्मस्वामिनोऽच्छिन्नसाध्वादिसम्प्रदायात् केचित् दिगम्बरपौर्णिमीयकौष्ट्रिकपाशचन्द्रनामानश्चत्वारोऽनन्तरं तीर्थाद्विनिर्गताः, केचित्—स्तनिकसार्धपौर्णिमीयकागमिकलक्षणास्त्रयः 'तत्तो वि' तस्माद्विनिर्गतात् पौर्णिमीयकात् निर्गताः, केऽपि 'मूर्च्छिमकल्पाः' संमूर्च्छिमकल्पाः, संमूर्च्छिमद्वीन्द्रियादिजन्तुकल्पाः, न तीर्थात् न वा तीर्थनिर्गतात्, किन्तु स्वत एवाकस्मिकनिमित्तका इत्यर्थः, ते के?—लुम्पाककटुकबन्ध्यनामानस्त्रयः, तत्र लुम्पाककटुकौ गृहस्थौ, बन्ध्यस्तु लुम्पाकात् निर्गतः, एते दशापि 'पापानां' पापात्मनो मिथ्यादृशां पापतराः—महामिथ्यात्विन इत्यर्थः, इति गाथार्थः॥९॥ अथ तीर्थस्वरूपसत्ति तीर्थे सिद्ध एव तीर्थबाह्याः कुपाक्षिका इति वक्तुं शक्यते, अतः प्रथमं तीर्थस्वरूपमाह

तित्थं चाउवण्णो संघो तप्पढमओ अ तित्थयरो। तेण न वुच्छिन्नं तित्थयराणण्णओ होइ ॥१०॥

तीर्थं तावच्चतुर्वर्णः सङ्घः—साधुसाध्वीश्रावकश्राविकालक्षणाश्चत्वारो वर्णा यत्रैवंविधः संघस्तीर्थं भण्यते, प्रथमगणधरो वा, यदुक्तं—"तीर्थं नद्यादेरिव संसारस्य तरणे सुखावतारो मार्गः, तच्च द्वेधा—द्रव्यतीर्थं भावतीर्थं च, द्रव्यतीर्थं तीर्थकृतां जन्मदीक्षाज्ञाननिर्वाणस्थानं, यदाह—"जम्म दिक्खा णाण तित्थयराण महाणुभावाण। जत्थ य किर निव्वाण आगाढं दंसण होइ॥१॥" भावतीर्थं तु चतुर्वर्णः श्रमणसंघः प्रथमगणधरो वा, यदाह "तित्थं भंते! तित्थं? तित्थयरे तित्थं? गोयमा! अरिहा ताव नियमा तित्थंकरे, तित्थं पुण चाउवण्णो समणसंघो, पढमगणहरे वा" इति योगशास्त्रद्वितीयप्रकाशवृत्तौ, 'तत्करः' तदुपदेशस्यापकस्तीर्थकरो, यतस्तीर्थं करोतीति तीर्थकर इति शब्दव्युत्पत्त्यैव सिद्धस्तीर्थकरोऽर्हन्नेव, तेन कारणेन व्युच्छिन्नं तीर्थं तीर्थकरानन्यतो भवेत्, नान्योऽन्यस्तीर्थकराद-

न्यस्तीर्थकरानन्यः—तीर्थकर एव ततो भवेत्, व्युच्छिन्नं तीर्थं तीर्थकर एव व्यवस्थापयति, नान्य इति गाथार्थः ॥१०॥ अथ तीर्थकरोऽपि पूर्वभवायातो यः कश्चिज्जीवो भवति उत जीवविशेषो वेत्याह—

**तित्थयरो पुण तित्थंकरआणाराहणेण पुव्वभवे। अज्जिअजिणनामजुओ उप्पज्जइ सोहिजाइसरो ॥११॥**

तीर्थकरः पुनस्तीर्थकराज्ञाराधनेन पूर्वभवेऽर्जितजिननामकर्म्मयुत उत्पद्यते, प्राग्भवे तीर्थकराराधनजन्यतीर्थकरनामसत्ताकस्तीर्थकरत्वेनोत्पद्यते, सोऽपि सावधिजातिस्मरः—जातिस्मरणावधिज्ञानयुतः, उक्तं च—"जाईसरो अ भयवं अप्परिवडिएहिं तीहि णाणेहिं"ति श्रीआ० नि०, एवंविधजीवविशेषस्तीर्थकरतयोत्पद्यते, न पुनर्यः कश्चिदितिगाथार्थः॥११॥ अथोक्तस्वरूपोऽपि जीवः किंपर्यायमापन्नस्तीर्थं प्रवर्त्तयतीत्याह—

**सोऽवि अ केवलणाणी देवत्तं पाविऊण पुण्णजसो। पढमाए देसणाए ठविज्ज तित्थंति तित्थयरो ॥१२॥**

सोऽपि—पूर्वभवार्जिततीर्थकरनामसत्ताकोऽपि च पुनः केवलज्ञानी सन्—उत्पन्नकेवलज्ञानः सन् देवत्वं प्राप्य—स्वयं देवस्वरूपयुक्तो, न पुनर्गुरुत्वं, तच्च परायत्तं, यतो गुरुत्वं गणधराणां देवायत्तं जंबूस्वाम्यादीनां च गुर्वायत्तमित्युभयथापि परायत्तमेव गुरुत्वम्, अत एव तीर्थकृतो हि चरणप्रतिपत्त्यवसरे 'करेमि सामाइअ'मित्याद्युच्चरन्ति, शेषास्तु करेमि भंते! सामाइअमित्यादि, सोऽपि किंलक्षणः? —पुण्ययशाः, त्रैलोक्यं व्याप्याद्वितीययशस्वीत्यर्थः, प्रथमायां देशनायां—केवलज्ञानोत्पत्त्यनन्तरं या प्रथमा देशना तस्यामेव तीर्थं स्थापयति, यत्तु श्रीमहावीरस्य द्वितीयदेशनायां तीर्थव्यवस्थितिस्तदाश्चर्यमिति न दोष इति, अमुना प्रकारेण तीर्थकरः स्यादिति गाथार्थः ॥१२॥ अथ यदि केवलज्ञानी तर्हि जातिस्मरणादिना किं प्रयोजनमित्याह—

सुचा धम्मुवएसं नासुच्चाकेवलीवि दिज्जत्ति । धम्मुवएससावण जिणस्सवि अणाइपरिवाडी ॥११॥

श्रुत्वेति पदैकदेशे पदसमुदायोपचारात् श्रुत्वाकेवली–तीर्थकरादिसमीपे धर्मं श्रुत्वा यः केवली जातः स श्रुत्वाकेवली भण्यते, स धर्मोपदेशं दद्यात्, यदागमः–"सुचाण भंते! इत्यादि यावत् से णं भंते! केवली केवलिपण्णत्तं धम्मं आघवेज्ज वा पण्णवेज्ज वा परूवेज्ज वा?, हंता, गो०, पव्वावेज्ज वा मुंडावेज्ज वा?, तस्स णं भंते! सीसावि पव्वावेज्ज वा मुंडावेज्ज वा?, हंता गो०! पव्वावेज्ज वा मुंडावेज्ज वा, से णं भंते! सिज्झइ इत्यादि" श्री भगवती श० ९ उ० ३१ 'नाश्रुत्वाकेवल्यपि' धर्ममश्रुत्वा यः केवली जातः स धर्मोपदेशं न ददातीत्यर्थः, यदागमः–"असुच्चा णं भंते! इत्यादि यावत् केवलवरणाणदंसणे समुप्पज्जति, से णं भंते! केवलिपण्णत्तं धम्ममाघवेज्ज वा पण्णवेज्ज वा परूवेज्ज वा?, गो०! णो इणट्ठे समट्ठे, नन्नत्थ एगणाएण वा एगवागरणेण वा, से णं पव्वावेज्ज वा मुंडावेज्ज वा?, णो इणट्ठे समट्ठे, उवएसं पुण करेज्जा, से णं भंते! सिज्झति जाव अंतं करेति" भगवती श० ९–उ० ३१, एतद्वृत्त्येकदेशो यथा 'आघवेज्ज'त्ति आग्राहयेत् शिष्यान्, अर्थापयेद् वा–प्रतिपादनतः पूजां प्रापयेत्, 'पण्णवेज्ज'त्ति प्रज्ञापयेत् भेदभणनतो बोधयेद्वा 'परूवेज्ज'त्ति उपपत्तिकथनतः, 'नन्नत्थ एगनाएण व'त्ति नेति योऽयं निषेधः सोऽन्यत्रैकज्ञातात्, एकमुदाहरणं वर्जयित्वेत्यर्थः, तथाविधकल्पत्वादस्येति, 'एगवागरणेण व'त्ति एकव्याकरणादेकोत्तरादित्यर्थः, 'पव्वावेज्ज'त्ति प्रव्राजयेत् रजोहरणादिद्रव्यलिंगदानतः 'मुंडावेज्ज'त्ति मुण्डयेत् शिरोलोचनतः, 'उवएसं पुण करेज्ज'त्ति अमुष्य पार्श्वे प्रव्रजेत्यादि कमुपदेशं कुर्यादित्यादि भ० श०९ उ०–३१। एवं केवल्यपि अश्रुतधर्मो धर्मं न कथयति, अतः श्रमणश्रावकयोः परम्परानिमित्तं जातिस्मरणाद्युपयोगः, जातिस्मरणेन च प्राग्भवे श्रुतधर्मस्य स्मरणात् भाषणमपि भव्यजनेभ्यो युक्तमेवेति दर्शयति–'धम्मुवएस'त्ति

धर्मोपदेशे जिनस्यापि-तीर्थकृतोऽपि श्रवणमनादिपरिपाटी, जिनस्यापि धर्मश्रवणमनादिप्रवाहतः समागतम्, अत एवान्येभ्यो भव्येभ्यः श्रावयति जिनेन्द्र इति, एतेन 'सयंसंबुद्धाण'मितिवचनात् श्रुतधर्मस्यानादितोऽच्छिन्नपरम्परागतत्वमेव स्यादित्येवं नियमो नास्तीति पराशंकाऽपि व्युदस्ता, एतत्पदमिह जन्मनि परोपदेशनिरपेक्षत्वसूचकं, प्राग्भवसंबन्धिनोऽच्छिन्नस्य श्रुतस्य विद्यमानत्वात्, तथा प्रथमबोधिकालेऽपि तीर्थकृज्जीवाः गुरूपदेशेन धर्मप्राप्तिभाजोऽपि सुखबोधिभाक्त्वात् स्वयंसंबुद्धा इत्युपचर्यन्ते, यथा पच्यते ओदनः स्वयमेवेति वचनं, न पुनः प्राग्जन्मन्यपि सर्वथा परोपदेशाभाव एव, नयसारजन्मनि श्रीमहावीरजीवस्य गुरूपदेशेनैव बोधिलाभात्, यदागमः—"दाणन्न पंथणयणं अणुकंप गुरूण कहण सम्मत्तं। सोहम्मे उववण्णो पलिआउ सुरो महिड्ढीउ ॥१॥ त्ति श्रीआव० नि०। ननु श्रुतधर्मस्यानादिमत्त्वमवधिज्ञानेनापि संभवति किं जातिस्मरणेनेति चेत्, उच्यते, नरकादुत्पन्नस्य तीर्थकृतस्तथाविधा-वधिज्ञानानुभूतपदार्थाभावाद् अवधिज्ञानापेक्षया जातिसरणस्य भूयःकालगोचरत्वाच्च जातिसरणेनैव श्रुतधर्मस्याच्छिन्नपरम्परेति। अत एवागमोऽपि 'जाईसरो अ भवयं अप्परिवडिएहिं तीहिं णाणेहि'न्ति प्रागुक्तः, एतच्चूर्णौ च जातिसरणमेव हेतुः, तस्य बाल्यावस्थानुभूतवस्तुपरिज्ञानवज्जन्मान्तरानुभूतवस्तुपरिज्ञानरूपत्वाद्, यदुक्तम्—"बालकताणुस्सरणं तिवक्खओवसमभावजुत्तस्स। जह कस्सइ वुड्ढस्सवि जाइस्सरणं तहा किं न? ॥१॥ इति धर्मसंग्र० तद्वृत्तिर्यथा—कस्यापि पुंसो वृद्धस्यापि तीव्रक्षयोपशमयुक्तस्य बाल्यावस्थायामपि यत्कृतं तस्यानुस्मरणं भवति, तथा जातिस्मरणमपि, यदुक्तम्—इह लोके जातिस्मरणमपि अनेकभवम्—अनेक-भवविषयकमपि केषांचिदसुमतामवितथार्थं दृश्यते इति धर्मसं० ४६ पत्रे इति गाथार्थः ॥१२॥ अथ धर्मस्य श्रवणश्रावणयोरना-द्यच्छिन्नपरम्परां दृष्टान्तैः समर्थयन् गाथामाह—

गब्भे जाया गब्भं धरिज्ज इत्थीवि नित्थिरूवधरी। जणणीखीरं जीए पीअं पाई य सा चेव ॥१४॥

स्त्री अपि गर्भे जाता गर्भं धरेत्, या स्त्री गर्भोत्पन्ना स्यात् सैव गर्भं धरति, पुनःशब्दोऽध्याहार्यः, तथा न पुनः स्त्रीवेषधरी-स्त्र्याकारभाववती स्त्रीनेपथ्यधरी या गर्भं धरेत्, यतः आकारवती असंज्ञितिरप्यपि स्यात्, असंज्ञितिरमी केचिज्जीवाः स्त्रीचिह्नयुक्ताः केचित्पुम्चिह्नयुक्ताः केचिन्नपुंसकयुक्ताश्च स्युः, न च सा स्त्री गर्भं धरेत्, तस्याः स्वयं गर्भानुत्पन्नत्वात्, तथा स्त्रीनेपथ्यधरी नटरूपा काष्ठादिमयी पुत्तलिका वा स्यात् साऽपि न गर्भधरी, तस्या अपि अगर्भजत्वात्, तथा यया जननीक्षीरं-मातृदुग्धं पीतं सा धेव-सैव पाययेत् स्वापत्यं प्रति निजक्षीरं दुग्धं, तत्रान्वये मानुषी व्यतिरेके पक्षिणी दृष्टान्तो ज्ञेयः, दार्ष्टान्तिकयोजना स्वैव-येन गुरोः समीपे धर्मः श्रुतः स एवान्यान् श्रावयति, नान्य इतिगाथार्थः ॥१४॥ अथ दृष्टान्तेन कार्यकारणभावमपि दर्शयति—

कज्जं कारणनियमं न समत्था हत्थिणीवि गोपसवा। समतित्थं तित्थयरा नन्नाउ महाणुभावावि ॥१५॥

कार्यं कारणनियतं, प्रतिकार्यनियतान्येव कारणानि, न पुनर्यत्किंचित्कारणजातं यत्किंचिदनियतं कार्यं जनयति, जगदव्यवस्था विप्लवस्य प्रसङ्ग प्रसक्तेः, तत्र दृष्टान्तमाह-न समर्था-न पटवी हस्तिनी-करिणी गोप्रसवा, गां-धेनुं प्रसूते इति गोप्रसवा-धेनुजननी स्यात्, तथा तीर्थं तीर्थकरादेव, नान्यस्मात् महानुभावादपि, अयं भावः-जगति यद्यत्कार्यं तत् तत्कारणनियतं, न पुनरन्यस्मान्महतोऽपि विकल्पितकारणात्कार्यं स्यात्, तथा तीर्थं तीर्थकरादेव, न पुनर्महानुभावादपि इतरकेवलिनः सकाशात् तीर्थं जायते इतिगाथार्थः ॥१५॥ अथोक्तमर्थं सिद्धान्तसम्मत्या समर्थयितुं गाथायुग्ममाह—

सिद्धतोऽवि पमाणं तेसिं जेसिंपि सूरिपरिवाडी। सुद्ध पमाणं नियमा ज सोऽवि परंपरामूलो ॥१६॥

एवंविहसिद्धंते खयभावे वट्टमाणओ तित्थं । न खओवसमे भावे तित्थंपि हविज्ज जिणभणिअं ॥१७॥
येषां सिद्धान्तोऽपि प्रमाणं तेषां सूरिपरिपाटी—आचार्यपरम्परा नियमात् प्रमाणं भवेत्, तत्र विशेपणद्वारा हेतुमाह—'जं सोऽवि'-
त्ति यद्—यस्मात् सोऽपि—सिद्धान्तोऽपि 'परम्परामूलः' परम्परा—आचार्यपरिपाटी मूलं यस्य स तथा, आत्मागमानन्तरागमपरम्परा-
गमलक्षणानामागमानां मध्ये आद्ययोर्गणधरशिष्यान्तत्वात् संप्रति परम्परागमस्यैव विद्यमानत्वाद्, एवंविधसिद्धान्ते परम्परागमे
'क्षयभावे' 'क्षायिकभावे' वर्त्तमानात्पुरुषात् तीर्थं भवेत् केवलज्ञानवतस्तीर्थकरात्तीर्थं भवेत्, यदागमः—"खइअंमि वट्टमाणस्स
निग्गयं भगवओ जिणवरस्स। भावे खओवसमिए वट्टमाणेहिं तं गहिअं ॥१॥"ति श्री आ० नि०। नेति पुनरध्याहारात्, न पुनः
क्षयोपशमभावे, वर्त्तमानादिति प्रागुक्तमत्रापि ग्राह्यं, तीर्थं भवेदिति जिनभणितं—तीर्थकरेणोक्तलक्षणे सिद्धान्ते निगदितम्, एते-
नास्माभिः सिद्धान्तमनुसृत्य तीर्थमुद्धृतमिति कुपाक्षिककदाशाऽपि परास्ता, तेषां परम्पराया अभावात् सिद्धान्तस्यैवासंभवात्, प्रामाण्य-
संभवे च स्वमतोच्छेदापत्तेः, तत्र युक्तिरुक्ता वक्ष्यते चेति गाथार्थः ॥ १६-१७ ॥ अथास्मद्विकल्पितसाध्व्यादिसमुदायोऽपि तीर्थं
भविष्यतीति कुपाक्षिककदाशावल्लीविनाशाय हिमानीकल्पामन्तर्युक्तिं सूचयन्नेव तीर्थतीर्थकरयोरन्योऽन्यं संबन्धस्वरूपमाह—

तित्थं खलु तित्थंकरनमंसिअं तेण तित्थकरपुज्जं । सक्काइदेवसक्खं तेणं सव्वेसिमवि पुज्जं ॥१८॥

खलुरवधारणे, तीर्थं तीर्थकरनमस्यितमेव तेन तीर्थकरपूज्यं, तच्च कथं नमस्यितं?, 'नमो तित्थस्से'त्यादिवचनेन, शक्रादि-
देवसमक्षं—देवेन्द्रादिसकलजनसमक्षमित्यर्थः, यदागमः—"तित्थपणामं काउं कहेइ साधारणेण सद्देण । सव्वेसिं सत्ताणं जोअणनी-
हारिणा भयवं ॥१॥" श्री आ० नि०। येन कारणेन तीर्थकरपूज्यं तीर्थं तेन कारणेन सर्वेपामपि पूज्यं, पूज्यपूज्यत्वाद्, अत्र

तीर्थतीर्थकरयोरन्योऽन्यं यथार्हं नमस्करणीयनमस्कर्तृभावलक्षणः सम्बन्धोऽस्ति, तत्रान्तर्युक्तिस्त्वेवं—कुपाक्षिकविकल्पितः समुदायस्तीर्थकृन्नमस्करणीयो न स्यात्, तीर्थकृतो हि स्वस्वस्थापितमेव तीर्थं नमस्कुर्वन्ति, नान्यत्, तच्च तीर्थं यावत्तीर्थस्थितिस्तावत्कालं तिष्ठत्येव, तदुच्छेदे पुनः तीर्थं तस्य तीर्थकृतो न स्यात् किन्तु यः कश्चित् तीर्थं व्यवस्थापयति तदस्यैव सेवन्ते, नमस्करणीयं च तस्यैव स्यात्, एवं च सति यदि कुपाक्षिकाणां समुदायस्तीर्थं तर्हि तत्तीर्थकृतः शिवभूतिचन्द्रप्रभजिनदत्ताद्य एव सिद्ध्यन्ति, तदीयतद्धुराणां शिवभूत्यादिमूलकत्वात्, अधिकृततीर्थाभिर्गत्य स्वमतिविकल्पितप्ररूपणया तीर्थविलक्षणसमुदायस्य करणात् तीर्थानभिमतत्वाच्चेति युक्तिः कुपाक्षिकाभ्यपगतीर्थविनाशे किमान्वेषेति गाथार्थः॥१८॥ अथ तीर्थकृत्प्रवर्तितमपि तीर्थं किमात्मकमित्याह—

न चिअ समणायवत्त पण्णत्त जिणवरेण वीरेण। न विणा तित्थं निग्गंथेहिंत्ति पढमयणवयणाओ ॥१९॥

चिअत्ति एवकारार्थे, नदेव यत् श्रीवीरेण स्थापितं तदेव श्रमणादयर्स जिनवरेण-श्रीवीरेण प्रज्ञप्तं, तत्रुर्द्ध साध्व्यादिवर्गेषु प्रथम साधुरित्यर्थः, तत्र हेतुमाह-'न विण'त्ति 'न विणा तित्थ निग्गथेहिं'ति प्रवचनवचनात् निर्ग्रन्थैर्विना-साधुभिर्विना तीर्थं न स्यात्, यद्यपि चतुर्णां वर्णानामन्योऽन्यानुविद्धत्वादेकाकी वर्णः कोऽपि तीर्थं न स्यात्, एकस्याप्यभावेऽपि तीर्थव्यपदेशासम्भवात् तथापि साधोर्मुख्यत्वादितिगाथार्थः ॥१९॥ अथ साधुष्वपि सूरिर्मुख्यः, स च कीदृशः कथं च स्यादित्याह—

तत्थवि राया सूरी सो सूरिपरंपराइ अहिसित्तो। सोहम्माओ जमू जम्बूओ पभव इच्चाइ॥२०॥

तत्रापि-साधुषु राजा सूरि-आचार्यः, स च सूरिः सूरिपरम्परयाऽभिषिक्तः-आचार्यपरिपाट्यागतेनाचार्येण पदे स्थापितः स्यात्,

न पुनः स्वयमेव सूरिः स्यात्, यदागमः–"राया न होइ सयमेव धारंतो चामराडोवि"त्ति श्रीउपदे० । सूरिपरम्परादृष्टान्तमाह–
"सोहम्माउ"त्ति श्रीसुधर्मतो जम्बूः, श्रीसुधर्मस्वामिना निजपट्टे श्रीजम्बूस्वामी स्थापितः,जम्बूतः प्रभवः, श्रीजम्बूस्वामिनाऽपि
श्रीप्रभवः स्वपट्टे स्थापित इत्यादि यावत्सम्प्रति श्रीविजयदानसूरिस्थापिताः श्रीहीरविजयसूरयः, एवं परिपाट्या स्थापितः सूरिः
सूरिरुच्यते, न पुनर्लुम्पाकादिषु कुपाक्षिकेषु विकल्पिता अपीति गाथार्थः ॥ २० ॥ अथ सूरिसंततयोऽपि बह्वयो भवन्ति, तत्र
सर्वा अप्यच्छिन्नं तीर्थं न वेति शङ्कायां तीर्थव्यवस्थापनायां गतिमाह—

सूरीण संतईओ साहाकुलसन्निआउ णेगविहा। तासुवि एगा तित्थं सेसा पुणऽणाइसंताओ ॥२१॥

सूरीणां शाखाकुलानि 'चत्तारि साहाउ चत्तारि कुलाइं' इत्यागमवचनात् संज्ञा–नाम जाता यासां ताः शाखाकुलसंज्ञिताः अने-
कविधाः-अनेकप्रकाराः संततयः संभवन्तीति गम्यं, तास्वप्येका संततिस्तीर्थं,श्रीसुधर्मस्वामितो दुष्प्रसहं यावदच्छिन्ना संततिरेकैव तीर्थं
भवतीत्यर्थः, शेषाः पुनरनादिसान्ताः,तीर्थकरशिष्यादारभ्याच्छिन्नं प्रवृत्तिमत्त्वेनानादित्वं, विवक्षितं कालमधिकृत्य तथाविधाचारवतां
समुदायस्यानादिसिद्धत्वं वा,सान्तत्वं च यावत्तीर्थवर्त्तित्वाभावात्,अर्वागेव पर्यवसानादिति गाथार्थः॥२१॥ अथ यत एवं तत आह–

तं थेरावलिभणिअं साहापमुहं तु संपई सव्वं । नागिंदचंदनिव्वुइविज्जाहरएसु चंदकुलं ॥२२॥

यतः शेषाः संततयोऽनादिसांतास्तत एव स्थविरावलीभणितं–पर्युषणाकल्पस्थविरावल्यां भणितं 'शाखाप्रमुखं' शाखाकुलादिकं
सर्वं संप्रति नास्ति, तेषां च शाखादीनामनादित्वे सान्तत्वमेव सिद्धं, ननु 'नागभूतं सोमभूत'मित्यादिनाम्ना सादित्वे सिद्धे कथ-
मनादित्वमितिचेद्, उच्यते, अत्राचारमधिकृत्यानादित्वमुक्तलक्षणमभ्युपगतं, तस्य च तीर्थकृच्छिष्यात्प्रवृत्तस्य नागकुलादावप्य-

विस्तात्, किंचिद्देशसंततिस्तीर्थमित्याह—'नागिंदे'त्यादि, नागेन्द्रचन्द्रनिर्वृतिविद्याधरकुलेषु यथा चन्द्रकुलं तीर्थत्वेनाभिमतं संप्रत्यपि प्रत्यक्षं, शेषाणां त्रयाणां मध्ये निर्वृतिकुलं तु तदानीमेव निर्वृतं, नागेन्द्रविद्याधरकुले अपि छिन्नप्राये एव, कचित्कश्चित्कुलस्थः श्रूयमाणोऽपि चारित्रक्रियाया अभावात् केवललिंगधारित्वेनाकिंचित्कर एव, ये तु चन्द्रकुलादपि राकारक्तादयः पृथग्भूतास्तन्त्र कुलत्वमात्मनः स्थापयन्ति तदयुक्तमेव, नवीनमार्गप्रकाशकत्वेनाभिनिवेशमार्गपतितत्वात्तेषामिति गाथार्थः॥२२॥ अथ दृष्टांतमाह—

जह मणुआण एगा अणाइणंता य संतई लोए। सेसा अणाइसंता पञ्चक्ख चेव दीसंति ॥२३॥

यथेत्युदाहरणोपन्यासे, यथा मनुजानामेका संततिरनाद्यनन्ता भवति—आद्यन्तरहिता स्यात्, शेषाः संततयोऽनादिसान्ताः—आदिरहिता अपि सपर्यवसानाः, गर्भजानां हि संततिमपेक्ष्यानादित्वमेव स्यात्, एवं सत्यपि काश्चन संततयः सपर्यवसाना एव स्युः, एतच्च लोके प्रत्यक्ष दृश्यते, यथा कस्यचिदेकस्य चतुर्णां पुत्राणामेकस्य संततिः प्रवर्द्धमाना दृश्यते, शेषाणां मध्ये कस्यचिदेका पत्यपर्यवसायिनी, कस्यचिद् द्विन्त्र्यायपत्यान्ताऽपि स्यादिति गाथार्थः॥२३॥ अथ सविरासत्यां याः शाखाः यानि च कुलानि तेषां परस्परमदूषकत्वेनाविवाद एवासीत् तत्कथमित्याह—

दसविहसामायारीकरणे तह निच्चकिच्चकिरिआसु। सव्वेसिं सामन्न तेसिं तेणेव अविवाओ ॥२४॥

दशविधसामाचारी "इच्छा मिच्छा तहक्कारो" इत्यादिरूपा तस्याः करणं तस्मिन्, तथा नित्यकृत्यानि—प्रतिक्रमणप्रतिलेखनादिसाध्वनुष्ठानरूपाणि तदुपायाः क्रियास्तासु, सर्वेषां शाखादीनां सामान्यं—समानता अवैषम्यमासीत्, तेनैव हेतुना तेषामविवादः—अविमतिपत्तिरिति ॥ अथ तेषामविप्रतिपत्तौ सांभोगिकत्वमेव कथं न स्यादित्याह—

**बहुआयरिअपरंपरअंतरिआणं न होइ संभोगो। विणयाइअकम्मं पुण अण्णुण्णं होइ अविरुद्धं ॥२५॥**

बह्वाचार्यपरम्परान्तरितानां–बहूनामाचार्याणां परम्परया अन्तरितानां–व्यवहितानामन्योऽन्यं संभोगो न भवति, अर्थादन-
न्तरितानां संभोगो भवत्येव, अयं भावः–एकस्मिन् गणे भूयांसोऽप्याचार्याः संभवन्ति, ते च परस्परं संभोगिन एव स्युः, यथा
श्रीमहागिरिसुहस्तिनौ सांभोगिकौ, एवं च कथंचिद्देशादिव्यवधानेन तत्तदपत्यानां भिन्नभिन्नाचार्यान्तरितानां संभोगो न भवति,
विनयादिकर्म्म–परस्परवन्दनासनदानादिकृत्यं अविरुद्धं भवति–तथा करणे विरोधो न
भवति, अन्नादिदाने तु जिनाज्ञाभङ्गः, अत एव विसंभोगिकानां श्राद्धकुलादिदर्शनमेव चागमे भणितमिति गाथार्थः॥२५॥ अथ
निग्रहानुग्रहादावेकस्याधिकाराभावाद्,
संभोगादिस्वरूपे लौकिकदृष्टांतमाह—

**लोए पुण संभोगो सहोअराणंपि एगआणाए। वावाराइरयाणं तवसलाहाइकंखाणं ॥ २६ ॥**

लोके पुनः 'संभोगो' नित्यं भोजनादिक्रियासु समतया सम्मत्या प्रवृत्तिः 'सहोदराणां' भ्रातॄणामेकाज्ञया–एकस्य पित्रादे-
राज्ञया 'व्यापारादिरतानां' तदुपदिष्टकार्यकारिणां 'तद्वशलाभाकाङ्क्षाणां' पित्राद्यायत्तलाभाद्यभिलाषुकाणां भवति, अयं भावः–यः
कश्चित् पित्रादिः कुलादौ ज्येष्ठस्तदायत्तानां पुत्रादीनामेकस्मिन् गृहे निवासः, तत्र प्रवेशनिर्गमादिर्निरन्तरभोजनादिविधिश्च पर-
स्परं सापेक्षः,व्यापारादिविचारणापूर्वकलाभादिसमीहा चेत्यादि सर्वमपि सर्वसम्मतमेव दृश्यते, एवमेव विवक्षिताचार्यादेशायत्तानां
बहूनामप्याचार्यादीनां संभोगो युज्यत इति गाथार्थः ॥२६॥ अथ विपरीतानां किं स्यादित्याह—

**विवरीआ अण्णुण्णं जह अण्णो णाइसंभवो तेसिं। आयारो पुण एगो कुलवडिओ निच्चकिच्चेसु ॥२७॥**

'विपरीता' पित्रादेः सकाशात्पृथग्भूताः पुत्रादयोऽन्योऽन्य यथाऽन्यस्तेषां पित्रादीनां ज्ञातिसंभवः—स्वगोत्रीयो भवति तत्स एवः पुत्रादि', तस्यापि च पित्रादिस्तथैव, अयं भाव'—यथा निजज्ञातीयास्तद्गृहे प्रवेष्टु तद्गृहसंबन्धि वस्तुजात भोक्तु दातु वा न समथा भवन्ति, तथा पित्रादे' सकाशात्पृथग्भूताः पुत्रादयोऽपीति, आचार' पुनः—नित्यकृत्येषु 'कुलपतिता' कुलक्रमायातः एकः, एवकारो गम्य', एक एव, न तु भिन्नः, एव जिनप्रवचनेऽपि भिन्नशाखादिपतितोऽपि न नित्यक्रियायां भेदभाग् नवा प्ररूपणामधिकृत्यापि तस्य भेद इति गाथार्थ' ॥२७॥ अथ प्रकारांतरेण दृष्टान्तमाह—

अहवेगे सहगारे साहपसाहाइसंभवाणपि। पत्ताईण वण्णायारासायाभिहाइ सम ॥२८॥

अथवैकस्मिन् सहकारे शाखाप्रशाखादिसंभवानामपि पत्रादीनां—पत्रपुष्पफलानां वर्णाकारास्वादाभिधानादि सम भवति, यथैकस्यां शाखायां पत्रपुष्पफलानां वर्ण आकार' आस्वादोऽभिधान च यादृशं भवति तादृशमेवापरस्यामपि शाखायां पत्रादीनां स्यात्, न पुनर्भिन्नस्वभावः, एव तीर्थेऽपि पृथक्शाखादिगतानां मुनिप्रभृतीनामेक एवाचारो, न भिन्न इति गाथार्थः ॥२८॥ अथ तीर्थं कल्पद्रुमेणोपमयितु गाथात्रिकमाह—

मजरि सुयालसगी फलसरिसो सोहणो अ आयारो। महुररसासायसमं केवलणाण मुणेअव ॥३०॥

तित्थनसुक्कारसलिलसित्त तित्थकरेण त पढम। तप्फलसायमिलासी अण्णोऽवि लहेय सिग्घिज्जा ॥३१॥

सम्यक्त्वपृथ्वीपीठे तीर्थं कल्पद्रुमः, चः पुनरर्थे, शाखादिषु सूरिप्रमुखा' श्रमणाः, श्रावकवर्गाश्च पत्राणि, मञ्जरी तावत् द्वाद शाङ्गयादि', शोभन आचारश्च फलसदृश', मधुररसास्वादसम केवलज्ञान, शोभनाचारपरिपालनात् केवलावाप्तिः स्यात्, स च मधुर-

रसास्वादकल्प एव, तीर्थनमस्कारः 'नमो तित्थस्से'त्यादिरूपो यस्तीर्थनमस्कारस्तद्रूपं यत्सलिलं तेन सिक्तं तत् तीर्थं प्रथमं तीर्थकरेण, यदागमः—"तित्थपणामं काउं कहेइ साहारणेण सद्देणं'ति" आ० नि० (५६६) तत्फलं—तीर्थफलं, तीर्थाराधनेन केवलज्ञानहेतुः सदाचारः परिपालितो भवतीतिकृत्वा सदाचार एव तत्फलं, तस्यास्वादः केवलज्ञानं तस्याभिलाषी अन्योऽपि तथैव सिञ्चेत्—नमस्कारादि यावदाराधनविधिना सम्यगाराधयेदितिकल्पद्रुमेण सादृश्यं तीर्थस्येति गाथात्रयार्थः ॥२९-३०-३१॥ अथ तीर्थस्योत्पत्तिः स्थितिश्च यथा भवति तथैव दर्शयितुं दृष्टान्तमाह—

जह पढमं उप्पत्ती मेहविसेसाउ कप्परुक्खस्स । बीअपरंपरसंठिइ बीउच्छेए पुणो मेहा ॥३२॥

तह तित्थं तित्थयरा पढमं उप्पज्जए न अण्णाओ। सूरिपरंपरसंठिइ सूरिच्छेए पुणो अरहा ॥३३॥

यथा कल्पवृक्षस्य प्रथममुत्पत्तिर्मेघविशेषात् कल्पद्रुमहेतुभूतात् मेघात्, तत्स्थितिः पुनर्बीजपरम्परा, बीजपरम्परया भवतीतिकृत्वा, बीजोच्छेदे पुनर्मेघात् प्रागुक्तमेघविशेषादुत्पत्तिरिति दृष्टान्त इति गाथार्थः ॥३२॥ अथ दार्ष्टान्तिकमाह—तथा तीर्थं तीर्थकरात् प्रथममुत्पद्यते, नान्यस्मादपि, तस्य स्थितिः सूरिपरम्परयैव, यदुक्तं—"कइआवि जिणवरिंदा पत्ता अयरामरं पहं दाउं। आयरिएहिं पवयणं धारिज्जइ संपयं सयलं ॥१॥ ति श्रीउप० (१२) यथा स्वयमतथाभूतेनापि बीजमेघकल्पेनार्हता श्रीवीरेण श्रीसुधर्मस्वामी सूरीकृतस्तेन च जम्बूस्वामी तेनापि श्रीप्रभव इत्यादिबीजपरम्परा ज्ञेया, तस्या उच्छेदे पुनस्तीर्थमर्हत एव, न पुनः केवलिनोऽप्यपरस्मात्, कल्पवृक्षस्यापि बीजोच्छेदे हि न यत्किञ्चिन्मेघात्, नवा महतोऽपि सहकारादिविजातीयवृक्षादिति दार्ष्टान्तिकयोजनेतिगाथार्थः ॥३३॥ अथैवं नियमः कथमित्याह—

तित्थ खलु तित्थयरा अणाइजगसंठिई न इहराधि । किं मच्छिआपसूआ हसी एगावि केण सुआ? ॥३४॥

यद्यपि "तित्थ चाउवण्णो संघो" इत्यादिदशमगाथायां तीर्थंकरादेव तीर्थोत्पत्तिरिति दर्शितं तथापि जगत्स्थित्या द्रढयितु द्विर्बद्धं सुबद्धं भवतीतिन्यायाद्वाह–'तित्थं खलु'त्यादि, तीर्थं तीर्थंकरादेवेत्यनादिजगत्संस्थितिः, शाश्वतीयं मर्यादेत्यर्थः, नापीतरथेति, दृष्टान्तमाह–"किं मच्छिअ'त्ति मक्षिकाप्रसूता एकापि हंसी, अपिर्गम्य', केनापि श्रुता ?, अपि तु नेति जगत्स्थितिः, यथा पक्षित्वेन साम्येऽपि हंसा जननी मक्षिका न भवति, तथा तीर्थं तीर्थंकरात्, अन्यस्माच्च भवतीतिगाथार्थः ॥३४॥ अथ सामान्यतोऽपि कार्यकारणनियममाह—

एव ज जं कज्ज निअय निअकारणेहिं जइ जाय । त त तहेव जायइ अन्नह एजगसंठिईलोवो ॥३५॥

'एव' प्रागुक्तयुक्त्या यद्यत्कार्यं निजकारणैर्नियतं तत्तत्कार्यं तथैव जायते, अन्यथा जगत्स्थितिलोपः स्यात्, गोरिव वृक्षादेरपि वृषभादीनामुत्पत्तिः प्रसज्येतेतिगाथार्थः ॥३५॥ अथ तीर्थस्य सकलजनप्रसिद्धं लक्षणमाह—

जम्हा कुवक्खपक्खो बीहेई जह निवाउ तेणगणो । त खलु तित्थ तित्थयरकरठविअं मुणेअव्व ॥३६॥

यस्मात् 'कुपक्षपक्ष'उत्सूत्रभाषिसमुदायो बिभेति–भाव्याभिग्रहकार्यादिस्थेयरूपेण नित्य भीत एवास्ते, यथा नृपात् स्तेनगण – चौरसमूहः, तत्तीर्थं तीर्थंकरकरस्थापितं ज्ञातव्यमितिगाथार्थः ॥३६॥ अथ दिगम्बरः प्रायस्तीर्थाद्भ बिभेति तत्र हेतुमाह—

जं पुण पाय तित्था खमणो न बिहेइ तस्स तित्थेण । परिअत्तो पढमदिणम्मि सचक्कु सचक्खुयया ॥३७॥

यत्पुनः प्रायः क्षपणको–दिगम्बरस्तीर्थात्र बिभेति तत्र तीर्थेन प्रथमदिने–नवीनमार्गप्ररूपणावसरे प्रथम एव दिवसे तीर्थेन

परित्यक्तः, कुतः ?—'सर्वथा' सर्वप्रकारेण, सर्वसंबन्धाद्,अयं भावः—अयं च तीर्थबाह्यः, अतो नालापाद्यपि विधेयमित्येवंरूपेण सर्व-
प्रकारेण सर्वसंबन्धात्परित्यक्तस्तेन स तीर्थान्न बिभेति, 'नहि मृतः पुनर्म्रियते' इतिन्यायात् सर्वसंबन्धाभावे कुतो भयमिति बोध्य-
मितिगाथार्थः ॥३७॥ अथ शेषाणां दिगम्बरापेक्षया वैलक्षण्यं दर्शयन्नाह—

**सेसा अकिंचिगणिआ पढमं तित्थेण कालबलजोगा। पच्छा पसइमुवगया जह वणलेसोवि सुप्पसरो ॥३८॥**

शेषाः—पौर्णिमीयकादयो नवापि तीर्थेन प्रथममुत्पत्तिसमये अकिञ्चिद्गुणिताः, किमनेन वराकेण तीर्थस्य स्यादित्येवंरूपे-
णाकिञ्चित्तया चिन्तिताः, एवं चिन्तनं कुतः ?—'कालबलयोगाद्', अवश्यं भाविनी प्रवचनपीडेति हेतुना, कश्चित्कालस्तथा परि-
णतो यस्य बलयोगात्कुपाक्षिकेषूपेक्षैव जाता तीर्थस्येति,अथ साम्प्रतमपि दिगम्बरादिवत् कथं न क्रियते ?, तत्र हेतुमाह—'पच्छे'-
त्यादि, पश्चाद् अनुक्रमेण प्रसृतिं—प्रसारमुपगताः, तीर्थसमीपस्था एव वृद्धिं प्राप्ता इत्यर्थः, तत्र दृष्टान्तमाह—'जह वणे'त्यादि,
यथा 'व्रणलेशोऽपि' सूक्ष्मव्रणोऽपि सुप्रसरः—अतिप्रसरवान् भवति, अत एव सूक्ष्मोऽपि व्रणो न विश्वसनीयः, यदागमः—"अण
थोवं वणथोवं अग्गी थोवं कसाय थोवं च। न हु भे वीससिअव्वं थेवंपिहु तं बहुं होइ॥१॥त्ति श्री आव० नि० (१२०) इति गाथार्थः
॥३८॥ अथानन्तरं यदुक्तं 'जम्हा कुवक्खपक्खो' इत्यादि तत्समर्थनपुरस्सरं व्यक्त्या तीर्थं दर्शयति—

**ते पुण जम्हा निअमा ससंकिआ तंपि संपयं भरहे। तवगणतित्थं णेअं कणगं व परिक्खपच्चक्खं ॥३९॥**

ते पुनः—पौर्णिमीयकादयः सशङ्किताः—सभया भवन्ति यस्मात् 'तंपि'त्ति अपिरेवार्थे तदेव 'साम्प्रतं' वर्त्तमानकाले 'तपाग-
णतीर्थं' तपागण एव तीर्थं तपागणतीर्थं, 'भरते' इह भरतक्षेत्रे 'ज्ञेयं' बोध्यं, किंलक्षणं ? केन कमिव ?—सुवर्णमिव परीक्षा-

प्रत्यक्ष, श्रुतप्रत्यक्षाप्रत्ययादिना इह भरतक्षेत्रेऽच्छिन्नपरम्परागतमिदमेव दृश्यते, दुष्करक्रियाकारित्वे, तथाविधसापरस्यादृश्यमा-
नत्वात्, तथा कुपाक्षिकपक्षोऽप्यस्मादेव बिभेति, यतः कुपाक्षिकसंसर्गोऽपि महापापहेतुः,आस्तामन्यत्, कुपाक्षिकनामाङ्कितो ग्रन्थ
मप्यकल्प्य इत्येवंरूपेण तपागणसाधव एव सदस्युपदिशन्ति, तथाविधसम्यक्त्वादिगुणालङ्कृतास्तदुपदेशभोक्तारोऽपि केचित् श्रावका-
स्तथा कुर्वन्त्यपि, अत एव श्रीपत्तने म० समर्पेन लुम्पाका अपसंख्या एव कृता आसन्निति सर्वजनप्रतीतमेव, न चैवं कश्चिदपर
स्तथोपदेष्टा श्रूयते इत्येव परीक्षया प्रत्यक्षम्–अध्यक्षमेवेदं तीर्थं, न चैतत् अस्माभिरेवोच्यते, किन्तु श्रीहरिभद्रसूरिप्रभृतिवचोभि-
रप्यविभागमान्ते ग्रन्थसंमत्या व्यवस्थापयिष्यमाणत्वादिति बोध्यमिति गाथार्थः ॥ ३९॥ अथैवंविधे तीर्थे कुपाक्षिकाः कीदृक्
चेष्टाभाज इत्याह—

एवं तित्थविआरे कसवट्टे परिक्खिअम्मि तित्थम्मि। ससमइविगप्पिअमए राएण दुरासया वसंति ॥४०॥

'एवं' प्रागुक्तप्रकारेण तीर्थविचारे 'कसपट्टे' तीर्थविचारलक्षणे कषपट्टे कनकमिव परीक्षिते तीर्थे दक्षापि कुपाक्षिकाः 'स्वसम-
तिकल्पितमते' स्वसमत्या–निजनिजबुद्ध्या विकल्पितं यन्मतं पाक्षिकं तु पक्षसान्ते भवतीति पूर्णिमापाक्षिकं युक्तं तथा स्त्रियोऽपवित्राः
कथं तीर्थकृत्प्रतिमां पूजयन्तीति स्त्रीणां जिनपूजा न युक्ता मुखवस्त्रिकादि धरणे श्राद्धानां साधुसमतेति श्राद्धानां सामायिकादौ मुख-
वस्त्रिका न युक्तेत्यादिकुविकल्पकल्पनलक्षणया विकल्पितं यन्मतं तत्र रागेण–अभिनिवेशनिबद्धस्नेहेनास्मदीयं मतमेव सर्वोऽपि जन
आश्रयतु नान्यदितिरूपेण 'दुराशयाः' दुष्टाध्यवसायिनः, स च दुष्टाध्यवसायोऽनन्तरगाथायामेव वक्ष्यते इति गाथार्थः ॥४१॥ अथ
तेषां दुराशयमाह—

**तेणं पइसमयं मुणिघायमहापावरुद्दपरिणामा। णंतभवभोगकम्मा तित्थमतित्थंति महमोहा ॥४१॥**

येन कारणेन ते कुपाक्षिका निजमतोदयमिच्छति तेन कारणेन 'प्रतिसमयं' समयं२ प्रति तत्तन्मतानां तिरस्कारकारिणस्तीर्थस्योच्छेदमेवेच्छन्ति, आत्मीयपक्षस्य पराभविष्यतः कस्यचित् किंचित् स्यात्, पराभविष्णोरुच्छेदं सर्वोऽपि जनः समीहत एवेति जगत्स्थितिः, कुपाक्षिकाणां तु तथाविधप्राग्जन्मोपार्जिताशुभक्लिष्टकर्मपरिपाकजन्यतथाविधभवितव्यतावशेन तीर्थमेव पराभविष्णुतया संपन्नं, तस्य चोच्छेदे समीहमाने भावतः साध्वादीनां विनाश एव समीहितः, सोऽपि न कादाचित्कः, किंतु प्रतिसामयिकः, तेन मुनिघातः, उपलक्षणात् साध्व्यादीनामपि, तेन हेतुभूतेन यन्महत्पापं, यदुक्तं—"चेइयदव्वविणासे इसिघाए पवयणस्स उड्डाहे। संजइचउत्थभंगे मूलग्गी बोहिलाभस्स॥१॥त्ति (४१५) तेन पापेन रुद्रः परिणामो येषां ते मुनिघातमहापापरुद्रपरिणामाः, पुनः कीदृशाः?—'महामोहाः' महा—महान् अनन्तभवसंबन्धहेतुर्मोहो—मिथ्यात्वं एषां ते महामोहाः, तत् कथमित्युल्लेखमाह—'तित्थमतित्थं' तीर्थं—साध्वादिसमुदायमतीर्थमिति, अतीर्थं च—स्वस्वसमुदायलक्षणं साध्वाभासादिरूपं तीर्थमिति मन्यमाना इति गम्यम्, अयं भावः—ते कुपाक्षिकास्तीर्थमतीर्थतयोपदिशन्ति, अतीर्थं च निजमतिविकल्पितं तीर्थतयेति महामोहविजृम्भितं, नातः परं पातकमिति बोध्यं, तथाभूतास्ते कीदृशाः संपन्ना इत्याह—'अणंते'त्यादि, अनन्तभवभोगकर्माणः—अनन्तैर्भवैर्भोग्यानि कर्माणि येषां ते तथा, अनन्तसंसारभाज इत्यर्थः, उत्सूत्रभाषिणोऽनुपरताः मृताः सन्तो नियमादनन्तसंसारिण एव स्युः, यदुक्तं—"उस्सुत्तभासगाणं बोहीनासो अणंतसंसारो"त्ति, तथा 'कालमणंतं च सुए अद्धापरिअट्टओ अ देसूणो। आसायणबहुलाणं उक्कोसं अंतरं होइ॥१॥त्ति श्रीआ० नि० (८५३) अत्राशातनाबहुल उत्सूत्रभाष्येव बोध्यः, प्रतिसमयं तीर्थघातपातकभाजनत्वाद्, अत एव घोरानुष्ठानं

र्वभपि जमाल्यादिवत्प्रतिसमयमनन्तसंसारमेव निर्वर्तयति, असङ्ख्यातसमयात्मके तभिजात्युपा अन्तर्मुहूर्तेन वा प्रतिसमयमनन्तसंसारस्वरूपमापेऽनन्तसंसारार्समवाप्तिरिति गाथार्थः ॥४१॥ अथ तीर्थप्रद्वेषात् यथा कुपाक्षिकस्य स्वरूपरिमाणाः स्युः यथा कुपाक्षिकप्रद्वेषाद्तीर्थान्तर्वर्तिनो भवन्तोऽपि कथ न स्युरिति पराशङ्कोद्भावनामाह—

णणु तुम्हाणवि दोसो कुपक्खपक्खमि दीसई पयडो। सो मे रुद्दज्झाणं हाणिं अण्णेसमाणाण ॥४२॥

नन्विति परप्रश्ने, ननु भो' तीर्थपक्षपातिनः ! युष्माकमपि, अपिशब्दात् यथा तीर्थे द्वेषः कुपाक्षिकाणां तथा युष्माकमपि, कुपक्षपक्षे द्वेषो दृश्यते 'सो' तस्मात् यथा तीर्थोच्छेदमिच्छतां कुपाक्षिकाणां रौद्रध्यानं तथा भवतामपि हानिम्—अर्थात्कुपाक्षिकाणाम न्वेषयतां—कुपाक्षिकोच्छेदमिच्छतां रौद्रध्यान भवत्येव, विनाशाभिप्रायस्योभयत्रापि तौल्यादितिपराशङ्केति गाथार्थः ॥४२॥ अथ पराशङ्कामेव पराकरोति—

नेय वोत्तु जुत्तं ज सो तित्थस्स परमरोगुत्ति। तस्सवि हाणिविगप्पो अयऽवम्मो केरिसो धम्मो ? ॥४३॥

'एवं' प्रागुक्तं 'ननु तुम्हाण'मित्यादि वचनम्—अपिमध्याहृत्य वक्तुमपि न युक्तं, यत्—यस्मात्कारणात् 'सः' कुपाक्षिकपक्ष स्तीर्थस्य परमरोगः—उत्कटातङ्क इव, यथोत्कृष्टरोगोऽसह्यवेदनया रुधिरमांसादिशोषणेन पुष्टमपि पुरुषं कृशीकरोति बलवन्तमपि दुर्बलं तथा कुपाक्षिकपक्षोऽप्युत्सूत्रभाषणरूपयाऽसह्यवेदनया तीर्थान्तर्भवश्रावकादिसमुदायमादाय तीर्थमेव कृशीकरोति, तथाप्यक्षसिद्धमेव, यतो यावन्तो वक्ष्यमाणाः कुपाक्षिकास्तेस्तीर्थसम्बन्धिन एव श्रावकादीन् व्युद्ग्राह्य आसतां तीर्थस्याजनं प्रत्युतानार्यलोकवत् तीर्थप्रतिकूलवर्तिन एव सिद्धिता', 'तस्सापि' कुपाक्षिकपक्षस्यापि तीर्थमहारोगस्य हानिविकल्पो यद्यधर्मस्तर्हि धर्म कीदृशः स्यात् ?,

नास्मादन्यो धर्म इत्यर्थः,अनेन रौद्रध्यानं दूरे, प्रत्युत परधर्म एव तदीयमताहानिविकल्प इति दर्शितम्। अत एव "निव्वुइपहसासणयं जयइ सया सव्वभावदेसणयं। कुसमयमयनासणयं जिणिंदवरवीरसासणयं" १। (नन्दी–२२५) इत्यादिवचोभिः प्रवचनविषयकाऽऽशीरपीतिगाथार्थः ॥४३॥ अथ तीर्थहानिं कुपाक्षिकहानिं चेच्छतोः परस्परं महदन्तरं, तदेव दृष्टान्तेनाह—

**किं धिज्जाइज्झाणं सरिसं हरिएसिजक्खज्झाणेण। असुईलित्तो पाओ चंदणलित्तेण किं सरिसो? ॥४४॥**

'धिग्जातिध्यानं' ब्राह्मणकुमाराणां ध्यानं 'हरिकेशियक्षध्यानेन' हरिकेशिसाधोर्वैयावृत्त्यकरस्य तिन्दुकनाम्नो यक्षस्य ध्यानेन सदृशं किं भवेद्?, अपितु न भवेत्, यतः कुमारध्यानं मुनिहननविषयं, यक्षस्य तु कुमारहननेऽपि मुनिरक्षणेन वैयावृत्यविषयकं, न पुनः रागद्वेषप्रभवं, यदागमः–"पुव्विं च इण्हिं च अणागयं च, मणप्पदोसो न मे अत्थि कोई। जक्खा हु वेआवडिअं करिंति, तम्हा उ एए निहया कुमारा" ॥१॥ इतिश्री उ० (३९–८) वैयावृत्त्यं हि महानिर्जराहेतुरित्यग्रे वक्ष्यते, तस्माद्धननाभिप्रायसाम्येऽपि द्वयोर्ध्यानयोर्महदन्तरम्, एवं कुपाक्षिकाणां तीर्थोच्छेदविषयकध्यानमस्माकं च तीर्थरोगकल्पस्य कुपाक्षिकपक्षस्योच्छेदविषयकमिति उच्छेदध्यानसाम्येऽपि एकस्य धर्मध्यानमपरस्य रौद्रध्यानमिति, तत्रापि दृष्टान्तमाह–'असुईलित्तो'त्ति अशुचिना–पुरीषादिद्रव्येण लिप्तः पादः किं चन्दनलिप्तेन पादेन समः स्याद्?, अपितु न स्यात्, एवं लिप्तत्वेन साम्येऽपि अशुचिलिप्तः पादो जलेन धौत एव शुभानुष्ठानप्रवृत्तिहेतुः स्यात्, चन्दनलिप्तस्तु स्वत एव विशेषतः स्याद्, एवं तीर्थोच्छेदध्यानं पुरीषकल्पं कुपाक्षिकोच्छेदध्यानं च चन्दनकल्पम्, एवं विमलवाहनध्यानं विट्कल्पं सुमङ्गलसाधोश्च ध्यानं चन्दनकल्पमित्यादि स्वयमेवालोच्यम्, एवं च ध्यानं जीवयोग्यतयैव समापतितं, यथा आहारविषयकध्यानसाम्येऽपि हंसस्य कमलपत्राण्येव संपन्नानि, काकादीनां तु विड्-

मांसादीनि, तथा तीर्थकृपाक्षिकयोरपीतिगाथार्थः ॥४४॥ अथोपसंहरन्नेव प्रथम तीर्थस्वरूपप्ररूपणे हेतुमाह—

एय तित्थसरूव परूविअं त पसंगओ पढम। ज जउ भणिउ सव्वा कुपक्खिआ पाहिरा सम्मुई ॥४५॥

'तत्' तस्मात्कारणात्प्रसङ्गतः "पढमिल्लुआण उदये" इत्यादिनवमगाथायां कुपाक्षिकाः केचित् तीर्थाभिर्गता इति तीर्थस्वरूप निरूपण प्रसङ्गत आगतमत' प्रथमम्—आदौ तीर्थस्वरूपं 'प्ररूपित' निदर्शित, यत्—यस्मात्कारणाद्यतस्तीर्थात् कुपाक्षिकाः 'सव्वमये'-त्यादिगाथोद्दिष्टाः समुर्त्तं भवा भवितु शक्या भवन्तीति, तीर्थस्वरूपापरिज्ञाने च कुपाक्षिकाणां बाह्यत्वं कुतो मन्यते इति प्रथम तीर्थस्वरूपनिरूपणं सप्रयोजनमितिगाथार्थः ॥४५॥ अथ प्रकारान्तरेणापि तीर्थस्वरूपं निरूपयितुमुपक्रम्यते—

इहमह कुपक्खपक्खं अब्भासवसेण मुणिअ परिचयती। सह तित्थासयणापि अ कुज्जा चिण्णुत्ति बुद्धीए ॥४६॥

छुत्तिपयार किंची दसेमो जेण वीयरूवेण। तित्थातित्थसरूव कुज सिआ मूलमइणोऽवि ॥४७॥

तेण कस्सवि असे पुणोवि भणणंपि वीसए इहय। न य पुणरुत्तदोसो चिंतेअव्वो जमब्भासो ॥४८॥

'इह' कुपक्षकौशिकसहस्रकिरणनाम्नि प्रकरणे 'अथे'तिपूर्वापेक्षया प्रकारान्तरद्योतने, कुपक्षपक्षमभ्यासवशेन—'पुनःपुन' करणमभ्यास' इति वचनात् पुनः पुनस्तत्स्वरूपश्रवणेन 'ज्ञात्वा' सम्यक् पर्यालोच्य 'परित्यजतु,' एकशः श्रवणेन सहसा तत्त्यागासंभवात्, संभवे वा कदाचिदभिमुखीभवनस्यापि संभवे अविमृश्य त्यक्तमिति पश्चात्तापस्यापि कस्यापि संभवो दुर्निवारोऽतः पुनः पुनः श्रवणेनाभ्यस्य त्यागे सत्यपि प्रागुक्तदोषासंभवः, तथा तीर्थाश्रयणमपि चाभ्यासवशेन कृतं सत् सुरसमूहेनापि वतश्चालयितुमशक्यम्, अतस्तत्राप्यभ्यासः श्रेयानेवेति तीर्थाश्रयणमप्यभ्यासवशेन विज्ञः कुर्यादितियुक्त्या हेतुभूतया युक्तिप्रकारं किञ्चिदर्श-

यामः, येन युक्तिप्रकारेण दीपरूपेण—प्रदीपकल्पेन तीर्थातीर्थस्वरूपं स्फुटं स्यात्, कस्य?—आस्तां सूक्ष्मदृग्, स्थूलमतेरपि, तेन कारणेन कुत्रचिदंशे पुनरपि भणनमपि—वारं वारं कथनमपि दृश्यते 'इह' अधिकारे अस्मिन् प्रकरणे वा, न पुनरुक्तदोषश्चिन्तनीयः, चोऽप्यर्थे, न चिन्तनीयोऽपि, भाषणं तु दूरे इत्यपिशब्दार्थः, एवं कुतो ?, यतः सोऽभ्यासः, स च पुनः पुनर्भणनेनैव स्यादितिगाथात्रयार्थः ॥४६–४७–४८॥ त्रिभिर्विशेषकं। अथ प्रथमं कुपक्षमात्रस्वरूपमाह—

**पायं कुपक्खपक्खो उ सुत्तसरणो हविज्ज वयणेणं। सुत्तं पुत्थयसरणं नणु किंच परंपरासरणं ॥४९॥**

'प्रायो' बाहुल्येन कुपक्षपक्षस्तु वचनेन—वचोमात्रेण, नतु मनसाऽपि, सूत्रशरणो भवेत्, अस्माकं सूत्रमेव प्रमाणं, न वृत्त्यादिकमपीत्यादिवचोमात्रेण सूत्रशरणं इत्यर्थः, तत्रैवं प्रष्टव्यं—ननु भोः सूत्रं पुस्तकशरणं किं वा परम्पराशरणमिति विकल्पद्वयी, तत्र पुस्तकमेव शरणम्—आश्रयो यस्य तत्पुस्तकशरणं, परम्परा—अच्छिन्नपुरुषप्रवाहः सैव शरणं यस्येति परम्पराशरणमिति, कृपाक्षिकाकूतमेव प्रश्नद्वारा विकल्पितमितिगाथार्थः ॥४९॥ अथ प्रथमविकल्पाकूतं दूषयितुमाह—

**पुत्थयसरणं सुत्तं फलवं न हु होइ केवलं किंतु। पुरिसायत्तं पुरिसो पयत्तवंतोऽवि विहिविण्णू ॥५०॥**

केवलं पुस्तकशरणं सूत्रं फलवन्न भवेत्, किंतु?—'पुरुषायत्तं' पुरुषपरतन्त्रं, पुरुषोऽपि न यः कश्चित्, किंतु?, प्रयत्नवानपि विधिज्ञः, सूत्रस्य ग्रहणे दाने च विधिं जानातीति विधिज्ञ इति गाथार्थः ॥५०॥ अथ विधिज्ञोऽपि कीदृक् स्यादित्याह—

**सोऽवि अ दायगगाहगभावापन्नोवि जुग्गयाजुत्तो। तेणं तिपईमित्ता दुवालसंगीइ रयणावि ॥५१॥**

'सोऽपि च' विधिज्ञोऽपि च दायकग्राहकभावापन्नः, श्रुतज्ञानं हि द्वाभ्यामेव साध्यं, तत्रैको दायकोऽपरो ग्राहकश्चेति, एवंरूपेण

स्वरूपमापन्नः पुरुषोऽपि 'योग्यतायुक्तः' दायकयोग्यतायुक्तो ददाति, ग्राहकयोग्यतायुक्तश्च गृह्णातीति, पुरुष इत्यत्रैकवचनं दायकेन युक्तो ग्राहको ग्राहकेन युक्तो दायको वेत्येवं विग्रहेण बोध्यम्, अत एव "पासगस्स नत्थि उवएसो"त्ति (आचा ८–८२) प्रवचनं, तस्य योग्यताया अभावात्, अथोभयोर्योग्यतायां दृष्टान्तमाह–'तेने'त्यादि, तेन कारणेन येन योग्यतामापन्नस्तेनैव त्रिपदीमात्रात् 'उपनेइ वा विगमेइ वा धुवेइ वे'ति मातृकापदमात्रात् द्वादशाऽङ्ग्या रचना, तीर्थकृद्गणधरयोर्द्वयोरपि दायकग्राहकयोर्योग्यतामापन्नत्वात्, यस्तां द्वयोः, एकतरस्याप्यभावे त्रिपदी न फलवती, त्रिपदीदाने योग्यतामापन्नोऽपि भगवान् वीरः श्रीगौतमाद्येकादशगणभृद्व्यतिरिक्तेषु न द्वादशाङ्गीरचनाहेतुः, न च ग्राहकयोग्यतामापन्ना अपि गणभृतो भगवन्तमन्तरेण त्रिपदवाप्तावपि तथासामर्थ्यभाजः, अत एव 'संजोगसिद्धीइ फलं वयंति' (आव १०२) प्रवचनवचनम्, अत एव च क्रियमाणापि त्रिपदी नेदानीं फलवती, द्वयोरपि दायकग्राहकयोर्योग्यताया अभावात्, किंच–त्रिपदीदृष्टान्तेन केवलं सूत्रं न फलवदित्यपि कुपाक्षिकस्तिरस्करणीयः, केवलसूत्रवादी प्रवचने मिथ्यादृगपि भणितः, यदागमः–"अपरिच्छिअसुयनिहसस्स केवलमभिन्नसुत्तचारिस्स। सव्वुज्जमेणवि कयं अण्णाणतवे बहुं पडइ ॥१॥ (४१५) इति श्रीउपदेशमालायामिति गाथार्थः॥५१॥ अथ योग्यतायामयोग्यतायां चोदाहरणमाह—

घडमपि कज्जजणयं सक्कपयत्तेण जुग्गयाजुत्ते। आगासखण्डकरणे असमत्थं सक्कबलजुत्तं ॥५२॥

वज्रमपि कार्यजनकं शक्रप्रयत्नेन योग्यतायुक्ते वस्तुनि स्यात्, आकाशखण्डकरणे शक्रेण निजबलयुक्तमप्यसमर्थम्, आकाशस्य खण्डशो भवनायोग्यत्वात्, एवं पुरुषायत्तमपि सूत्रं दायकग्राहकयोग्यतायामेव फलवत्, नान्यथेति वज्रदृष्टान्त इति गाथार्थः ॥५२॥ अथ पुनरपि सर्वप्रतीतं दृष्टान्तान्तरमाह—

**धेणू वावि सदुद्धा दोहणकिरिआइकुसलमायत्ता। दुद्धपया विवरीआ विवरीअपया उदाहरणं ॥८३॥**

'वा' अथवा 'धेनुरपि' गौरपि 'दोहनक्रियादिकुशलायत्ता' दोहनस्य क्रिया,आदिशब्दात् पिण्डपयोदानसुस्थानरक्षणादिकं ग्राह्यं, तत्र कुशलो-निपुणः मकारोऽलाक्षणिकस्तस्यायत्ता-वशगा 'दुग्धप्रदा' दुग्धदायिनी स्याद्, विपरीता दोहनक्रियाद्यकुशलायत्ता 'विपरीतप्रदा' दुग्धदानापेक्षया विपरीतं फलं प्रददातीत्यत्रोदाहरणमित्यक्षरार्थः॥ भावार्थस्त्वयं-यस्तु पिण्डदानादिकुशलो दोहनक्रियादिकुशलश्च स गोः सकाशात् दुग्धमवाप्नोति, तत्राकुशलश्च गोः शरीरे दुग्धमस्तीति सामान्येन दुग्धज्ञानवान् दुग्धावाप्तिमिच्छन् यत्र क्वाप्यङ्गे करस्पर्शनकरणेन लकुटादिना हननेन यत्र क्वाप्यङ्गे अस्त्रादिना छिद्रकरणेन वा केवलं मूत्ररुधिरादिकमेवावाप्नोति, सर्वथा क्रियारहितश्च गोघातपातकभाग् स्यात्, पिण्डादिदानक्रियायुक्तोऽपि दोहनादिक्रियाशून्यः स्वभावसिद्धच्छगणमूत्रादिलाभभाग्। अत्र सार्थवाहराज्ञोर्दृष्टान्तः प्रतीत एव, तथापि दिग्दर्शनं त्वेवमिह-कश्चित्सार्थवाहोऽनेकपण्यभृद् धेनुविरहिते द्वीपे वाणिज्यनिमित्तं जिगमिषुः सधेनुकः समुद्रमुत्तीर्य जिगमिषिते द्वीपे प्राप्तः, तत्र संतुष्ट्यर्थं राज्ञे रूप्यकच्चोलके पायसं प्रक्षिप्य प्रत्यहं प्राभृतीकरोति, अस्मदीयदेशवृक्षरस इति राज्ञा पृष्टो भणति, एकदा च कृतकृत्यो राज्ञो मुत्कलवचनेच्छया राजानं भणितवान्-स्वदेशं राजाज्ञया जिगमिषुरित्युक्ते राजोवाच-पायसरसमस्मभ्यं को दास्यति ?, तदनु राज्ञोऽनुरोधेन तेन सा गौर्दत्ता, उक्तं च-एतदीयो रसो मया दीयमान आसीदित्युक्त्वा स सार्थवाहः स्वदेशं प्रस्थितः, राज्ञा च सा गौश्चित्रशालायामनेकविधखर्जूरद्राक्षेक्षुरसादिखाद्यपानादिविधिना पोष्यमाणा गोमयमूत्रादिकरणावसरे यदा पुच्छमूर्ध्वीकरोति तदानीं राजपुरुषाः रूप्यकच्चोलकादिकं पात्रं बिभ्रति, तदानीं वर्णास्वादादिना गोमयादेर्वैपरीत्यं दृष्ट्वा वञ्चितः खलु तेन पापात्मनाऽहमपीति रुष्टः सन् समुद्र-

भध्यान् पश्चादानायित, सक्रोध भणितो– भो! मामपि त्वं वञ्चितवानित्यादि भणित्वा प्राक्तनव्यतिकरं प्रोक्तवान्, तत् श्रुत्वा सायवाहेन भणित–भो राजन्! नहि किमपि वस्तुजातं स्वरूपेण सदैव फलवद्भवति, किं तु यथोचितक्रियाविधिरेव, क्रियाश्च सम्यगाम्नायगम्या, आम्नायोऽपि तन्निपुणपुरुषादेव लभ्यो, नान्यथेति भणित्वा तेषां शिक्षानिमित्तं स्वयमेव दोहनक्रियायां प्रवृत्त, भणितवांश्च–अनेनैव विधिनाऽस्माद् वृक्षाद्रसो प्राप्यो नान्यथेति, यावत् यावत्पायसनिष्पत्तिस्तावत्सर्वमपि विहितवान्, दृष्ट्वा च ते राजपुरुषास्तथैव कृतवन्तोऽभक्षयन्तश्च समीहितं पायसमिति दृष्टान्तः। इति गाथार्थः॥५३॥ अथोक्तं दृष्टान्तं दार्ष्टान्तिकेन योजयितुमाह—

धेणू सुत्तं वच्छा निज्जुत्ती वित्तिपमुहअणुजोगी। दोहणकिरिआकुसलो उवहाणं पिंडपयदाणं ॥५४॥

सूत्रं तावद्धेनुः, तस्य निर्युक्तिर्वत्सा, यथा वत्सा दुग्धदानाभिमुखां गां करोति तथाऽर्थदानाभिमुखं सूत्र निर्युक्तिः करोति, तत्र दोहनक्रियाकुशलः वृत्तिप्रमुखानुयोगी, तत्रानुयोग–सूत्रेण सहार्थस्यानुकूलयोजनालक्षण स विद्यते यस्य सोऽनुयोगी, वृत्तिप्रमुखै–वृत्तिभाष्यचूर्णिप्रभृतिभिरनुयोगी, वृत्त्यादिना गुरुसमीपेऽधिगतसम्यगाम्नाय इत्यर्थः, यदागम–"सुत्तत्थो खलु पढमो बीओ निज्जुत्तिमीसिओ भणिओ। तइओ अ निरवसेसो एस विही होइ अणुओगे॥१॥त्ति" भग० श०२५ उ२ (९४५) तत्रोपधानं–श्रुताराधनतपोविशेषः तत्पिण्डपयोदानं, गौरपि पिण्डपयोदानादिना प्रगुणीकृतैव दुग्धदात्रीति गोपालस्यापि प्रतीतं, न पुनरचारिताऽपीति, एतेन ये केऽपियोगोपधानादिकमन्तरेणापि पठनपाठनादिकं कुर्वन्ति ते तृणादिदानाभावेन कम्पमानशरीरक्षेपमात्रां गां दुहन्तीति बोध्या इत्यपि ज्ञापितमिति दार्ष्टान्तिकयोजनेति गाथार्थः ॥५४॥ अथोक्त सूत्र कोपलभ्यते इति दर्शयति—

**एवं फलवं सुत्तं तित्थयरपवट्टिअंमि तित्थंमि । तित्थं पुण अच्छिन्नं वीरस्स य जाव दुप्पसहो ॥५५॥**

'एवम्' उक्तदृष्टान्तेन तीर्थसूत्रं फलवद्, दृश्यते इति गम्यं, तत्रोक्तसामग्र्या विद्यमानत्वात्, तीर्थं च कियत्कालं भवतीत्याह-तीर्थं पुनरच्छिन्नं यावद्दुप्पसभसूरिस्तावदनवरतं वर्त्तते, कस्य ?-वीरस्य, यदागमः-"जंबूदीवे णं भंते ! दीवे भारहे वासे इमीसे ओसप्पिणीए देवाणुप्पिआणं केवइअं कालं तित्थं अणुसज्जिस्सइ ?, गोअमा ! जंबूदीवे दीवे भारहे वासे इमीसे ओसप्पिणीए मम इक्कवीसं वाससहस्साइं तित्थं अणुसज्जिस्सइ"त्ति श्रीभग० श० २० उ० ८ (सू. ६८०) इति गाथार्थः ॥५५॥ अथ परम्पराशरणं सूत्रमिति द्वितीयं विकल्पं सम्यगितिकृत्वा समर्थयन्नाह—

**तेण परंपरसरणं सुत्तं तित्थस्स सम्मयं णेअं । सेसा मयगोपासे भमंति पयपाणआसाए ॥५६॥**

'तेन' प्रागुक्तयुक्तिप्रकारेण परम्पराशरणं सूत्रं भवति, परम्परा च तीर्थं, तच्च पुरुषपारंपर्याऽच्छिन्नमितिकृत्वा पुस्तकशरणं न भवति, पुस्तकलिखनकालात् पूर्वं सूत्रस्याभावापत्त्या लिखनमप्युच्छिन्नसंकथं कथं पुस्तकशरणता सूत्रस्येति कुपाक्षिकाणामनिष्टं, यतः परम्पराशरणं तत एव सम्प्रत्यागमः परम्पराविशिष्टस्तृतीय एव, यदागमः-"आगमे तिविहे पं०तं०-अत्तागमे अणंतरागमे परंपरागमे"त्ति श्री अनु० (सू. १४४ व. २१९) तत्राद्यौ गणधरशिष्यान्तौ, तृतीयस्तु तीर्थपर्यवसायीति, तदेव सूत्रं तीर्थसम्मतं ज्ञेयं, शेषाः-तीर्थबाह्या वक्ष्यमाणाः कुपाक्षिकाः पयःपानाशया मृतगोः पार्श्वे भ्रमन्ति, उक्तलक्षणयोग्यताया अभावाद्, आस्तां पयःपानाशापूर्त्तिः दूरे, लोकनिंदास्पदमेव भवन्तीतिगाथार्थः ॥५६॥ अथ वक्ष्यमाणयुक्त्या कुपाक्षिकाभ्युपगतं सूत्रमेव न भवति, किंतु सूत्राभास एव, स च तन्मूलस्याभासत्वे सति सिद्ध्यतीति तन्मूलस्याभासत्वमाह—

छिन्नुब्भावितित्था तित्थामासाइठवणमइनिपुणा। पासंता पासता पासेअघा पयसीणं ॥५७॥

छिन्नं-त्रुटितमितियावत् पूर्वक्रमप्रापित-प्राधुष्कत तीर्थं यैस्ते छिन्नोद्भावितीर्थाः, न च दिगम्बरस्य छिन्नत्वबुद्धिर्नासीदिति शङ्कनीयं, गुरुणोक्तं-सम्प्रति जिनकल्पो व्युच्छिन्नः, तत् श्रुत्वा मयि विद्यमाने कथं व्युच्छिन्नो भण्यते इति भणित्वा निर्गत, अहं व्युच्छिन्नमपि जिनकल्पं प्रकटीकरोमीतिबुद्ध्या जिनकल्पारम्भक्रमेण तीर्थं विकल्पितमिति शिवभूतेरपि तथास्वभावानपायात्, किंलक्षणास्ते ?-'तीर्थाभासस्थापनमतिनिपुणा' तीर्थाभासस्थापने या मतिस्तया निपुणाः, असतोऽपि वस्तुनः सद्भूतवस्तुसमताबुद्धिजननसामर्थ्यं निपुणत्वमन्तरेण न भवतीति, यदुक्तं-"यथास्थितं वस्तु दिशन्नधीश!, न तादृशं कौशलमाश्रितोऽसि। तुरङ्गशृङ्गाण्युपपादयद्भ्यो, नमः परेभ्यो नय(नव)पण्डितेभ्यः॥१॥ इति द्वात्रिंशिकायां। नचैतद्वर्णनं लाक्षणिकमिति वाच्यम्, अत्रापि तथैवाभ्युपगमात्, ते च के?-पाशान्ताः-दिगम्बरादिपाशपर्यन्ताः, प्रतिविद्यामं व्यक्त्या वक्ष्यमाणाः, किंलक्षणाः?-'प्रास्वन्ताः' प्रकर्षेणासूनां-प्राणानां प्रकृते ज्ञानादिभावप्राणानामन्तो-विनाशो येषां ते तथा, उन्मार्गदेशनादिना क्लिष्टकर्मोपार्जनेनानन्तफलमभ्यबोधेः समभवात्, यद्वा प्रकर्षेणासूनां-भावप्राणानां तदुपदेशवर्त्तिनां तदनुकूलप्रवृत्तिमतां वा अन्तो येभ्यस्ते तथा, अन्येषामपि दुर्लभबोधिहेतवः, स्वयं नष्टाः परान्नाशयन्तीत्यर्थः, अत एव किंलक्षणा ?-प्रयत्नेन दृश्या'- दर्शनीयाः, यथादिमहत्प्रयोजनविशेषे तैः सह वचनप्रवृत्तिः कर्तव्या, नान्यथा, प्रवचने 'न हु उम्मा सारिसा ददठ'मित्यादिना तद्दर्शनस्य पातकहेतुत्वेन भणितत्वात्, तथ प्राग्दर्शितमिति गाथार्थः ॥५७॥ अथ पुनरपि युक्तिदार्ढ्यहेतवे प्रासङ्गिकमाह—

तेसुवि गुणिणमपमुहा गुत्थयसरणा परंपरासुद्धा। साहारण सरूव तेसिं पासंगिअं भणिमो ॥५८॥

'तेष्वपि' दिगम्बरादिष्वपि पूर्णिमाप्रमुखाः 'पुस्तकशरणाः' पुस्तकमेव शरणं येषां ते तथा, परम्पराशून्याः, किमस्माकं परम्परया प्रयोजनं ?, पुस्तकलिखितसिद्धान्तं शरणीकृत्य प्रवर्त्तामहे इत्यसमीक्ष्यभाषिणः,तेषां प्रासङ्गिकं–साधारणस्वरूपं भणाम इति गाथार्थः ॥५८॥ अथ ते तीर्थमध्यवर्त्तिनो न भवन्तीत्याह—

सोहम्मावच्चिज्जा अच्छिन्ना जाव दुप्पसहसूरी। तेहिंतो ते भिन्ना जं ते पुत्थाउ नो जाया ॥५९॥

सौधर्मापत्यान्यच्छिन्नानि यावद्दुष्प्रसभसूरिः,व्युच्छिन्ने च तीर्थे तीर्थकरमन्तरेण केवलिनाऽपि तीर्थं प्रकटीकर्तुमशक्यमिति प्राक् प्रपञ्चितं, पूर्णिमादयस्तु श्रीसुधर्मापत्येभ्यो भिन्ना एव, तत्र हेतुमाह–'जं ते' त्ति यस्मात् ते श्रीसुधर्मापत्यानि न पुस्तकाज्जाताः, यो यथोत्पद्यते तज्जातीयस्तेनैव विधिना, यथा गर्भजाद्गर्भजोत्पत्तिर्न पुनः संमूर्च्छिमादपि, या तु गर्भजात् संमूर्च्छिमोत्पत्तिः सा च न तदपत्यव्यवहारहेतुः, अपत्योत्पत्तिप्रकाराद्भिन्नप्रकारेणैवोत्पत्तेः, न हि मातृशरीरोत्पन्नाऽपि षट्पदी भगिनीव्यवहारविषयः, भगिन्युत्पत्तिप्रकाराद्भिन्नप्रकारेणैवोत्पत्तेः, एवं पूर्णिमादिष्वपि योज्यं, तदेवं तीर्थे समुत्पन्ना अपि पौर्णिमीयकादयो न साधुवत्समुत्पन्नाः, किंतु पुस्तकमूलकत्वेन भिन्नप्रकारेणोत्पन्नाः, यथा मातुः शरीरे षट्पदीति गाथार्थः ॥५९॥ अथ पुस्तकशरणानां यन्न संभवति तद्दर्शनाय गाथाद्वयेन दिशमाह—

पंच परमेट्ठि दसविह सामायारी अ पंच ववहारा। वायणजुग्गाजुग्गा जुग्गाणवि वायणंमि विही ॥६०॥

छेओवट्ठावणिअप्पमुहुच्चाराइ णाणमाईणं। आराहणाइविहओ पुत्थयदिट्ठीण नहु हुंति ॥६१॥

पुस्तकवादिनां पञ्च परमेष्ठिनस्तीर्थाभिमता न संभवन्ति, तन्मते चार्हदादीनां भिन्नत्वादिति, 'पंच खलु तित्थयर'मित्यादि-

गाथासु वक्ष्यते, तथा 'दशविधसामाचारी' 'इच्छामिच्छे'त्यादिदशप्रकारा गुरुशिष्यसंबन्धे सत्येव संभवति, तथा पञ्च व्यवहाराः–आगमश्रुताज्ञाधारणाजीतलक्षणा न संभवन्ति, तत्रापि श्रुतजीतौ केवलगुर्वायत्तावेव, कथं पुस्तकायत्ताविति, तथाऽयं वाचनायोग्योऽयं च नेति वाचनायोग्यायोग्यविचारो न संभवति, पुस्तकस्य तत्रासामर्थ्यात्, न हि पुस्तकं योग्यमयोग्यं च विवेचयितुं शक्नोति, तथा वाचनायां विधिः–उद्देशसमुद्देशादिलक्षणो गुरुक्रमायातो न पुस्तकसाध्यः, तथा छेदोपस्थापनीयं चारित्रं गुरुमन्तरेण न समवस्थेयं, गुरुणैव सामायिकोच्छेदपूर्वकं तस्यारोप्यमाणत्वात्, आदिशब्दात् सामायिकादीनामपि यथासंभवमायोज्यं, तथा ज्ञानादीनामाराधनविषयोऽपि योगाद्यनुष्ठानपूर्वकमध्ययनाध्यापनादिलक्षणः पुस्तकदृष्टीनां 'न हु'नैव, समवन्तीति क्रिया सर्वत्रापि संघटनीया, विस्तरजिज्ञासुना तु मत्कृतपर्युषणाष्टशतकटीकाऽवलोकनीयेति गाथायुग्मार्थः ॥६०–६१॥ अथ पुस्तकवादिनो यदेव पुस्तके लिखितं तदेव प्रमाणं, न पुनः परम्परायातमपीति वदन्ति, तदसम्यक्, यतः क्वापि पुस्तकेऽपीत्थं लिखितं नास्ति यत्पुस्तकलिखितादन्यदसम्यग्, यद्वा पुस्तकं दृष्ट्वा ये धर्मं प्ररूपयिष्यन्ति ते सम्यक्तयाऽवगन्तव्या इत्यपि क्वापि पुस्तके लिखितं, यद्वोच्छिन्नं तीर्थमस्मत्कादाचार्यात् प्रकटीभविष्यतीत्यपि क्वापि नास्ति, कथमते धाष्टर्यमवलम्ब्य पुस्तकं शरणं प्रपद्यन्ते ?, एवं 'पिता मे कुमारब्रह्मचारी'ति न्यायमापन्नानामप्यक्षसिद्धमेव मृषाभाषित्वं, यतो यथं पुस्तकलिखितप्रमाणवादिन इत्येवं भाषमाणा अपि पुस्तकालिखितमप्यनन्तरोक्तं स्वीकुर्वन्ति, परिहरन्ति च पुस्तकलिखितमपि दशविधसामाचारीपञ्चव्यवहारादिकमच्छिन्नतीर्थं दुप्पसहं यावदित्यादि च ॥ एवं सत्यपि पुस्तकवादित्वे लौकिकदृष्टान्तमाह–

ववहारिअकुलवडिओ आयारो घरउवक्खरो सयलो। किं लेक्खगमि लिहिओ? ता कह सूरीण कुलवडिओ? ॥६२॥

[illegible]-व्यावहारिककुलक्रमायातः, उपलक्षणात् राजकुलक्रमायातोऽपि ग्राह्यः, आचारः-प्रवृत्तिनिवृत्तिरूपः [illegible] नानाभरण[illegible] शयनासनभोजनभाजनादीनि च यावत् स्त्रीपुत्रपुत्र्यादयश्च गोमहिष्यादयश्च सक- [illegible] लिखितो लभ्यते ?, अपितु न लभ्यते, तर्हि सूरिकुलपतित आचारः कथं पुस्तके लिखितः संभवेत् ?, न च [illegible] न संभवतीति शङ्कनीयमिष्टापत्तेः, नहि राजकुलाचारादि लिखितानुसारेणैव प्रवर्त्तते, किं तु परम्परायातमेव, [illegible], यत्तु किञ्चिल्लिखितं दृश्यते तदपि परम्परागताचारस्यैकदेशो बोध्यः, तेन केवललिखनानुसारेण प्रवृत्ति- [illegible], एवं सत्यपि यः कश्चिदिभ्यपुत्रो लेख्यकं दृष्ट्वा यदेव लेख्यके लिखितं तदेव स्वकीयं, शेषं तु नात्मीयमिति [illegible], तथा पुस्तकवादिनोऽपि केवलसूत्रवादिनो वा बोध्या इति गाथार्थः ॥६२॥

[illegible] परित्यजन् केन कीदृशो भण्यते ?, तथा पुस्तकवादिनोऽपि केवलसूत्रवादिनो वा बोध्या इति गाथार्थः ॥६२॥

[illegible] महामृषाभाष्येवेति ज्ञापनाय प्रथमं सिद्धान्तस्वरूपमाह—

[illegible] सुणिओ बीओ अणंतरागमओ। तत्तो सवणपरंपरसमागओ तइअ आगमओ ॥६३॥

[illegible] 'तात्स्थ्यात् तद्व्यपदेश' इति न्यायादात्मागमवतः सकाशात् श्रुतो द्वितीयोऽनन्तरागमो भवति, 'ततो' [illegible] श्रवणपरम्परासमागतस्तृतीय आगमकः, परम्परागमक इत्यर्थः, स च द्वितीयागमसकाशात् श्रवणसमुत्थोऽपि [illegible] तीर्थपर्यन्तस्थायीति सिद्धान्तक्रमः, न पुनः प्रथमाभावे द्वितीयो द्वितीयाभावे च तृतीयो भवतीति गाथार्थः ॥६३॥

[illegible] सिद्धान्तवादी कथं प्रश्नविषयीकार्य इति दर्शयति—

सूरिपरंपररहिओ पुत्थगलिहिओ अ जो उ सिद्धंतो। तिण्ह खलु आगमाणं केरिसओ केण नामेणं ? ॥६४॥

शरिपरम्परारहित' पुस्तकलिखितश्च सिद्धान्त' प्रमाणमागमानां केन नाम्ना कीदृशः ?, किमात्मागम उतानन्तरागमः परम्परागमो वेति परस्योदीरणेति गाथार्थ ॥६४॥ अथैवं पृष्टः परं कीदृग् स्यादित्याह—

एव म्खलु पुच्छिओ सो वेसातणओव्व जणयमसुणतो। कोऽवि अ होहि अवत्तं संणेई एलमूओव्व ॥६५॥

एवमनन्तरोक्तप्रकारेण, खलुरवधारणे, पृष्ट सन् स कुपाक्षिको जनकमजानन् 'वेश्यासनुज इव' पण्याङ्गनापुत्रवत् कोऽपि च 'होही'ति भविष्यतीत्यव्यक्त सिद्धान्त संश्रयति, किंवत् ?—एडमूकवत्, अयं भाव'— यथा एडमूकः केनचित् कयाश्चित् सञ्ज्ञाविशेषेण पृष्ट' सन् वक्तुमशक्त' सन् करादिना संज्ञां करोति, परं तथा संज्ञां करोति यथाऽन्येषां सम्यग्वस्तुपरिज्ञान भवति, अयं तु सिद्धान्तमव्यक्तमेव सश्रयति, यथा वेश्यापुत्रो जनक पृष्टो हि कोऽपीत्यव्यक्त भाषते, दृष्टान्तद्वयेन एडमूकवेश्यातनूजकल्प कुपाक्षिकः सिद्धान्तवादी प्रदर्शित', आस्तां कुपाक्षिकस्तथा आचारहीनोऽपि ब्रुवाणस्तथैव भवति, यदागमः—"दुवसुमुणी अणाणाए तुच्छए गिलायइ वत्तए"त्ति श्रीआचाराङ्गे लोकवि० (उ० ६ सू–१०१) एतट्टीकादेशो यथा—कश्चित्तत्तथीतिविषये केनचित्पृष्टो ऽपरिज्ञानात् ग्लायति वक्तुं, ज्ञानसमन्वितो वा चारित्ररिक्त' पूजासत्कारभयात् शुद्धमार्गप्ररूपणावसरे ग्लायति यथावस्थितं प्रज्ञापयितु"मित्यादि आ०, इति गाथार्थ ॥६५॥ अथैवमागममव्यक्त ब्रुवाणस्य किं स्यादित्याह—

जइ आगमो अवत्तो विगप्पिअत्थो तहेव तम्मूलं। तित्थयरोवि अवत्तो न तयवयाइ अवत्ता ॥ ६६ ॥

कुपाक्षिकाणां विकल्पितार्थ —निजनिजमतानुसारेण विकल्पितोऽर्थो यस्यैवंविध आगमो यथाऽव्यक्तः, विकल्पितार्थो हि सिद्धान्तो जारगर्भ इव सज्जनपर्षदव्यक्त एव स्यादित्यर्थं', तथा तन्मूलं तीर्थकरोऽप्यव्यक्त एव, यथा केनचित्पृष्टं ननु भोः एता

दृगर्थवान् सिद्धान्तस्तव केन गुरुणा पाठित इत्युक्ते विकल्पितार्थप्ररूपकं देवदत्तादिना कल्पितं निजगुरुं वक्तुमक्षम एव स्यादिति जगत्स्थितिः, एवं तन्मूले चाव्यक्ते तदपत्यान्यप्यव्यक्तान्येव, अत एवागमे निह्नवा अव्यक्ता इति भणितं प्राक् प्रदर्शितमितिगाथार्थः ॥६६॥ अथ पुस्तकवादिनां कस्तीर्थंकर इत्याह—

**उसभाईजिणणामारोवेणाणेगहावि एगजणो। निअनिअमयाइभूओ पुत्थयसिद्धंततित्थयरो ॥६७॥**

पुस्तकसिद्धान्तस्य तीर्थङ्करो निजनिजमताकर्षकः शिवभूतिचन्द्रप्रभादिरेकजनः—एक एव जन एकजनः अनेकधा—अनेकस्वरूपः, केन ?—ऋषभादिजिननाम्ना समारोपेण 'अतस्मिंस्तदध्यवसाय आरोप' इति वचनात् शिवभूत्यादावेकस्मिन्नेवानेकेषां तीर्थकृतामुपलक्षणाद् गणधरादीनां च नाम्नामारोपः कृतः तेन हेतुभूतेनेति गाथार्थः ॥६७॥ अथ नाम्नामारोपस्तेन किं जातमित्याह—

**तेणं तित्थाभासे तित्थयरो तित्थतित्थकरनामा। सव्वप्पयारपावो भिन्नो भिन्नुत्ति विण्णेओ ॥६८॥**

येन कारणेन ऋषभादिजिननाम्नामारोपस्तेनैव कारणेन तीर्थाभासे—कुपाक्षिकवर्ग्गे तीर्थकरस्तीर्थतीर्थकरनामा भवति, तीर्थे यस्तीर्थकरस्तस्यैव नाम यस्य स तीर्थतीर्थकरनामेत्यर्थः, यत एव नाम्नामारोपः कृतः अत एव पृष्टाः सन्तो देवोऽर्हन्नित्यादि भाषते, तथा चारोपितनाम्ना कुपाक्षिकाभिमततीर्थकृत्कीदृशः ?—'सर्वप्रकारपापः' सर्वात्मना पापभूत इत्यर्थः, स च प्रति कुपाक्षिकं भिन्न एवेतिकृत्वा भिन्नो भिन्नो बोध्यः, यथा दिगम्बराणां शिवभूतिः पौर्णिमीयकानां चन्द्रप्रभाचार्य इत्यादिरितिगाथार्थः ॥६८॥ नन्वेवमारोपः कथं भवतीति पराशङ्कामपाकरोति—

**सव्वेहिं सद्देहिं सव्वपयत्थावि हुंति अहिलप्पा। आरोवेण जहिच्छिअसंकेओ जेणमणिवारो ॥६९॥**

आरोपेण सर्वेऽपि पदार्थाः सर्वं शब्दैरभिलाप्या भवन्ति, येन कारणेन यथेप्सितसंकेतो—यथारुचि विकल्पितः संकेतो सविवार्य इति गाथार्थः ॥६९॥ अथ यथेप्सितसंकेते उदाहरणमाह—

जह चेइअसद्देण नाणं साहू अ सादिपमुहाइं। लुंपगविगप्पिआइं तेण ते तम्मए अत्था ॥७०॥

यथेत्युदाहरणोपन्यासे, चैत्यशब्देन ज्ञानं साधुश्च श्राद्धप्रमुखाणि—श्राद्धादीनि 'लुम्पकविकल्पितानि' लुम्पकेन संकेतविषयीकृतानि, तेन प्रकारेण तन्मते चैत्यशब्देन तेऽर्था बोध्याः, यथा वर्द्धमानादिनाम्ना लोके निजनिजपुत्रादीनामभिसंधारणं भवति तथा लुम्पकमतीयानां चैत्यशब्देन ज्ञानादीनामभिसंधारणं भवति, अत एव तेषां सिद्धान्तो न जैनसिद्धान्तः, किन्तु लुम्पकमतसिद्धान्त एव, वस्तुगत्या तु अयं एव सिद्धान्तः, स च भिन्न एवेति गाथार्थः ॥७०॥ अथ प्रस्तुतं कुपाक्षिकेषु योजयितुं गाथापञ्चकमाह—

एवं खमणा तित्थयर इत्थीमुत्तिनिसेहगं भणइ। पुण्णिमिआ पुण पुण्णिमपक्खिअदक्खं जिणं बिंति ॥७१॥

इत्थीण जिणपूआपडिसेहपरायणंपि खरयरया। अंचलिआ अचलयं परूवयंतंपि सड्ढाणं ॥७२॥

फलपूआइनिसेहं कुणमाणं सड्ढपुण्णिमो अरिहं। सुअदेवीथुइपमुहं पडिसेहंतं तु आगमिआ ॥७३॥

जिणपडिमाइनिसेहोवयारसकुसलं लवंति लुंपागा। तित्थद्दुपि पमाणं वयंतमरिहंतमवि कडुओ ॥७४॥

बीजो वण्णविहीणो पडिमं मोत्तूण लुंपगं सच्च। अणुमित्तकम्मयघं धम्मममासंतमवि पासो ॥७५॥

एवं प्रागुक्तसंकेतादिप्रकारेणारोपे सति, तत्तुरसधारणे, क्षपणकाः स्त्रीमुक्तिनिषेधकं तीर्थंकरं भणन्ति, पौर्णिमीयकाः पुनः 'पूर्णिमापाक्षिकदक्षं' पूर्णिमायां पाक्षिकव्यवस्थापने यो दक्षस्तं जिनं ब्रुवन्ति, तथा पर्वातिरिक्तदिने पौषध(स्त्रीणां जिनपूजायाश्च)निषेधपरायण

खरतराः, आञ्चलिकाः श्राद्धानां सामायिकादावञ्चल-पल्लवं प्ररूपयन्तं तीर्थकरं,फलपूजादिनिषेधं कुर्वन्तमर्हन्तं सार्द्धपौर्णिमीयकाः, श्रुतदेवतास्तुतिप्रमुखं प्रतिषेधयन्तमागमिकाः, जिनप्रतिमानिषेधोपदेशकुशलं लुम्पाका जिनं लपन्ति,तीर्थार्द्धं-श्रावकश्राविकालक्षणमपि प्रमाणं वदन्तमर्हन्तं कडुकाः, 'बीजो' बीजाख्यो वर्णैरकारादिभिर्द्रव्यश्रुतहेतुभिरपि हीनः प्रायोऽतिमूर्खः प्रतिमां मुक्त्वा लुम्पाकं सत्यं-लुम्पाकमते प्रतिमानङ्गीकारस्तदसत्यं, शेषं तु सत्यमेवेति वदन्तमर्हन्तम्, अणुमात्रमपि कर्म्मबन्धो यत्रैवंविधं धर्ममभाषमाणं पाशोऽर्हन्तं वदतीति दशानामपि निजानिजविकल्पारूढास्तीर्थकृतो भिन्नभिन्ना एवेति गाथापञ्चकार्थः ॥ ७१-७२-७३-७४-७५ ॥ अथ गाथापञ्चकोपसंहारमाह—

**एवं सव्वकुवक्खा पडिवण्णा भिण्णभिण्णतित्थयरं। परमत्था सिवभूइप्पमुहे ते तारिसे नऽन्ने ॥७६॥**

**सिद्धवि य तम्मग्गाराहणपुव्वा य एवमवि सेसा। तित्थभिहाणाभासा भासाभासा य किरियासु ॥७७॥**

एवं प्रागुक्ताः सर्वे कुपाक्षिकाः भिन्नभिन्नतीर्थकरं प्रतिपन्नाः, ते च तीर्थकराः 'परमार्थात्' वस्तुगत्या शिवभूतिप्रमुखा एव, नान्ये, तथाविधप्ररूपणाविशिष्टा न तीर्थसम्मता ऋषभादयः, विशेषणभेदे च विशिष्टस्यावश्यंभेदाद्,एकनामवाच्याश्चानेकेऽपि पदार्था भवन्ति, अतो नाम्नामनेकार्थताऽपि, तत्र विशेषप्रतिपत्तिर्विशेषणैरेव स्यात्, यथा 'गोपाङ्गनासङ्गनिबद्धरङ्गो, गीर्वाणगेयाङ्गगुणो जिनोऽव्यादि'त्यत्राद्यपदवाच्यार्थविशेषणेन जिनशब्देन नारायण एवावगम्यते, न तु जैनाभिमतोऽर्हन्, तथा 'पायात्सदा नः पुरुषोत्तमो यो, जितेन्द्रियोऽनङ्गकुरङ्गहेतु'रित्यत्रोत्तरपदे वाच्यार्थविशेषणान्वितेन पुरुषोत्तमशब्देनार्हन्नेव, न तु नारायणः, एवं सर्वत्रापि नाम्नामभेदेऽपि विशेषणभेदाद्भेदः, अन्यथा जगद्व्यवस्थाभङ्गः स्यात्, न हि भूपतिनामा रोरः कश्चित् तन्नामवतो राज्ञो राज्य-

संभोगी स्यादितिगाथार्थः ॥७६॥ अथाद्यप्रत्तिसिद्धादयोऽपि कुपाक्षिकाणां मिश्रा एवेति दर्शयति–सिद्धा अपि तन्मार्गाराधनपूर्वा ये ते तेषां सिद्धत्वेनाभिमता, ते च मिश्रा एव, न हि जैनैर्ये सिद्धा अभ्युपगतास्ते तथाभूताः, किं तु कुपाक्षिकविकल्पितक्रियातो विपरीता या जैनक्रिया तदाराधनयेति, 'एवमपि' अपिरेवार्थे एवमेव, शेषाः–आचार्यादयोऽपि मिश्राः, ते चाप्यप्रसिद्धा एव, किं लक्षणास्ते ?–तीर्थाभिधानाभासा –तीर्थे यान्यभिधानानि–साधुसाध्वीश्रावकश्राविकारूपाणि तथा देवोऽर्हन् सुसाधुर्गुरुः केवलिभाषितो धर्म इत्यादिना, एतैर्नामभिर्हेतुभूतैराभासो येषां ते तथा, नाम्ना साम्येनैव तीर्थसाम्य विप्रतीत्यर्थः, तथा भाषया इद सामायिकमय च पौषध इदं च प्रतिक्रमणमित्यादि यावत्पञ्च महाव्रतानि द्वादशाणुव्रतानीत्यादिरूपया आभासो येषां ते तथा, क्वासु ?–क्रियासु, तीर्थप्रवर्त्तितनाम्ना साम्यभाजोऽत्र एव तद्वदाभासन्ते इति क्रियासु भाषाभासाः, ननु कुपाक्षिकाणां क्रिया किमकामनिर्जराहेतुरज्ञानकष्टं चेति चेद्, उच्यते, सा क्रिया नाज्ञानकष्टं, नाप्यकामनिर्जरा, किं तु क्रियामात्रमुपवेशनोत्थानादिरूपमुच्यते, तदपि प्रतिसमयमनन्तसंसारहेतुरिति प्रागुक्तमिति गाथार्थः ॥७७॥ अथोक्तप्रकारेण सिद्धान्तस्यापि मिश्रत्वे सिद्धेऽपि विप्रेपतो दृष्टान्तेनैव मिश्रत्वं दर्शयितुमाह–

निअनिअमपठिइहेऊ अत्थो सव्वेसि सम्मओ नऽन्नो। सिद्धंतस्सवि सुद्धो पावो चसह्व परततो ॥७८॥

सर्वेषामपि मते सिद्धान्तस्यार्थो निजनिजमतस्थितिहेतुः, एवमर्थकल्पनेनास्माकं मतस्थितिर्नान्यथेति विकल्पः तदनुसारेणार्थो विकल्पितः, यथा चैत्यशब्देन साधुरित्यादि, जिनप्रतिमाया अर्थकल्पेन लुम्पकमतसमुच्छित्तिः स्यात्, अतः स्वमतस्थितिहेतुरेवार्थो विकल्पितः, यत्र तु व्यक्तशब्देन जिनप्रतिमा तत्रार्थस्यान्यथाकर्तुमशक्यत्वेन सूत्राणामेव त्यागः कृतो, यथा श्रीमहानिशी

थोपदेशमालादिकं, शुद्धपाठस्तु वृषभवत्परतन्त्र इत्यक्षरार्थः, भावार्थस्त्वयं–प्रथमस्तावत्कुपाक्षिकैर्नवीनविपरीतप्ररूपणादिकं विहितं, पश्चात्सिद्धान्तपाठस्तु यथास्थित एवाभ्युपगतः, तत्परावृत्तिकरणे शक्त्यभावात्, यस्य शक्तिरासीत् तैः पाठपरावृत्तिरपि विहिता, यथा दिगम्बरेण, अर्थस्य तु परावृत्तिः सर्वैरपि कर्तुं शक्यते, यथा चैत्यशब्देनास्माभिर्ज्ञानमुच्यते, नतु जिनप्रतिमा, वृत्त्यादावेवमर्थो नास्ति, किंतु जिनप्रतिमैव,ततः टीकादिकमस्माभिर्नाङ्गीक्रियते इत्याद्यसमञ्जसवादे समुत्सुकीभवन्ति, सिद्धान्तस्तु सूत्रार्थोभयात्मकः, स च तैर्नाभ्युपगतः, यस्तु केवलपाठः स च वृषभवत् परतन्त्रो, यत्र नीयते तत्र यातीतिगाथार्थः ॥७८॥ अथ पाठो वृषभवत् परतन्त्रस्तेन प्रकृते किं संपन्नमित्याह—

तेण विवरीअअत्थं भासिज्जंतं विअत्तभासाए। न य पुक्करेइ सुत्तं आगरिसपुरिसगयणुगइ ॥७९॥

येन कारणेन पाठः परतन्त्रस्तेन कारणेन विपरीतार्थतया भाष्यमाणं सूत्रं व्यक्तभाषया न च पूत्कुरुते, तत्र विशेषणद्वारा हेतुमाह–किंभूतं सूत्रं?–'आगरिसे'त्यादि आकर्षकपुरुषगत्यनुगति, रज्ज्वादिना गृहीत्वा पुरो गन्ता आकर्षकस्तस्य या गतिस्तस्या अनु–पश्चाद् गतिर्यस्य तदाकर्षपुरुषगत्यनुगति सूत्रम्, आकर्षको यत्र यत्र नयति तत्र यातीति वृषभोपमं सूत्रं, यो यथा विकल्प्यार्थं करोति तदेवार्थमनुगच्छति, अतः केवलसूत्रपाठस्तु सिद्धान्त एव न भवति, किंतु सूत्रार्थोभयात्मक इति गाथार्थः ॥७९॥ अथ केवलपाठः कीदृक् स्यादित्याह—

तेणेवागमपाढो न य ववहारप्पवायगो समए। भिन्नो वाऽभिन्नो वा भिन्नो निअमेण भिन्नत्थो ॥८०॥

येन कारणेनागमपाठो वृषभकल्पस्तेन कारणेनागमपाठो 'न च' नैव 'व्यवहारप्रवादकः' प्रवृत्तिनिवृत्तिरूपं व्यवहारं प्रवद-

संमोगी स्यादितिगाथार्थः ॥७६॥ अथाहदन्मिद्दादयोऽपि कुपाक्षिकाणां भिन्ना एवेति दर्शयति-सिद्धा अपि तन्मार्गाराधनपूर्वा ये I नसां सिद्धत्वेनाभिमता, I प भिन्ना एव, न हि जैनैर्ये सिद्धा अभ्युपगतास्ते तथाभूता, किं तु कुपाक्षिकविकल्पितक्रियातो विरचिता या जैनक्रिया तदाराधनयेति, 'एवमपि' अपिरवार्थे एवमेव, तेषां-आचार्यादयोऽपि भिन्नाः, ते चाप्यत्रसिद्धा एव, किं न्यनाम्ने ?-तीर्थाभिधानाभासा -तीर्थे यान्यभिधानानि-साधुसाध्वीश्रावकश्राविकारूपाणि तथा देवोऽर्हन् सुसाधुर्गुरुः केवलिभाषितो धर्म इत्यादिना, एतन्नामभिर्हेतुभूतैराभासो तेषां ते तथा, नाम्ना साम्येनैव तीर्थसाम्य विभ्रतीत्यर्थ, तथा भाषया इद सामायिकमप च पौषध इद च प्रतिक्रमणमित्यादि यावत्पञ्च महाव्रतानि द्वादशाणुव्रतानीत्यादिरूपया आभासो येषां ते तथा, कासु ?-क्रियासु, तीर्थवर्गितनाम्ना साम्यमात्रोक्त एव तद्दाभासन्ते इति क्रियासु भाषाभासा, ननु कुपाक्षिकाणां क्रिया किमकामनिर्जरातुल्याज्ञानकष्ट वनि चेत्, उच्यते, सा क्रिया नाज्ञानकष्ट, नाप्यकामनिर्जरा, किं तु क्रियामात्रमुपवेशनोत्थानादिरूपमुच्यते, तदपि प्रतिगतपमनन्तसंसारहेतुरिति प्रागुक्तमिति गाथार्थ ॥७७॥ अथोक्तप्रकारेण सिद्धान्तस्यापि भिन्नत्वे सिद्धेऽपि विशेषतो दृष्टान्तेन निमन्त्र दर्शयितुमाह—

निअनिअमयठिइहेऊ अत्थो सव्वेसि सम्मओ जत्थो। सिद्धंतस्सवि सुद्धो पाओ ससहुय परमतो ॥७८॥

सर्वेषामपि मत सिद्धान्तस्यार्थो निजनिजमतस्थितिहेतु, एवमयकल्पनेनास्माक मतस्थितिर्नान्यथेति विकल्पः तदनुसारेणार्थो विकल्पितः, यथा चैत्यगन्धन साधुरित्यादि, जिनप्रतिमाया अर्थकल्पेन लुम्पकमतमुच्छिन्नं स्यात्, अतः स्वमतस्थितिहेतुरेवार्थो विकल्पितः, यत्र तु लुम्पकमन्दन जिनप्रतिमा यथार्थस्यान्यथाकर्तुमशक्यत्वेन सूत्राणामेव त्यागः कृतो, यथा श्रीमहानिशी

श्रीवीरेण ज्ञापित इत्यर्थः सूचितः, पूर्णिमातिथौ च कुपाक्षिकवर्गेण संकेतो निम्मपितः, मुग्धजनविप्रतारणबुद्ध्या नवीनः संकेतो विहितः, यथाऽऽधुनिकैर्वणिजैरेकादश गणनीया इतिशब्दे पलायनं संकेतितं, क्वचिदेकत्रिंशच्छब्देनानुचितं, पञ्चत्रिंशच्छब्देनोचितं, तथा नवनवतिपाटकशब्देनैकसंख्या संकेतिता, एवमष्टनवतिशब्देन द्विसंख्या, यावत्पश्चानुपूर्व्याऽङ्कानां न्यूनत्वे संख्याधिक्यं संकेतितं,तथा कुपाक्षिकैः स्वमतव्यवस्थापनाय पाक्षिकशब्देन पूर्णिमा यावत् खरतरेण "सावयधम्मो अ वुच्छिन्नो" (दीपा०) इत्यत्र श्रावकधर्मः-प्रतिमास्वरूपो ग्राह्य इति विकल्पितं, तच्च तदीयानां प्रमाणं, न पुनस्तीर्थस्य, ततो विलक्षणत्वादिति गाथार्थः॥८३॥

अथात्मीयः शङ्कते—

नणु वेसिं आयरियप्पमुहा पच्चक्खतित्थआभासा। तित्थाउ हुंति भिन्ना कहण्णु अरिहंतसिद्धावि? ॥८४॥

इअ चे वुच्चइ निअगा आयरिआ तेसि वंदणिज्जत्तं। जो पण्णवेइ पुरओ भव्वाणं तेसि सो अरिहा ॥८५॥

सिद्धंतोवि समत्थो पुत्थयलिहिओऽवि तित्थठवणाए। पुरिसपरतंतरहिओ जो भासइ तेसि सो अरिहा ॥८६॥

सिद्धावि तदुवएसा उवलद्धा हुंति तेसि सद्धेज्जा। एवं गोअममाई गणहरवग्गोऽवि विण्णेओ॥८७॥

ननु भो अमीषामाचार्यादयो हि तीर्थाद्भिन्नास्तद्वदाभासरूपा अध्यक्षसिद्धाः, नु वितर्के, अर्हत्सिद्धावपि कथं भिन्ना इति पूर्वपक्षाशङ्केति गाथार्थः ॥८४॥ अथोत्तरमाह-इति चेदुच्यते, ये निजका-आत्मीयाः कुपाक्षिकमुख्या मताकर्षकाः तेषां वन्दनीयत्वं-वन्दनादियोग्यत्वं भव्यानां पुरस्तात् (यः) प्रज्ञापयति स तेषां-कुपाक्षिकाणामर्हन्, तीर्थसम्मतस्त्वर्हन् कुपाक्षिका द्रष्टुमप्यकल्प्या इति ब्रुवाण इत्यनयोर्भेद इति गाथार्थः ॥८५॥ अथवा प्रकारान्तरेणोत्तरमाह—पुस्तकलिखितोऽपि पुरुषपरतन्त्ररहितः सिद्धान्त-

तीति व्यवहारप्रसादकः, स न भवति, क ?–समये–जिनशासने, पाठः किंलक्षणो ?–भिन्नो वा अभिन्नो वा, उभयथापि 'भिन्नार्थो' भिन्न एव, सम्यग्व्यवहारप्रवर्तको न भवतीत्यर्थः, अत एवागमपुरस्कारेण प्रवृत्ता अप्यमी भिन्नभिन्नमार्गप्रादुष्कर्तारः, येन प्रत्येनार्थभेदे सिद्धान्तो भिन्न एव, अयं भावः–पाठभेदेऽपि यद्यर्थसाभेदस्तर्हि नियमाद्व्यवहारप्रवृत्तिरभेदेनैव स्यात्, वस्तुगत्या सिद्धान्ताभेदेऽर्थाभेद एव निदानम्, अत एव पाठतो भिन्नान्यप्यर्थतो भेदाभावमाश्रित्य प्रकरणान्यपि सूत्राणीव प्रमाणानि सम्यग्दृशां, उभयोरपि व्यवहारप्रसादने भेदाभावात्, अर्थभेदे हि सर्वत्रापि भेद एवेत्यर्थः, इति गाथार्थः ॥८०॥ अथ किंस्वरूपः सिद्धान्त इत्याह–

सुत्तत्थोभयरूवो सिद्धंतो सुअहराण निअमेण। सुत्तं पुण संकेइअनिनायरयणामयं सुमयं ॥८१॥

नियमेन 'श्रुतधराणां' बहुश्रुतानां 'सिद्धान्तः' सूत्रार्थोभयरूपः, न पुनः केवलं सूत्रपाठः सिद्धान्तः, यत सूत्रं संकेतितनिनादरचनामयम्–अमुकशब्देनामुकं वाच्यमित्येवं संकेतिता ये निनादाः–शब्दास्तेषां रचना गद्यपद्यात्मिका तन्मयं, सुमतम्–अतिशयेन सम्मतं, पूर्वमर्थेन सह शब्दानां संकेतमवगम्य पश्चात्सूत्ररचनेतिकृत्वा शब्दो यो यत्र संकेतितः स तद्वाचकतया स्वीकर्तव्य इति गाथार्थः ॥८१॥ अथ संकेतः कतिविध इत्याह–

संकेओ पुण दुविहो अणाइसिद्धो अ जुत्तजुत्तो अ। पढमो जिणिंदभणिओ बीओ भणिओ कुमयवक्खेहिं ॥८२॥

संकेतः पुनर्द्विविधः अनादिसिद्धो युक्तयुक्तश्च, प्रथमो जिनेन्द्रभणितः, द्वितीयः कुपाक्षिकैरिति गाथार्थः ॥८२॥ अथ दृष्टान्तमाह–

जह चरडिअपि सद्दो चउद्दसिसंकेइओ जिणिंदुत्तो। पुण्णिमतिहिसंकेओ निम्मविओ कुमयवग्गेण ॥८३॥

यथा पाक्षिकमितिशब्दः चतुर्दशीसंकेतितो जिनेन्द्रेणोक्तः अत्र जिनेन्द्रभणनेनानादिसिद्धोऽपि संकेतः ... समानतया भगवता

तित्थयरजीवरहिआ पडिमा पडिरूवगाई तह चेव । तित्थयरागारवसा वुद्धी तित्थयरविसयत्ति ॥९१॥

पडिमाएवि समाणं गंधोदयपुप्फवुट्ठिमाईहिं । जह देवा तह मणुया दंसणसुद्धिं उवलहंति ॥ ९२ ॥

जलथलयकुसुमरासिं अब्भयरूवं विउव्वणं काउं । जाणुप्पमाणवुट्ठिं करिंति देवा सगंधुदयं ॥ ९३ ॥

एवं जहसत्तीए सावयवग्गोऽवि पुप्फमाईहिं । पूएइ अ पुण्णट्ठा तित्थयरागारबिंबाइं ॥९४॥

समवसरणे चतूरूपस्तीर्थंकरो, धर्मोपदेशनां करोतीति गम्यं, यदागमः—"जे ते देवेहिं कया तिदिसिं पडिरूवगा जिणवरस्स । तेसिंपि तप्पभावा तयाणुरूवं हवइ रूवं" १॥ श्रीआव० नि० (५५७) तथा "दानशीलतपोभावभेदाद्धर्मं चतुर्विधम् । मन्ये युगपदाख्यातुं,चतुर्वक्त्रोऽभवद्भवान्॥१॥" इति वीतरागस्तोत्रे,तथा "वप्रत्रयं चारु चतुर्मुखांगते"त्यादिनाऽतिशयोऽपि देवकृतो नाममालायां भणितः, ननु समवायाङ्गे येऽतिशयाः प्रोक्तास्तेषु चतुर्मुखाङ्गता नोक्ता अतः कथं श्रद्धेयेति चेत् , मैवं, यतस्ते नियताः, अनियतास्त्वन्येऽपि,यदुक्तम्—"होऊणवि देवकया चउतीसाइसयबाहिरा कीस । पागारंबुरुहाई अणण्णसरिसावि भोगम्मि १॥१॥ चउतीसं किर णिअया ते गहिया सेसया अणिअयत्ति । सुत्तम्मि न संगहिया जह लद्धीओ अणिययाओ ॥२॥" इति श्रीविशेषणवत्याम् । अत एवातिशयानां चतुस्त्रिंशत्त्वेन सङ्ख्यानियमेऽपि वैचित्र्याद्देव समवायाङ्गवृत्तौ "एते च यदन्यथाऽपि दृश्यन्ते तन्मतान्तरमवगन्तव्य"-मिति भणितं, अत एव प्रवचनसारोद्धाराद्धौ चतुर्मुखांगतान्तर्भावेनैवातिशया भणिताः । तत्र यदि लुम्पाकस्य तीर्थंकरसंबन्धीनि त्रीणि रूपाणि सम्मतानि तर्हि नियमेन प्रतिमा सम्मता, यथा तीर्थंकरजीवरहिता प्रतिमा तथैव त्रीणि प्रतिरूपकाण्यपि तीर्थंकरजीवरहितानीत्यर्थः, अथ तीर्थंकराकारवशात्तेभ्यस्तीर्थंकरविषया बुद्धिरिति चेच्चिरं जीव, प्रतिमायामपि समानं, तथा समवसरणे

स्तीर्थस्थापनाय समथ इति यो भाषते तेषां सोऽर्हन्, न चैतादृशस्तीर्थाभ्युपगतोऽर्हमिति मिभ इति गाथार्थः ॥८६॥ अथ सिद्धविषये उत्तरमाह—तेषां-कुपाक्षिकाणां सिद्धा अपि तदुपदेशात्-विकल्पिततीर्थकरोपदेशादुपलब्धाः अश्रद्धेया भवन्ति, ते च तदुपदिष्टमार्गाराधनासाता भिन्ना एव, तीर्थे तथाविधसिद्धानामश्रद्धानादेव, गौतमादिगणधरवर्गोऽपि निजमतिविकल्पितस्तीर्थो क्लिम एवेति गाथार्थः ॥८७॥ अथोक्तकुपाक्षिकेषु विशेषमाह—

तेसुवि लुपगच्छा पायं खलु कायबिंदुअनयणा । निम्मलनयणसमाणा दीसंति सुविज्जपरिचज्जा ॥८८॥

तेष्वपि—पौर्णिमीयकादिष्वपि लुम्पकवर्जाः प्रायः काचबिन्दुयुतनयनाः निर्मलनयनसमाना—निर्मललोचनैः सह समाना दृश्यन्ते, परं सुवैद्यपरित्याज्याः, तादृग्रोगस्यासाध्यत्वात्, यथा लुम्पकवर्जा अमी अपि, यतस्ते प्रतिमां तु वयमप्यङ्गीकुर्मः, शेषभेदस्तु सामाचारीविशेषादकिञ्चित्कर एव, तथा च यथाऽयं तपागणस्तथा वयमपीति साधर्म्यमाश्रिताः साधूपदेशमपि न समीहन्ते, कथं तर्हि तत्प्रतीकारः? तेन काचबिन्दुरोगकल्पः तथा साधर्म्ये तदीयश्रद्धानष्टावसाध्यं, नचैवं लुम्पकस्यापीत्यनन्तरं वक्ष्यमाणमिति गाथार्थः ॥८८॥ अथ पृथक्कृतस्य लुम्पकस्य स्वरूपमाह—

लुपकनयणातकाणेगविहा तेण केइ सज्झावि । तेसुवि कोइ सुइअणसज्झो से अंजण एय ॥८९॥

लुम्पकनयनातङ्का अनेकविधा—नानाप्रकारास्तेन केऽपि रोगविशेषाः साध्या अपि, तेष्वपि कोऽप्यञ्जनसाध्यः, 'से' तस्या ञ्जनमेतत्—वक्ष्यमाणमिति गाथार्थः ॥८९॥ अथ गाथापञ्चकेनाञ्जनमाह—

समुसरणे चउरूवो तित्थयरो तस्स तिण्णि रूवाइं । जइ सम्मयाइ पडिमा निअमेण सम्मया होइ ॥९०॥

किमर्थं ?—भद्रार्थं—मङ्गलायेति गाथार्थः ॥९७॥ अथ तीर्थस्वरूपोपसंहारमाह—

**एवं तित्थसरूवं सम्मं मुणिऊण सुकयअब्भासो। विण्णू कुवक्खकोसिअसद्दनिरोहं सुहं कुणई ॥९८॥**

'एवं' प्रागुक्तप्रकारेण तीर्थस्वरूपं सम्यग् ज्ञात्वा सुकृताभ्यासो विज्ञः—पण्डितः कुपक्षकौशिकशब्दनिरोधं सुखं यथा स्यात्तथा करोति, कौशिकशब्दो हि जनानामशुभहेतुरतस्तन्निरोध एव श्रेयान्, तेन कुपक्षकौशिकोऽपि तीर्थस्वरूपे निरूपिते निरुद्धशब्दप्रसरो भवतीति गाथार्थः ॥९८॥ अथ विश्रामोपसंहारमाह—

**एवं कुपक्खकोसिअसहस्सकिरणंमि उदयमावण्णे। दसवि कुवक्खा विसरा विगयप्पसरा मुणेयव्वा ॥९९॥**

'एवं' प्रागुक्तप्रकारेण कुपक्षकौशिकसहस्रकिरणे उदयं प्राप्ते दशापि कुपक्षाः विस्वरा—उत्सूत्रभाषकत्वेन विरुद्धः—अश्राव्यः स्वरो—निनादो येषां ते विस्वराः, अर्थात्कौशिका इत्यर्थः, 'विगतप्रसराः' विगतः प्रसरो—गमनागमनादिक्रियारूपो येषां ते तथा ज्ञेयाः—पण्डितैर्बोध्या इति गाथार्थः ॥९९॥ अथेदं तीर्थस्वरूपं कस्मिन् संवत्सरे कस्मिंश्च गुरौ विद्यमाने सति कथितमिति प्रदर्शनाय गाथामाह—

**नवहत्थकायरायंकिअसममहिमंमि चित्तसिअपक्खे। गुरुदेवयपुण्णुदए सिरिहीरविजयसुगुरुवारे ॥१००॥**

संवत्सरपक्षे त्वेवं—नवहस्तशब्दौ क्रमेण नवकद्विकसंख्याभिधायकौ, कायाः—पृथिव्यादयः समयभाषया षडिति षट्सङ्ख्यावाची कायशब्दः, राजा—चन्द्रः स चैकत्वसङ्ख्यावाची ज्योतिर्विदां प्रतीतः, एतैः शब्दैः 'अङ्कानां वामतो गति'रितिवचनात् क्रमेण येऽङ्काः १६२९ ते जाता यासु ता नवहस्तकायराजाङ्किता एवंविधाः समाः—संवत्सरास्तासां महिमा—नामग्रहणादिना ख्यातिर्यस्मिन्नेवंविधे चैत्रसितपक्षे—मधुमासस्य शुक्लपक्षे, तत्रापि श्रीहित् रविजयसुगुरुवारे—श्रिया—शोभया हिनोति—वर्द्धते सुरगुरुत्वात् यः स श्रीहित् रवेः—

गन्धोदकपुष्पवृष्ट्यादिभिर्देवाः–शक्रादयो दर्शनशुद्धिं–सम्यक्त्वनैर्मल्यमुपलभन्ते तथा मनुजा अपि–श्रावकश्राविकादिरूपा जिनभवने तथा कृताना दर्शनशुद्धिं लभन्ते, दृष्टकस्य किमित्याह–'जलथलय'मित्यादि, जलस्थलजकुसुमराशिं–जले स्थले च जातानि यानि कुसुमानि तेषां राशिम् अभ्रकरूपां–वार्दलाकारां विकुर्वणां कृत्वा जानुप्रमाणां वृष्टिं कुर्वन्ति देवा', अत्राभ्राकारेण विकुर्वणा, न पुनः कुसुमानि विकुर्वितानि, आगमे 'जलजस्थलजे'ति पाठश्रवणात्, वृष्टिं किंलक्षणां?–'सग घोदका' प्रथम गन्धोदकवृष्टिं कृत्वा पश्चात् कुसुमवृष्टिमित्येवम्–अमुना प्रकारेण यथाश्रुतया श्रावकवर्गोऽपि तीर्थकराकारबिम्बानि पुण्यार्थं पुष्पादिभि' पूजयतीति लुम्पक चक्षुषोऽञ्जनमितिगाथापञ्चकार्थ ॥ ९०–९१–९२–९३–९४ ॥ अथाञ्जनप्रक्षेपनिमित्त शलाकामाह—

तेसिं वयणपमुह जिणवदणसमफलति णो भिन्न। तह जिणपडिमावदणमञ्जणखेवे सिलागेसा ॥९५॥

'तेषां' त्रयाणां जिनप्रतिरूपकाणां वन्दनप्रमुख जिनवन्दनसमफल जिनवन्दनाद्यभिग्रहनिस्तारकं चेति प्रवचने प्रतीतं,नो भिन्न-फल, तथा जिनप्रतिमावन्दनम्, अञ्जनप्रक्षेपे एषा शलाकेति गाथार्थः ॥९५॥ अथ किं संपन्नमित्याह—

एएणमजणेण नीरोगं चक्खु जस्स नो जाय। से कायबिंदुचक्खू उविक्खणिज्जं च दुस्सज्झ ॥९६॥

एतेनाञ्जनेन यस्य लुम्पकविशेषस्य चक्षुर्नीरोग न जातं 'से' तस्य काकबिन्दुचक्षुरुपेक्षणीयमसाध्यत्वात्, अथवा दुःसाध्य–बहु प्रयासप्रसाध्य, तद्विधिरपि लुम्पकमतनिराकरणविश्रामे वक्ष्यते इति गाथार्थः॥९६॥ अथ तीर्थतीर्थाभासयोरुपसंहारमाह—

एव छत्तिदिमाए सम्म अन्नमसिअ तित्थआभासं। मुणिऊण तित्थसरणं कुणतु भव्वा हु भवट्ठा ॥९७॥

एवमनन्तरप्रकारया पञ्चदिक्षया सम्यग भव्यस्य तीर्थाभासं–अपायिकरणं ज्ञात्वा.परित्यज्येत्यर्थात् ज्ञेयं,भव्यास्तीर्थशरणं कुर्वन्तु,

किमर्थं ?—भद्रार्थं—मङ्गलायेति गाथार्थः ॥९७॥ अथ तीर्थस्वरूपोपसंहारमाह—

**एवं तित्थसरूवं सम्मं मुणिऊण सुकयअब्भासो। विण्णू कुवक्खकोसिअसद्दनिरोहं सुहं कुणई ॥९८॥**

'एवं' प्रागुक्तप्रकारेण तीर्थस्वरूपं सम्यग् ज्ञात्वा सुकृताभ्यासो विज्ञः—पण्डितः कुपक्षकौशिकशब्दनिरोधं सुखं यथा स्यात्तथा करोति, कौशिकशब्दो हि जनानामशुभहेतुरतस्तन्निरोध एव श्रेयान्, तेन कुपक्षकौशिकोऽपि तीर्थस्वरूपे निरूपिते निरुद्धशब्दप्रसरो भवतीति गाथार्थः ॥९८॥ अथ विश्रामोपसंहारमाह—

**एवं कुपक्खकोसिअसहस्सकिरणंमि उदयमावण्णे। दसवि कुवक्खा विसरा विगयप्पसरा मुणेयव्वा ॥९९॥**

'एवं' प्रागुक्तप्रकारेण कुपक्षकौशिकसहस्रकिरणे उदयं प्राप्ते दशापि कुपक्षाः विस्वरा—उत्सूत्रभाषकत्वेन विरुद्धः—अश्राव्यः स्वरो—निनादो येषां ते विस्वराः, अर्थात्कौशिका इत्यर्थः, 'विगतप्रसराः' विगतः प्रसरो—गमनागमनादिक्रियारूपो येषां ते तथा ज्ञेयाः—पण्डितैर्बोध्या इति गाथार्थः ॥९९॥ अथेदं तीर्थस्वरूपं कस्मिन् संवत्सरे कस्मिंश्च गुरौ विद्यमाने सति कथितमिति प्रदर्शनाय गाथामाह—

**नवहत्थकायरायंकिअसममहिमंमि चित्तसिअपक्खे। गुरुदेवयपुण्णुदए सिरिहीरविजयसुगुरुवारे ॥१००॥**

संवत्सरपक्षे त्वेवं—नवहस्तशब्दौ क्रमेण नवकद्विकसंख्याभिधायकौ, कायाः—पृथिव्यादयः समयभाषया षडिति षट्सङ्ख्यावाची कायशब्दः, राजा—चन्द्रः स चैकत्वसङ्ख्यावाची ज्योतिर्विदां प्रतीतः, एतैः शब्दैः 'अङ्कानां वामतो गति'रितिवचनात् क्रमेण येऽङ्काः १६२९ ते जाता यासु ता नवहस्तकायराजाङ्किता एवंविधाः समाः—संवत्सरास्तासां महिमा—नामग्रहणादिना ख्यातिर्यस्मिन्नेवंविधे चैत्रसितपक्षे—मधुमासस्य शुक्लपक्षे, तत्रापि श्रीहित् रविजयसुगुरुवारे—श्रिया—शोभया हिनोति—वर्द्धते सुरगुरुत्वात् यः स श्रीहित् रवेः—

सूर्यस्य जयो यस्मात् स रविजय , सूर्यबृहस्पत्योः परस्परं मैत्रीसद्भावात् बृहस्पतेः सकाशात्सूर्यस्य जयो भवत्येव, ततो विशेषणसमासः, एवंविधो यः सु-शोभनो गुरुः-बृहस्पतिस्तभाम्ना वारस्तस्मिन् श्रीहीरविजयसुगुरुवारे, किंलक्षणे ?-'गुरुदैवतपूर्णोदये' गुरुदै वत-पुष्य पूर्णा च अथात् दशमी, चैत्रशुक्लपक्षे पञ्चमीदशमीपूर्णातिथ्योः पुष्यनक्षत्रयोगात्, तयोरुदयो यत्र स गुरुदैवतपूर्णोद यस्तस्मिन्, सं० १६२९ वर्षे चैत्रसितदशमी१० तिथौ बृहस्पतिवारे पुष्यनक्षत्रे चन्द्रे चरति सतीति भावार्थः, गुरुपक्षे पुनर्व्या ख्यान यथा-श्रीहीरविजयसुगुरुवारे-सुविहिताग्रणीश्रीहीरविजयसूरीश्वरराज्ये प्रवर्त्तमाने, किंलक्षणे ?-'नवहस्ते'त्यादि, नव हस्ताः प्रमाण यस्यैवंविधः कायः-शरीरं यस्य स चासौ राजा च नवहस्तकायराजः-श्रीपार्श्वनाथस्तेनाङ्कित -अवच्छिन्नोऽर्थात् य कालस्तेन समः-सदृशो महिमा यत्र स तथा तस्मिन्, अलसमासान्तेन नवहस्तकायराजाङ्कितसममहिम्ने, यद्वा नव हस्ताः प्रमाणं यस्यैवंविधो राजते इत्येवंशीलो राजी-शोभनशीलः काय -शरीरं यस्य स प्राकृतत्वाद्विशेषणस्य परनिपातस्तेनाङ्कितः-चिह्नितोऽर्थात् श्रीपार्श्वनाथस्तस्य महिम्नः समो महिमा यत्र स तथा तस्मिन्, श्रीपार्श्वनाथराज्यसदृशमहिम्नि श्रीहीरविजय सूरिराज्ये इत्यर्थ , अयं भावः-श्रीऋषभाद्यपेक्षया हीनकालसमुत्पन्नोऽपि श्रीपार्श्वनाथः सर्वजनेभ्यादेयनामा यथाऽभूत् न तथा ऋषभादयः, एव पञ्चमारकाद्यपेक्षया श्रीवीरजन्मनक्षत्रसङ्क्रान्तभस्मराशिमाहात्म्यात् कुनृपकुपाक्षिकबाहुल्येनास्तयाविधकालो त्पन्नोऽपि श्रीहीरविजयसूरिर्यथा माहात्म्यभाग् न तथा वज्रस्वाम्यादयः, न चैतद्वर्णनमात्रं, किन्तु पारमार्थिकमिति प्रदर्शनाय विशेषणद्वारा हेतुमाह, किंलक्षणे श्रीहीरविजयसुगुरुवारे ?-'चित्रसितपक्षे' चित्रम्-आश्चर्य यथा स्यात्तथा कुपाक्षिकमुख्यानामपि निजदुराग्रहपरित्यागपुरस्सरं सितः-श्वेतः शुद्ध इतियावत् पक्षः-अङ्गीकारो यत्र वारके स तथा तस्मिन्, अय भावः-कुपाक्षिकस्य

अहम्मदावादे म्लेच्छमुख्यमुद्गलाधिपतिपातिसाहीश्रीअकब्बरसाक्षिकमहामहः
ख्याः सपरिकरा ऋ० मेघजीप्रभृतयो नगरमुख्ये अहम्मदावादे कदाचित्प्रव्रज्यादिकं स्वीकुर्वाणो दृष्टः श्रुतोऽपि
पुरस्सरं यथा प्रव्रज्यादिकं प्रतिपेदिरे न तथा प्राचीनाचार्यराज्येषु,यद्यपि कश्चित् कदाचित्प्रव्रज्यादिकं स्वीकुर्वाणो दृष्टः श्रुतोऽपि
परं तन्मुख्यास्तूक्तयुक्त्या श्रीहीरविजयसूरिराज्ये इति चित्रम्, एवमपि कुत इति विशेषणद्वारा हेतुमाह, यतः किंलक्षणे श्रीपूज्यवारके?–
'गुरुदैवतपूर्णोदये' गुरु–महत् तच्च तद्दैवं–भाग्यं गुरुदैवं, तदेव गुरुदैवकमिति स्वार्थे कः, तस्य पूर्णः–अन्यून उदयः तीर्थकृन्नाम-
कर्मोदयवत् प्राग्जन्मोपार्जितशुभप्रकृतिविपाकानुभवनं यत्र स तथा तस्मिन् गुरुदैवकपूर्णोदये, तत्र न केवलं गुरोरेव पुण्यप्रकृ-
त्युदयः, किंतु तद्भक्तानामपि, तथाहि–गुरुपक्षे तावत् नहि गुरूणां तथाविधपुण्यविपाकानुदये कुपाक्षिककुनृपव्याकुलेऽपि काले
श्रीस्तम्भतीर्थे प्रभावनामुखेनैव कोटिसंख्याद्रव्यव्ययः संभवति, नवा चरणविन्यासे प्रतिपदं रौप्यकसौवर्णिकमोचनं मौक्तिक-
स्वस्तिकादिरचनमित्यादिना तीर्थकृत्प्रतिमः पूजोदयः संभवति, तद्भक्तपक्षे तु तथाविधेऽपि काले तद्भक्तानां धात्रा ज्ञानदर्श-
नचारित्राणि पिण्डीकृत्य निर्मितैकमूर्त्तीनां श्रीगुरूणां ये भक्ताः श्रावकास्तेषां प्राग्जन्मोपार्जितशुभकर्मप्रेरणया भाविन्या च तथा-
विधभवितव्यतयैव तथा भक्त्युल्लासः संभवति,यदागमः–पुण्णेहिं चोइआ पुरकुखडेहिं सिरिभायणं भविअसत्ता। गुरुमागमेसिभद्दा
देवयमिव पज्जुवासंति॥१॥त्ति (उपदे १०१) गाथार्थः॥१००॥ अथैतत्प्रकरणकर्तृनामगर्भितामाशीरभिधायिकां गाथामाह––

**इअ सासणउदयगिरिं जिणभासिअधम्मसायराणुगयं। पाविअ पभासयंतो सहस्सकिरणो जयउ एसो ॥१०१॥**

इति–अमुना प्रकारेणैषः–अध्यक्षसिद्धः सहस्रकिरणः 'पदैकदेशे पदसमुदायोपचारात्' कुपक्षकौशिकसहस्रकिरणो जयतु–जीयादि-
त्याशीरुपदर्शितेतिसंबन्धः, आशीरपि तत्कृत्योद्भावनपुरस्सरमेव भवतीत्याह, किं कुर्वन् जयतु ?–'प्रभासयन्' प्रकाशं कुर्वन्, अर्थात्

जीवलोकम्, अन्योऽपि सूर्यो लोके प्रकाशयन्नेवाशीर्भाग् भवति तथाऽयमपि, प्रकाशमपि किं कृत्वा करोतीत्याह—'सासणे'त्यादि, शासन—जैनतीर्थं तद्रूपो य 'उदयगिरि'—उदयाचलो निषध इतियावत् तं प्राप्य—तच्छिखरमासाद्य, अन्योऽपि सूर्यो निषधशिखरमासाद्य प्रकाशं कुरुते तथाऽयमपि जैनतीर्थं प्राप्यैव प्रकाशयति, नान्यथा, किंलक्षणं शासनोदयगिरिं ?—'जिनभाषितधर्मसागरानुगत' जिनेन—अर्हता भाषितो यो दानादिलक्षणो धर्मस्तद्रूपो यः 'सागर'—समुद्रस्तं प्रत्यनुगतः—प्राप्त' सम्बद्धोऽनुकारी चेत्यर्थः, निषधोऽपि समुद्रसंबद्धो भवति, उभयतोऽपि समुद्रस्पर्शीत्यर्थः, अथवा तमनुकारी—समुद्रतरङ्गः, यथा सूर्यः समुद्रे मण्डलानि कुरुते तथैव निषधेऽपि, यदुक्तं—"तेसट्ठी निसढंमि अ दुन्नि अबाहा दुजोअणंतरिआ। एगुणवीसं च सयं सूरस्स य मंडला लवणे ॥१॥" इति, अथ निषधापेक्षया समुद्रे सूर्यस्य भूयांसि मण्डलान्यत' समुद्रोपमयोपमितो निषधः। अत्र धर्मसागर इति प्रकरणकर्तुर्नामापि सूचितं बोध्यमिति गाथार्थः ॥१०१॥

इअ कुवक्खकोसिअसहस्सकिरणंमि पवयणपरिक्खावरनामंमि तित्थसरूवनिरूवणनामा पढमो विस्सामो समत्तो॥



इति श्रीमत्तपागणनभोनभोमणिश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीधर्मसागरगणि
विरचिते कुपक्षकौशिकसहस्रकिरणे श्रीहीरविजयसूरिदत्तप्रवचनपरीक्षापरनाम्नि
प्रकरणे तीर्थस्वरूपनिरूपणनामा प्रथमो विश्रामो व्याख्यातः



अथ प्रकृतं विवक्षुराह—

**अह पगयं दंसेमो वित्थरओ किंचि जं च सामन्ना। भणिअं तित्थसरूवे दसस्सरूवं पसंगेणं ॥१॥**

अथ 'प्रकृतं' कुपाक्षिकास्तीर्थाद्भिन्ना इति भव्या जानंत्विति कुपाक्षिकस्वरूपनिरूपणं प्रकृतं—प्रारब्धं तत् किंचिद्विस्तरतो दर्शयामः, तत्किं?—यत् प्रसङ्गेन दशस्वरूपं सामान्यात् तीर्थस्वरूपे—तीर्थस्वरूपनिरूपणविश्रामे भणितं,प्रसङ्गस्त्वेवं—तीर्थस्वरूपनिरूपणमन्तरेण ततो बाह्याः कुपाक्षिका इति वक्तुमशक्यमिति तत्स्वरूपनिरूपणं प्रासङ्गिकमिति गाथार्थः ॥१॥ अथ 'तित्थं चाउवण्णो' इत्यादिदशमगाथात आरभ्य 'एवं जुत्तिदिसाए' इत्यादिसप्तनवतितमगाथापर्यन्तं तीर्थस्वरूपं निरूपितम्, एवंविधे तीर्थे सिद्धे तत्प्रत्यनीकानां दशानामपि तीर्थान्तर्वर्त्तिनां सर्वथा हेयत्वे सिद्धेऽपि व्यक्त्या तत्स्वरूपं विवक्षुः प्रथमं साधारणस्वरूपमाह—

**दसवि अ एए पवयणपओसभावा पवयणओ भट्ठा। गुरुपरतंतविरहिआ उम्मग्गपरूवणारसिआ ॥२॥**

दशापि चैते—प्रागुद्दिष्टाः 'खवणये'त्यादिना दिगम्बरादिपाशपर्यन्ताः प्रवचनतो भ्रष्टाः—जैनप्रवचनतो भ्रष्टाः, जैनप्रवचनाच्च्युतास्तीर्थाद्दूरवर्त्तिन इत्यर्थः, कुत इति हेतुमाह—'पवयण'त्ति प्रवचनप्रद्वेषभावात्—जिनशासनविषयकद्वेषोदयात्, एतत्प्रवचनमस्मत्पराभवकारि माऽस्मदृक्पथमवतरतु, किंतु निस्सत्ताकीभवत्वित्येवंरूपेणानन्तानुबन्धिद्वेषजन्यरुद्रपरिणामसद्भावादिति तात्पर्यं, तत्रापि विशेषणद्वारा हेतुमाह, यतस्ते कीदृशाः ?—'उन्मार्गप्ररूपणारसिका' उन्मार्गः—स्त्रीमुक्तिनिषेध१ चतुर्दशीपाक्षिकनिषेध२ पर्वातिरिक्तदिनपौषधनिषेध३ सामायिकादौ श्राद्धमुखवस्त्रिकानिषेध४ जिनबिम्बानां पुरः फलादिपूजानिषेध५ श्रुतदेवतास्तुतिनिषेध६-जिनप्रतिमानिषेध७ संप्रति गुरुदृग्पथावतारनिषेध८ परम्परागतप्रायोबहुविधिनिषेध९ जिनपूजादिषु साधूपदेशनिषेध१० प्रमुखल-

रूप' तस्य प्ररूपणा-तत्स्थापनाय प्रवृत्तमुत्थानता तत्र रसिका-अहोरात्रं तदेकध्यानपरायणा अहमहमिकया व्यसनिनः, एवं विधा अपि कुत इत्याह-यस्माद्गुरुपारतन्त्र्यविरहिता'-परतन्त्रशब्देनात्र भावनिर्देशात् पारतन्त्र्य तेन शून्या इत्यर्थ, न हि स्त्रीमुक्ति निषेधादिप्ररूपणां शिवभूत्यादय' स्वकीयस्वकीयगुरुभ्योऽवाप्य कृतवन्त', किंतु गुरूपदेशमन्तरेणैव निजमतिविकल्पनया प्रादु ष्कृतवन्त, स्वस्वमतप्ररूपणामधिकृत्य न कस्यापि शिष्या इत्यर्थः, अत एव तेषां स्वस्वशिष्यापेक्षयापि गुरुत्वव्यपदेशः केवल कलङ्क एव, शिष्यस्याविनाभाविन एव गुरुत्वस्य सद्भावात्, अय भाव'-यो यो गुरु स स कस्यापि शिष्यस्तेनासीदेवेत्येव रूपेण शिष्यत्वाविनाभाव्येव गुरुः, यदागम'-"इतूण सयमाण सीसो होऊण ताव सिक्खाहि। सीसस्स हुवि सीमा न हुवि सीसा असीसस्स ॥१॥"ति श्रीचन्द्रवेध्यकप्रकीर्णके, अत्र दृष्टान्त' श्रीसुधर्मस्वाम्येव, स च श्रीमहावीरस्य शिष्य सन्नेव श्रीजम्बू स्वाम्यादीनां गुरुरपि, ननु यथा भगवान् महावीर' स्वय कस्याप्यशिष्य' सन्नेव श्रीसुधर्मस्वाम्यादीनां गुरुस्तथाऽमी अपि भवन्तु को दोष इति चेन्मैवं, शिवभूत्यादीनां देवत्वापत्तेः, यो यो देवः स च न कस्यापि शिष्य इत्येवरूपस्य शिष्यत्वाभावाविनाभाविन एव देवत्वमित्येव देवलक्षणोपेतत्वात्, नन्वमीषां देवत्वमेवास्त्विति चेत् चिरं जीव, यतो जैनप्रवचने प्रत्युत्सर्पिण्यादौ चतुर्विंशतिरेव देवत्वेन प्रती तास्तीर्थकृतो भवन्ति, ते चास्यामवसर्पिण्यां ऋषभादिवीरावसाना संभूता एव, अमी च तेभ्योऽधिका', अतः प्रवचनबाह्या' स्वत एव मत्साध्यकोटिमारूढा' किंच-मारकसद्वचसा श्रीसुधर्मस्वामिनोऽपत्यत्वमात्मनः स्थापयन्तस्ते निवारणीया', यतस्तथा श्रुत मानां तेषां स्वरूपस्यैव हाने', मन्मातृत्वबन्ध्यत्वयोरिव सुधर्मापत्यत्वस्वतन्त्रप्रणेतृत्वयोर्विरोधात्, तथा च दृष्टान्तासिद्धिः, नहि श्रीवीर' कस्यापि देवस्य गुरोर्वा स्वात्मनोऽपत्यत्वमास्थापयतिस्मेत्यादियुक्तिभिर्विचार्यमाणानां शिवभूत्यादीनां गुरुत्वं तद्प

त्यानां च कौण्डिन्यादीनां शिष्यत्वं विशीर्यत एव, यतस्ते स्वात्मनः श्रीसुधर्मस्वाम्यपत्यत्वं ख्यापयन्तो न तीर्थकृतो नापि गुरवो, गुरुपारतन्त्र्याभावेनैव नवीनमताविष्करणात् कस्यापि शिष्यत्वाभावादिति भावार्थः, यत्तु तेषां परस्परं गुरुशिष्यत्वव्यवहारस्त-न्मरुमरीचिकायां जलव्यवहारवत्तदाभासत्वेनैव बोध्यः, अत एवागमेऽपि—"सत्त पवयणनिण्हगायरिआ पं०, तं०—जमाली"त्यादि (एएसि णं सत्तण्हं पवयणनिण्हगाणं सत्त धम्मायरिया हुत्था, तं०—जमाली० इति पाठः स्थानाङ्गे५८७ सूत्रे४१० पत्रे) तन्मतादि-मूलकर्तृत्वाद्, वस्तुगत्या देवाभासत्वेऽपि गुर्वाभासत्वेन लोके गुरुशिष्यव्यवहारात्, नन्वेवं बोटिकादिपाशपर्यन्ताः किं स्वतीर्थिका उतान्यतीर्थिका वोच्यन्ते ? अथवाऽन्यथैवेति चेद्, उच्यते, नैते स्वतीर्थिका उत्सूत्रप्ररूपणायास्तीर्थबाह्यत्वात्, यदुक्तं "समुद्घा-तादि जिनाभिहितं वस्त्वन्यथा प्ररूपयन् प्रवचनबाह्यो भवती"ति श्रीस्थानाङ्गवृत्तौ (५८७ सू.उपक्रमे) सप्तनिह्नवाधिकारे, न वा परतीर्थिकाः, शाक्यादिपरतीर्थिकक्रियानभ्युपगमात्, किं त्वमी अव्यक्तशब्देनान्यथैव वाच्याः एतेऽव्यक्ता इति, यदाहुः श्री-हरिभद्रसूरिपादाः—"पवयणनीहूआणं जं तेसिं कारिअं जहिं जत्थ। भज्जं परिहरणाए मूले तह उत्तरगुणे अ॥१॥"त्ति निर्युक्ति-गाथा(७८७)व्याख्यायां "नैते साधवो नापि गृहस्थाः नापि अन्यतीर्थिकाः यतस्तदर्थाय कृतं कल्प्यमेव भवत्यतोऽव्यक्ता एते" ति गाथार्थः इति श्रीआ० नि० ह० (३२६पत्रे) इति गाथार्थः ॥२॥ अथ केऽमीषामादिकर्त्तारः१ कोऽमीषामुत्पत्तिकालः२ का ऽमीषां प्ररूपणा३ को वाऽस्याः प्रतीकारः४ किंनिमित्तं चामीषां तीर्थबाह्यभवन५मित्यादि यथाऽऽम्नायं विभणिषुः 'यथोद्देशं देश'मिति न्यायात् प्रथममुद्दिष्टस्य दिगम्बरस्य वक्तव्यतामाह—

त्थ य खमणो रमणो दुग्गइवणिआइ जेण वणिआए। न मुणइ मुत्तिं भुत्तिं केवलिणो कवलभोइस्स ॥३॥

तत्र च–तेषुदिशेषु च 'क्षपणको' बोटिको 'रमणो' भर्ता, कस्याः ?–दुर्गतिवनितायाः' दुर्गति'–नारकादिकुगतिस्तद्रूपा या वनिता–स्त्री तस्या इत्यर्थः, चकारोऽन्येषामपि कुपाक्षिकाणां दुर्गतिवनिताभर्तृत्वसूचकः, अथ दिगम्बरस्य दुर्गतिवनिताभर्तृत्वे हेतुमाह–'जेण'त्ति येन कारणेन बोटिको वनिताया मुक्तिं न मन्यते, सकलकर्मक्षयलक्षणां मुक्तिं स्त्रियो न प्राप्नुवन्तीत्युपदेशेन स्त्रीमुक्तिनिषेधकः, तथा कवलभोजिन –तथाविधवेदनीयकर्मोदयात् क्षुद्वेदनोपशमनाय कवलाहारं गृह्णानस्य केवलिनः, चकारमध्याहृत्य मुक्तिं च–भोजनं, केवलिनां कवलाहारो न भवतीत्युपदेशेन प्रतिषेधयति, अत्र यद्यपि सिद्धावस्थ केवलिनमादाय तीर्थस्याप्यपसिद्धान्तः स्यात् तन्निराकरणाय दिगम्बरस्य वादिन' केवलिन कवलभोजित्वमसिद्धमिति तद्वारणाय च कवलभोजित्व विशेषणत्यागेन 'कायजोगिस्स'त्ति काययोगिन इति विशेषणं वक्तुं युक्तं, तथापि जैनस्य नियमेन केवलिनः कवलभोजित्वं सिद्धमेवास्तीति ज्ञापनार्थमेतद्विशेषणं न दोषहेतुरिति गाथार्थः ॥३॥ अथ नग्नाटमतस्यादिकर्तारं तदुत्पत्तिकालं तीर्थाद्बहिर्भवननिमित्तं च प्रदर्शयितुं गाथामाह—

तस्सुप्पत्ती नवहिअछवाससएहिं वीरनिव्वाणा । रहवीरपुरे कंबलकोसाओ सहस्समल्लाओ ॥४॥

'तस्य' बोटिकस्योत्पत्ति'–प्रादुर्भावः श्रीवीरनिर्वाणात् नवाधिकषट्शतवर्षे ६०९ व्यतीते रथवीरनगरे जातेत्युत्पत्तिकाल' प्रदर्शित', कस्माज्जातेत्याह–'सहस्स'त्ति सहस्रमल्लात्–राजमान्यसहस्रमल्लाभिधानशिवभूत्यपरनाम्नः पुरुषादिति, अनेन दिगम्बर मतस्यादिकर्ता प्रदर्शितः, सहस्रमल्लात् किंलक्षणात् ?–'कम्बलकोपात्' कम्बलो–रत्नकम्बलस्तन्निमित्तः कोपो यस्य स तथा तस्मात्, अनेन विशेषणेन तीर्थबहिर्भवननिमित्तं कम्बलकोपः प्रदर्शितः, तद्व्यतिकरस्त्वेवम्–इहैव भरतक्षेत्रे रथवीरपुरं नाम नगरं, तत्रेम

दीपकाभिधानमुद्यानं, तत्रार्यकृष्णनामानः सूरयः समागताः, तस्मिंश्च नगरे सहस्रमल्लो राजसेवकः, स च राजप्रसादाद्विलासान्
कुर्वन्नगरमध्ये पर्यटति, रात्रेश्च प्रहरद्वयेऽतिक्रान्ते गृहमागच्छति, तदैतदीयभार्या तन्मातरं भणति–निर्वेदिताऽहं त्वत्पुत्रेण, न
खल्वेष रात्रौ वेलायां कदाचिदप्यागच्छति, तत उज्जागरकेण बुभुक्षया च बाध्यमाना प्रत्यहं तिष्ठामि, ततस्तया प्रोक्तं–वत्से !
यद्येवं तर्हि त्वमद्य स्वपिहि, स्वयमेवाहं जागरिष्यामि, ततो बध्वा तथैव कृतम्, इतरस्यास्तु जाग्रत्या रात्रिप्रहरद्वयेऽतिक्रान्ते
शिवभूतिना समागत्य प्रोक्तं–द्वारमुद्घाटयत, ततः प्रकुपितया मात्रा प्रोक्तं–दुर्णयनिधे ! यत्रैतस्यां वेलायां द्वाराण्युद्घाटितानि
भवन्ति तत्र गच्छ,न पुनरेवं त्वत्पृष्ठलग्नः कोऽप्यत्र मरिष्यति,ततः कोपाहङ्काराभ्यां प्रेर्यमाणोऽसौ निर्गतः, पर्यटता चोद्घाटि-
तद्वारः साधूपाश्रयो दृष्टः, तत्र साधवः कालग्रहणं कुर्वन्ति, तेषां च पार्श्वे तेन वंदित्वा व्रतं याचितं, तैश्च राजवल्लभो मात्रादि-
भिरमुत्कलितश्चेति व्रतं न दत्तं, ततः खेलमल्लकाद्रक्षां गृहीत्वा स्वयमेव लोचः कृतः, साधुभिर्लिङ्गं समर्पितं, विहृताश्च सर्वेऽप्यन्यत्र,
कालान्तरेण पुनरपि तत्रागताः, ततो राज्ञा शिवभूतये बहुमूल्यं कम्बलरत्नं दत्तं, तत आचार्यैः शिवभूतिरुक्तः–किं तवानेन साधूनां
मार्गादिष्वनेकानर्थहेतुना गृहीतेन ?, ततस्तेन गुर्वप्रतिभासेनापि संगोप्य मूर्छया तद्विधृतं, गोचरचर्यादिभ्यश्चागतः प्रत्यहं तदसौ
संभालयति, नतु किंचिदपि व्यापारति, ततो गुरुभिर्मूर्च्छितोऽयमत्रेति ज्ञात्वा अन्यत्र दिने तमनापृच्छ्यैव वहिर्गतस्य परोक्षे
कम्बलरत्नं पाटयित्वा साधूनां पादप्रोञ्छनकानि कृतानि, ततो ज्ञातव्यतिकरः कषायितोऽसौ तिष्ठति, अन्यदा च सूरयो जिनक-
ल्पिकान् वर्णयन्ति, तद्यथा–"जिणकप्पिआ य दुविहा पाणीपाया पडिग्गहधरा य। पाउरणमपावरणा इक्किका ते भवे दुविहा ॥१॥
दुग १ तिग २ चउक्क ३ पणगं ४ नव ५ दस ६ इक्कारसेव ७ बारसगं ८। एए अट्ठविगप्पा जिणकप्पे हुंति उवहिस्स ॥२॥त्ति"

(आव० वृत्तौ प्रव० ४९३–४९४ पत्रकल्पे) अनयोरर्थस्त्वेवम्–इह केषाञ्चिज्जिनकल्पिकानां रजोहरण मुखवस्त्रिका चेति द्विविध उपधिः१ अन्येषां तु कल्पेन सह त्रिविध २ कल्पद्वयेन सह चतुर्विध३ कल्पत्रयेण सह पञ्चविधः४ केषांचित्तु रजोहरण मुखवस्त्रिका चेति द्वय "पत्त पत्ताबंधो पायट्ठवणं च पायकेसरिआ। पडलाइं रयत्ताणं गोच्छगो पायनिज्जोगु ॥१॥"त्ति (ओघनि० ६६९) सप्तविधः पात्रनिर्योग इत्येव नवविधः५ कल्पेन तु सह दशविधः६ कल्पद्वयेन सहैकादशविधः७ कल्पत्रयेण सह केषाञ्चित् द्वादशविध उपधिर्जिनकल्पिकानामिति, तदेतच्छ्रुत्वा शिवभूतिना प्रोक्त–यद्येवं तर्हि किमिदानीमौधिक औपग्रहिकश्चैतावानुपधिः परिगृह्यते ?, स एव जिनकल्पः किं न क्रियते ?, ततो गुरुभिरुक्त–जम्बूस्वामिनि व्यवच्छिन्नोऽसौ, संहननाद्यभावात् साम्प्रत न शक्यो कर्तुं, ततः शिवभूतिना प्रोक्त–मयि जीवति स किं व्यवच्छिद्यते ?, नन्वहमेव त करोमि, परलोकार्थिना हि स एव निष्परिग्रहो जिनकल्पः कर्तव्यः, किं पुनरनेन कषायमूर्च्छादिदोषनिधिना परिग्रहानर्थेन ?,अत एव श्रुते निष्परिग्रहत्वमुक्तम्, अचेलकाश्च जिनेन्द्राः,अतो ऽचेलतैव सुन्दरेति, ततो गुरुणा प्रोक्त–हन्त यद्येव तर्हि देहेऽपि कषायभयमूर्च्छादयोः दोषाः कस्यापि संभवन्तीति सोऽपि व्रतग्रहणानन्तरमेव त्यक्तव्य' प्राप्नोति,यच्च श्रुते निष्परिग्रहत्वमुक्त तदपि धर्मोपकरणेष्वपि मूर्च्छा न कर्तव्येति मूर्च्छाया अभाव एव निष्परिग्रहत्वमवसेय, न पुनः सर्वथा धर्मोपकरणस्यापि त्यागः, जिनेन्द्रा अपि न सर्वथैवाचेलका', 'सव्वेऽवि एगदूसेण निग्गया जि णवरा चउवीस'मित्यागमवचनात् (आव० २२७) तदेव गुरुणा स्थविरैश्च यथोक्ताभिर्वक्ष्यमाणाभिश्च युक्तिभिः प्रज्ञाप्यमानोऽपि तथाविधकषायमोहादिकर्मोदयात् न स्वाग्रहाभिवृत्तोऽसौ, किन्तु चीवराणि परित्यज्य निर्गत', ततश्च बहिरुद्याने स्थितस्योत्तरानाम भगिनी वन्दनार्थं गता, सा च त्यक्तचीवरं त भ्रातरमालोक्य स्वयमपि चीवराणि त्यक्तवती, ततो भिक्षार्थं नगरमध्ये प्रविष्टा

गणिकया दृष्टा, तत इत्थं विवस्त्रां बीभत्सामिमां दृष्ट्वा मा लोकोऽस्मासु विराङ्क्षीदित्यनिच्छन्त्यपि तया परिधापिताऽसौ, स एव व्यतिकरोऽनया शिवभूतये निवेदितः, ततोऽनेन विवस्त्रा योषिन्नितरां बीभत्साऽतिलज्जनीया च भवतीति विचिन्त्य प्रोक्ताऽसौ–तिष्ठ त्वमित्थमपि, न त्यक्तव्यं त्वयैतद्वस्त्रं,देवतया हि तवेदं प्रदत्तमिति,ततः शिवभूतिना कौण्डिन्यकोट्टवीरौ शिष्यौ दीक्षितौ,ताभ्यामाचार्यशिष्यलक्षणा परम्परा प्रवृत्तेति बोटिकदृष्टेरुत्पत्तिरिति गाथार्थः ॥४॥ अथ दिगम्बरमतप्ररूपणामधिकृत्य मूलप्ररूपणामाह—

**तस्सयमूलपरूवणमुवगरणं धम्मसाहणं जं च। तंपिअ परिग्गहो खलु मुच्छाभयदोसहेउत्ति ॥५॥**

तस्य–दिगम्बरस्य मते मूलप्ररूपणं–प्रथम एव भाषणं 'जं च'त्ति चोऽप्यर्थे व्यवहितः संबध्यते, यद्धर्मसाधनमप्युपकरणं–रजोहरणादिचतुर्दशोपकरणलक्षणं तदपि परिग्रहः,खलुरवधारणे,परिग्रह एव, तत्र विशेषणद्वारा हेतुमाह–'मुच्छ'त्ति, तत्परिग्रहः कुतो ?, यतस्तदुपकरणं मूर्च्छाभयद्वेषहेतुरिति, ममेदमित्येवंरूपेण रागानुषङ्गो मूर्च्छा,चौरादेरुपहरणसमुत्थं भयं,तदनुपकारिणि च द्वेषः,तेषां हेतुरुपकरणमित्यर्थः, यस्मादेवं तस्मादुत्सर्गतो वस्त्रधारणं साधूनां न युक्तं, 'जिताचेलपरिसहो मुणि'त्ति वचनाद् वस्त्राभावे सत्येवाचेलतापरीषहो जितो भवेत्, यच्चागमे–"तिहिं ठाणेहिं वत्थं धरेज्जा,तं०–हिरिपत्तिअं१ दुगुंछावत्तिअं२ परीसहवत्तिअं३" (स्था० १७१ सू०) इति वस्त्रधारणमुक्तं,तच्च लज्जादिरक्षार्थं कारणिकमेव, कारणं चासदृशसाहसवतामस्मादृशामसंभवीति दिगम्बराभिप्रायमारूढः पूर्वपक्ष इति गाथार्थः ॥५॥ अथ दिगम्बरविकल्पितं पूर्वपक्षं प्रतिबन्द्यैव दूषयितुमाह—

**देहाहारप्पमुहं परिहरणिज्जं हविज्ज तस्समए। अहवा णाणाइ जओ पुरिसविसेसे सदोसंति ॥६॥**

देहः-शरीरमाहारः-अशनादिलक्षणश्चतुर्विधस्तत्प्रमुखं-तदादि,आदिशब्दात् शय्याऽऽसनवसत्यादिपरिग्रहः,तदपि तन्मते-दिगम्बरमते

परिहरणीय स्यात्, तत्राप्युक्तदोषाणां सुतरां संभवात्, आस्तामन्यत्, अथवा ज्ञानदर्शनचारित्राण्यपि त्याज्यानि भवेयुः, यतः पुरुषविशेषे ज्ञानाद्यपि सदोषं—त्वद्विकल्पितदोषभाग्, तत्कथमितिचेच्छृणु, भो नग्नाट! त्वया यद्वस्त्रं नाभ्युपगम्यते तत्र कारणं किं?, जिनानुपदिष्टत्वं वा१ तत मूर्च्छाहेतुत्वं वा२ भयहेतुत्वं वा३ क्रोधादिहेतुत्वं वा४ दुर्ध्यानहेतुत्वं वा५ परीषहसहनार्थं वा६ प्रवचनगौरवं वा७ अर्हदनभ्युपगतत्वं वा८ जिनकल्पिकानभ्युपगतत्वं वा९ इति नव विकल्पाः, आद्यो विकल्पो नात्मदोषावहः, लज्जादिरक्षानिमित्तं वस्त्रधारणस्य जिनैरनुज्ञातत्वात्, यदागमः—"तिहिं ठाणेहिं वत्थं धारेज्जा, तं०—हिरिवत्तियं१ दुगुंछावत्तियं२ परीसहवत्तियं३"ति श्रीस्थानांगे (सू. १७१) एतद्वृत्तिर्यथा—ह्रीः—लज्जा संयमो वा प्रत्ययो—निमित्तं यस्य धारणस्य तत्तथा, जुगुप्सा—लोकविहिता निन्दा सा प्रयोजनं यस्य तत्तथा, एवं परीषहाः—शीतोष्णदंशमशकादयः प्रत्ययो यत्र तत्तथे"ति, एतच्च त्वयाऽपि प्रागभ्युपगतं, परं कारणिकमित्यादि यदुद्भावितं तत् शून्यहृदयत्वात्सम्यक् नोपलक्षितं, तथाहि—वयमपीत्थमेव ब्रूमः—त्रिभिरेव कारणैः साधुर्वस्त्रं धरेत्, परं यानि कारणान्युक्तानि तानि कारणानि जिनकल्पाद्ययोग्यानां निरतिशयिनां च साधूनां सतत संभवन्त्येव, ततो धारणीयमेव वस्त्रं, यदि वा कृत्स्नापरीषहार्थं न तत् ध्रियते तथापि संयमनिमित्तमवश्यं धरणीयमेव, अन्यथा शीतकालेऽग्निज्वालनादिना महाऽसंयमापत्तेः, यच्चोक्तम् 'असमसाहसवतामस्माकं कारणमसंभवी'ति तर्हि भवादृशामाहारग्रहणमपि न युक्तं, तस्यापि कारणिकत्वात्, यदागमः—"छहिं ठाणेहिं समणे निग्गंथे आहारमाहारेमाणे णाइक्कमइ, तं०—वेअण१ वेयावच्चे२ इरियट्ठाए अ३ संजमट्ठाए४। तह पाणवत्तियाए५ छट्ठं पुण धम्मचिंताए६ ॥१॥"त्ति (सू० ५००) श्रीस्थानाङ्गे, अस्य व्याख्या—'छहिं'न्ति षड्भिः स्थानैः, नवरमाहारम्—अशनादिकमाहारयन्—अभ्यवहरन् नातिक्रामत्याज्ञां, पुष्टालम्बनत्वात्, अन्यथा त्वतिक्रामत्येव, रागादिभावात्, तथा—

'वेअण' गाहा, वेदना च–क्षुद्वेदना १ वैयावृत्यम्–आचार्यादिकृत्यकरणं २ वेदनावैयावृत्त्ये, भुञ्जीत वेदनोपशमनार्थं वैयावृत्त्यकरणार्थं चेति भावः, ईर्या–गमनं तस्या विशुद्धिः–युगमात्रनिहितदृष्टित्वमीर्याविशुद्धिस्तस्यै च ईर्याविशुद्ध्यर्थमिम्, इह च विशुद्धिशब्दलोपा-दीर्यापथमित्युक्तं, बुभुक्षितो हीर्याशुद्धावशक्तः स्यादिति तदर्थमिति, चः समुच्चये, संयमः–प्रेक्षोत्प्रेक्षाप्रमार्जनादिलक्षणस्तदर्थं, तथेति कारणान्तरसमुच्चये, प्राणाः–उच्छ्वासादयो बलं वा तेषां तस्य वा वृत्तिः–पालनं तदर्थं, प्राणसंधारणार्थमित्यर्थः, षष्ठं पुनः कारणं धर्मचिन्तायै, गुणनानुप्रेक्षार्थमित्यर्थः, इत्येतानि षट् कारणानीति । किंच–आहारकारणापेक्षया वस्त्रकारणं बलवत्तरमेव, यतो वस्त्रपरित्यागे लज्जादिमनुष्यधर्मरहितो लोके देवत्तायत्तोऽयमनालाप्यो द्रष्टुमप्यकल्प्य इत्याद्युपेक्ष्यैव परिह्रियते, आहारपरित्यागे चाहो महानुभावोऽयं तपस्वी यावत्पर्युपासनार्ह इत्यादिख्यातिमान् प्रवचनगौरवहेतुर्भवेत्, तस्माद्गुह्यावयवाद्याच्छादनेन मनुष्य-धर्मसत्यापनहेतुं वस्त्रमुपादाय परिहर परिणामानुचितमाहारविधिमिति सुहृद्वचः सत्यमेवेति बोध्यम् १। अथ मूर्च्छानिमित्तं हि वस्त्रमितिकृत्वा वस्त्रोपादानं नाभिमतमिति द्वितीयविकल्पश्चेत् तर्हि वयं पृच्छामः–भो नग्नाट! निजशरीरे तव मूर्च्छाऽस्ति नवा ?, अस्ति चेत्तर्हि शरीरवद्वस्त्रमपि तवास्तां, न्यायस्य समानत्वात्, नास्ति चेत्सुतरां वस्त्रे मूर्च्छा न स्यात्, न ह्यवाप्ते कल्पतरावमूर्च्छितः कल्पतरूपकारिण्यां तृणादिवृत्तौ मूर्छितः कोऽपि संभवेद्, अयं भावः–प्रायोऽनन्तकालेनापि दुर्लभं रत्नकोटिशतैरपि क्रयेणालभ्य-मनेककोटिद्रव्यव्ययेनापि परिपालनार्हं तत्परिपालननिमित्तं बहुमूल्यबहुवस्तुविनाशेऽपि प्रमोदास्पदं वस्त्राद्यनेकबाह्यवस्त्वपेक्षयाऽन्त-रङ्गं चिरकालस्थायि च अहिकण्टककर्करगर्त्ताग्निवातातपशीताद्युपद्रवेभ्यः परित्रायमाणं लक्षपाकादितैलोद्वर्त्तनजलधावनादिना परिशील्यमानं शर्करापानपुरस्सरमिष्टान्नपानादिभव्यभोजनविधिना परिपाल्यमानं, किं बहुना ?, स्वर्गापवर्गाद्यनेकाभीष्टार्थसाधक-

स्वेन कल्पतरुकल्प मानुष शरीरं, तत्रापि यदि तव मूर्च्छा नास्ति हन्त तर्हि शरीरापेक्षयाऽत्यन्तनिस्सारे कतिपयदिनान्तेऽवश्य स्वयमेव विनश्वरे क्षणमात्रेणैवाग्नितस्करायुपद्रवहते प्रायः क्रयविक्रयादौ सुलभतरे स्थूले बाह्ये वस्त्रादिवस्तुनि मूर्च्छा तु दूरापास्तैव, एवं सत्यपि यदि वस्त्रादौ तव मूर्च्छा स्यादेव तर्हि शरीरे तु सुतरां विशेषेणैव भविष्यति, शरीरार्थमेव वस्त्राद्युपादानात्, न हि दुग्धादिहेतोर्गवादेर्निमित्तमेव तृणादिकमुपकुर्वन् तृणादौ मूर्च्छावान् गवादौ चामूर्च्छितः केनापि वक्तुं शक्यते, गवादिमूर्च्छाजन्याया एव तृणादिमूर्च्छायाः सद्भावात्, तेन गवादौ या मूर्च्छा सा वास्तवी तृणादौ चोपचरिता बोध्या, एवं नग्नाटमते शरीरमूर्च्छापूर्विकैव वस्त्रादौ मूर्च्छा संभवति, नान्यथेतिकृत्वा यदि शरीरे न मूर्च्छितस्तर्हि वस्त्रस्यापि शरीरे सुतरामसूर्च्छित इति, ननु वस्तुगत्या विचारे शरीरे मूर्च्छाऽस्तीति वयमपि जानीमः, परं शरीरं त्यक्तुं न शक्यते इति चेत् सत्यं, 'न सक्कं त कीरइ'त्ति प्रवचनवचनात्, आहारविधिस्तु त्यक्तुं शक्यते, त्यक्तुं शक्यते य एव स एव त्यज्यताम्, आहारविधिमन्तरेण शरीरस्थितिरेव न स्यादिति चेत् माऽस्तां, को दोषः?, शरीराभावे संयमाभावात् मोक्षः कथं साध्यते इति तर्हि मूर्च्छाविषयोऽपि शरीरं मोक्षसाधनतया त्वयेष्यते?, अनन्यगत्या इष्यतेऽपीति चेत् तर्हि वस्त्रेण किमपराद्धं? यन्मूर्च्छाविषयत्वेन साम्येऽपि तावन्महता यत्नेन शरीरं परिपाल्यते वस्त्रं च परिह्रियते, किञ्च–भोजनमपि मूर्च्छाविषयो न वेत्यादिविकल्पोद्भावनेन प्रागुक्तयुक्त्या तिरस्करणीयं,तथा गुरुणा शिष्यः शिष्येण च गुरुरपि परिहरणीयः स्यात्, एवं तीर्थं तीर्थकृति ज्ञाने दर्शने चारित्रे चापि भाव्यं, सर्वत्रापि ममेदमित्येवंरूपेण मूर्च्छाया अनिवार्यत्वादित्यलं विस्तरेण२। अथ भयहेतुत्वमिति तृतीयो विकल्पः, सोऽप्यतिदुष्टः,गर्तासटकण्टकसर्पसिंहादिज्वरातिसारादिभ्यो भोजनभैषज्यालाभादिभ्योऽतिभोजनादिभ्यो दुष्टजनेभ्य पवनपावकपानीयादिभ्यश्चानेकधा शरीरहेतुकभयसंभवाच्छरीरस्याप्यवश्य

त्यागापत्तेः, तथा निद्रादिप्रमादवशेन विस्मरणादिभयहेतुर्ज्ञानं, शङ्कादिना विनाशभयहेतुर्दर्शनं,प्रमादाचरणादिना मालिन्यभयहेतुश्चारित्रमिति ज्ञानाद्यपि परिहरणीयं स्यात्, आस्तामन्यद्-भोजनेऽप्यजीर्णादिभयं भवत्येवेति भोजनमपि परिहरणीयं संपद्येत३।, अथ वस्त्रं क्रोधादिहेतुरिति चतुर्थो विकल्पः सोऽप्यकिञ्चित्कर एव, शरीरादेरपि क्रोधादिहेतुत्वेन त्यागापत्तेः, तत्कथमिति चेत् शृणु, आस्तामन्यत् परमहो अयं पापात्मा कुलवधूनामप्यवाच्यं दर्शयन् न लज्जत इत्यादितथाविधाऽऽर्यजनोक्तिस्तव कर्णपथमवतीर्णा तवैव क्रोधोत्पत्तिहेतुर्जायते, तन्निदानं च नग्नरूपतया बीभत्सं त्वदीयं शरीरमेव, तदभावे च तथाविधोक्तेरेवासंभवात् कुतः क्रोधादेरुत्पत्तिः?, एवमाहारविधावपि वाच्यं, तत्राप्यमनोज्ञाहारावाप्तौ त्वद्विकल्पितान्तरायपाते चानुपयोगिपुरुषविषयकः क्रोध उत्पद्यत एव, न चैतदसंभवीति वाच्यं, दशमगुणस्थानकं यावत्साधोरपि संज्वलनक्रोधादेरुदयात्, तन्निमित्तं चोक्तं कारणजातमेव, नान्यद्, एवं ज्ञानादावपि भाव्यं, ननु ज्ञानात् क्रोधोत्पत्तिः कथमितिचेत्तर्हि वस्त्रात् क्रोधोत्पत्तिः कथमिति वयं पृच्छामः?, तत्र वस्त्रापगमे चौरादिविषयकः क्रोधो वस्त्रनिमित्तक एवेति ममाशय इति चेत् तर्हि कश्चित्पाण्डित्यादिगुणैर्विख्यातः क्वचिद्राजसभादावपरपण्डितेन पराभूतोऽपभ्राजनां प्राप्तः स्वजेतरि पण्डिते क्रोधभाक् स्यात्, तत्र क्रोधनिदानं श्रुतज्ञानमेव, अनधीतस्य तथापराभूतेरेवासंभवात् कुतः क्रोधादिः?, एवं परवादिजये मानहेतुरपि ज्ञानमेव, ततः श्रुतमपि नाध्ययनीयं स्यात्, बाहुबल्यादिदृष्टान्तेन चारित्रमपि मानहेतुः, कथमन्यथा भ्रातृवन्दनभीत्या वर्षं यावत्कायोत्सर्गे तस्थौ, तन्मानकारणं च चारित्रमेव तदप्यनुपादेयं स्यात्, तथा सूरिपदादिकमपि कस्यचिन्मानहेतुत्वेन वस्त्रादिवन्नोपादेयं संपद्येत दिगम्बरमते इत्यलं प्रपञ्चनेति४। अथ दुर्ध्यानहेतुत्वं चेतिविकल्पः सोऽप्यनुचित एव, तथाहि-"से किं तं रोद्दज्झाणे?, रोद्दज्झाणे चउव्विहे पं०, तं०-हिंसाणुबंधी१ मोसाणुबंधी२ तेआ-

अथोद्गमादिदोषविप्रमुक्तं विशुद्धमेषणीयं भक्तपानादिकं रागादिदोषरहितः सन् सेवमानोऽपि जितपिपासादिपरीषहो मुनिर्भण्यते तर्हि योऽयं विधिर्भक्तादिषु यतेः स विधिर्वस्त्रेऽपि भण्यमानः क्वापि नष्टो ? येन तथाविधवस्त्रपरिभोगाज्जिताचेलपरीषहो मुनिर्न स्यात्, यत्तु साधूनामाचेलक्यमुक्तं तच्च वस्त्रे सत्यसति चागमे लोके च रूढं, तथाहि—इहाचेलक्यं द्विधा—मुख्यमौपचारिकं च, तत्र मुख्यं तीर्थकृतां कस्यचिज्जिनकल्पिकस्य च, तत्र तीर्थकृतां प्रव्रज्याप्रतिपत्तिसमये वामस्कन्धस्योपरि देवेन्द्रोपनीतदेवदूष्यवस्त्रापगमे सर्वथा वस्त्राभावात् मुख्यवृत्त्यैवाचेलकत्वं, जिनकल्पिकस्य तु कस्यचित्तथाविधलब्धिमतो जिनकल्पप्रतिपत्तेः रजोहरणमुखवस्त्रिकातिरिक्तोपकरणाभावात् सर्वथा वस्त्राभावादेवाचेलकत्वं मुख्यमेव, उक्तशेषसाधूनां तूपचरितं, यतस्ते परिशुद्धंजीर्णादिवस्त्रं मूर्च्छादिराहित्येन परिभुञ्जानाः सत्यपि वस्त्रेऽचेला एव भण्यन्ते, यदागमः—"परिसुद्धजुण्णकुच्छिअथोवानिअयण्णभोगभोगेहिं। मुणिणो मुच्छारहिआ संतेहिं अचेलया हुंति ॥१॥ (वि० २५९९) अस्या व्याख्या—मुनयः—साधवो मूर्च्छारहिताः सद्भिरपि चेलैरुपचारतोऽचेलका भवन्ति, कथंभूतैश्चेलैरित्याह—'परिसुद्ध'त्ति लुप्तविभक्तिदर्शनात् परिशुद्धैः—एषणीयैः तथा जीर्णैः—बहुदिवसैः कुत्सितैः—असारैः स्तोकैः—गणनाप्रमाणतो हीनैस्तुच्छैर्वा अनियतैः—कादाचित्कासेवनैः अन्यभोगभोगैः—लोकरूढप्रकारादन्यप्रकारेण भोगः—आसेवनं, प्रकारलक्षणस्य मध्यपदस्य लोपाद् अन्यभोगस्तेनान्यभोगेन भोगः—परिभोगो येषां तानि तथा, तैरित्येवंभूतैश्चेलैः सद्भिरप्युपचारतोऽचेलका मुनयो भण्यन्ते, एवंभूतं चाचेलकत्वं लोकेऽपि प्रसिद्धमेव, यथा कटीवस्त्रेण वेष्टितशिरसो जलावगाढपुरुषस्याचेलकत्वव्यपदेशः एवं साधोरपि कच्छाबन्धाभावात् कूर्पराभ्यामग्रभाव एव चोलपट्टकस्य धारणात् मस्तकस्योपरि प्रावरणाद्यभावाच्च लोकरूढ(प्रकारादन्य)प्रकारेण चेलभोगो द्रष्टव्यः, तदेवं 'परिसुद्धजुण्णकुच्छिअ' इत्यादिविशेषणविशिष्टैः सद्भिरपि चेलैस्तथाविधवस्त्रकार्याकर-

ध्रुवधी२ सारक्खणाणुबंधी४" ति० श्रीस्थानाङ्गे (८०४ प०) तत्र संरक्षण-सर्वभारणाद्युपायैस्तस्करादिभ्यो निजवित्तस्य सगोपनं तस्यानुबन्ध-सातत्येन चिन्तनं यत्र रौद्रध्याने तथथा, एवं संरक्षणानुबन्धो रौद्रध्यानस्य चतुर्थो भेदः, स च वस्त्रपात्रादावस्यमावात् दुर्गतिहेतुः, अतः वस्त्रादिवस्त्रमपि साधुना न ग्राह्यमिति दिगम्बराभिप्रायः, सोऽप्ययुक्तः, देहादिष्वपि जलज्वलनज्वलनमलिम्लुचश्वापदादिकण्टकविषादिभ्यः संरक्षणानुबन्धस्य तुल्यत्वात्, अतो देहादयोऽपि त्याज्या भवेयुः, अथेह देहादेर्मोक्षसाधनाङ्गत्वात् यतनया तत्संरक्षणानुबन्धविधानं प्रशस्तं न दोषायेति चेत् तर्हि प्रवचनप्रसिद्धेन यतनाप्रकारेणैवापि वस्त्रादौ संरक्षणानुबन्धविधानं कथं न प्रशस्तम्?, अथ वस्त्रादिमूर्च्छावतो लोकस्य भवभ्रमणकारणं वस्त्रादि प्रतीतं, तच्च साधूनां नोचितमिति चेत् नैव, यतो लोके शयनासनपानभोजनगमनावस्थानमनोवाक्कायचेष्टादयोऽप्यसंयतानामप्रशस्ताध्यवसायहेतुत्वेन संसारहेतवः, त एव संयतानां प्रशस्ताध्यवसायहेतुत्वेन मोक्षायैव संपद्यन्ते, तस्माद्वस्त्रादिस्वीकारेऽपि नेतरजनवत्साधूनां त्वदुद्भावितदोषलेशोऽप्यनुयुज्यते ५॥ अथ परीषहसहनार्थं वस्त्राभावोऽस्माकमिति षष्ठो विकल्पः सोऽप्यतितुच्छः, तथाहि-'जिताचेलपरीसहो मुणि' त्ति वचनाद्वस्त्राभावे सत्येवाचेलपरीषहो जितो भवतीति दिगम्बराशयः, तत्र दिगम्बरस्तावदित्थं प्रष्टव्यः-भो नग्नाट! किं चेलभोगमात्रेणाप्यजिताचेलपरीषहो मुनिर्भवति? येन भवता सर्वथा वस्त्रपरित्यागः क्रियते, आहोस्विदनेषणीयदोषदुष्टवस्त्रपरिभोगेण?, आद्यपक्षे यदि चेलपरिभोगमात्रेणापि साधुना आचेलक्यपरिषहो जितो न स्यात् तर्हि भक्तादिपरिभोगमात्रादपि जितक्षुत्पिपासादिपरिषहो मुनिर्न स्यात्, ततश्च यदि एषणीयादिगुणसंपन्नभक्तादिकं भुञ्जानोऽपि क्षुत्पिपासादिपरीषहजेता जगति न कश्चिदपि सिध्येत्, आसतामन्ये, निरुपमधृतिसंहननाः सत्त्वैकनिधयो जिनेन्द्रा अपि भगवन्तः सम्यगेषणादिगुणसंपन्नभक्तादिकं भुञ्जानास्त्वदभिप्रायेण न क्षुत्पिपासादिपरीषहजेतारः संभवन्ति,

अथोद्गमादिदोषविप्रमुक्तं विशुद्धमेषणीयं भक्तपानादिकं रागादिदोषरहितः सन् सेवमानोऽपि जितपिपासादिपरीषहो मुनिर्भण्यते तर्हि
योऽयं विधिर्भक्तादिषु यतः स विधिर्वस्त्रेऽपि भण्यमानः क्वापि नष्टो ? येन तथाविधवस्त्रपरिभोगाज्जिताचेलपरीषहो मुनिर्न स्यात्,
यत्तु साधूनामाचेलक्यमुक्तं तच्च वस्त्रे सत्यसति चागमे लोके च रूढं, तथाहि—इहाचेलक्यं द्विधा—मुख्यमौपचारिकं च, तत्र मुख्यं
तीर्थकृतां कस्यचिज्जिनकल्पिकस्य च, तत्र तीर्थकृतां प्रव्रज्याप्रतिपत्तिसमये वामस्कन्धस्योपरि देवेन्द्रोपनीतदेवदूष्यवस्त्रापगमे स-
र्वथा वस्त्राभावात् मुख्यवृत्त्यैवाचेलकत्वं, जिनकल्पिकस्य तु कस्यचित्तथाविधलब्धिमतो जिनकल्पप्रतिपत्तेः रजोहरणमुखवस्त्रिकाति-
रिक्तोपकरणाभावात् सर्वथा वस्त्राभावादेवाचेलकत्वं मुख्यमेव, उक्तशेषसाधूनां तूपचरितं, यतस्ते परिशुद्धंजीर्णादिवस्त्रं मूर्च्छादिरा-
हित्येन परिभुञ्जानाः सत्यपि वस्त्रेऽचेला एव भण्यन्ते, यदागमः—"परिसुद्धजुण्णकुच्छिअथोवानिअयण्णभोगभोगेहिं। मुणिणो मुच्छा-
रहिआ संतेहिं अचेलया हुंति ॥९॥ (वि० २५९९) अस्या व्याख्या—मुनयः—साधवो मूर्च्छारहिताः सद्भिरपि चेलैरुपचारतोऽचेलका
भवन्ति, कथंभूतैश्चेलैरित्याह—'परिसुद्ध'त्ति लुप्तविभक्तिदर्शनात् परिशुद्धैः—एषणीयैः तथा जीर्णैः—बहुदिवसैः कुत्सितैः—असारैः स्तो-
कैः—गणनाप्रमाणतो हीनैस्तुच्छैर्वा अनियतैः—कादाचित्कासेवनैः अन्यभोगभोगैः—लोकरूढप्रकारादन्यप्रकारेण भोगः—आसेवनं,
प्रकारलक्षणस्य मध्यपदस्य लोपाद् अन्यभोगस्तेनान्यभोगेन भोगः—परिभोगो येषां तानि तथा, तैरित्येवंभूतैश्चेलैः सद्भिरप्युपचा-
रतोऽचेलका मुनयो भण्यन्ते, एवंभूतं चाचेलकत्वं लोकेऽपि प्रसिद्धमेव, यथा कटीवस्त्रेण वेष्टितशिरसो जलावगाढपुरुषस्याचेलकत्वव्यप-
देशः एवं साधोरपि कच्छाबन्धाभावात् कूर्पराभ्यामग्रभाव एव चोलपट्टकस्य धारणात् मस्तकस्योपरि प्रावरणाद्यभावाच्च लोकरूढ-
(प्रकारादन्य)प्रकारेण चेलभोगो द्रष्टव्यः, तदेवं 'परिसुद्धजुण्णकुच्छिअ' इत्यादिविशेषणविशिष्टैः सद्भिरपि चेलैस्तथाविधवस्त्रकार्याकर-

भाव् तेषु मूर्च्छाया अभावात् मुनयोऽचेला व्यपदिश्यन्त इतीह तात्पर्यं, न चान्यथा परिभोगेणाचेलकत्वव्यवहारोऽप्रतीतो भविष्यतीति व
क्तनीय, "जह जलमवगाहंतो बहुचेलोऽवि सिरवेढियकडिल्लो । भण्णइ नरो अचेलो तह मुणओ सतचेलावि ॥१॥" (वि० २६००)वि
शेषावश्यकभाष्यवचनाल्लोकव्यवहारेऽपि प्रतीतत्वात्, तथा जीर्णादिभिरपि वस्त्रैरचेलत्वव्यवहारो यथा—"तह थोवजुण्णकुच्छिय
चेलेहिवि भण्णई अचेलुत्ति । जह तूर सालिय लहु दिसु पोत्तिं नग्गिआ मो॥१॥त्ति"(वि० २६०१) विशेषावश्यकभाष्ये,अस्या अर्थः,
पूर्वार्द्धं सुगमं, 'जह तूरे'त्यादि दृष्टान्त' यथा इह काऽपि योषित् कटीवेष्टितजीर्णबहुच्छिद्रैकशाटिका कश्चित्कोलिकं वदति—त्वरस्व
भो शालिक!—शीघ्रो भूत्वा मदीयपोतीशाटिकां निर्माप्य 'ददस्व' समर्पय, नग्निका वर्तेऽहं, तदिह सवस्त्रायामपि योषिति नाग्न्य
वाचकशब्दप्रवृत्तेः, तस्मादुपचरितमेवाचेलकत्वं संयमोपकारी, न पुनः सर्वथा वस्त्राभावः, तेनाचेलत्वपरीषहोऽपि तदेवेति बोध्यं ६।
नापि प्रवचनगौरवार्थमित्यपि विकल्पः श्रेयान्, वस्त्राभावे प्रवचनखिंसाया एवाध्यक्षसिद्धत्वाद्गौरवं तु दूरापास्तमिति ७। अथ
तीर्थकृद्वदनभ्युपगन्तृत्वमिति विकल्प' सोऽप्यभाव्यः, यतस्तीर्थकराः सर्वेऽपि निरुपमधृतिसंहननाः छद्मस्थावस्थायामपि ज्ञानचतु
ष्टयोपेता' अतिशयसत्त्वसंपन्नाः अच्छिद्रपाणयो जितसमस्तपरीषहा भवन्ति, तस्मात्तेषां वस्त्राद्यभावेऽपि संयमविराधनादयो दोषा
न भवन्ति, अतस्तीर्थकृतां वस्त्रादिकं संयमोपकार्यपि न स्यात्, अकिञ्चित्करत्वात्, यच्चैकं देवदूष्यवस्त्रमादाय तीर्थकृत प्रव्र
जन्ति तत् सवस्त्रो धर्मो मया प्रज्ञापनीय इति ज्ञापनार्थम्, एतेन तीर्थकृतां सर्वथा वस्त्राभाव एवेति दिगम्बराभिप्रायोऽपि तिरस्कृत,
यावत् तद्देवदूष्यवस्त्रधारणं तावत्कालं सचेला अपि भगवन्तो भवन्तीति, किंच—तीर्थकृदनुकृतौ छाद्मस्थ्ये धर्मोपदेशशिष्यप्रव्राजना
ध्यापनादिकमपि व्युच्छिद्येत, तीर्थकृता तदभावात् ८। अथ जिनकल्पिकाद्यनभ्युपगन्तृत्वमित्यपि न चारु, यतो जिनकल्पिका

अपि ये तथाविधलब्धिमन्तस्त एव वस्त्रं न बिभ्रति, शेषास्तु वस्त्रधारिण एव, अत एव जिनकल्पिकानामुत्कर्षतो द्वादशविध उपधिः प्राग्दर्शितः ९। इति वस्त्राभावप्रसाधनाय दिगम्बरोद्भावितविकल्पनवकं निरस्तमिति गाथार्थः ॥६॥ अथ दिगम्बरः शङ्कते—

**सीसो गुरुअणुहारी रूवेणावि अण्णहा कह णु सीसो ?। तेण वयं जिणसीसा गुरूवि अम्हाण जिणणाहो ॥७॥**

**नेवं जुत्तं जत्तो सीसो गुरुवयणसंठिओ निच्चं। सुगुरूवि हिउवएसी अहिअस्स निवारगो सीसे ॥८॥**

शिष्यस्तावद्रूपेणापि, आचारेण तु भवत्येवेत्यपिशब्दाद्बोध्यं, 'गुर्वनुहारी' गुरुसदृशो भवेत्, नु इति वितर्के, अन्यथा कथं शिष्यः ?, गुर्वनुरूपः शिष्यो भवेदित्यर्थः, तेन कारणेन वयमेव जिनशिष्याः, अस्माकमपि जिननाथो गुरुरितिदिगम्बराशय इति गाथार्थः ॥७॥ अथ दिगम्बराशयं निराकरोति—गुर्वनुकारी शिष्य इति वक्तुं न युक्तं, शिष्यत्वमेव तव व्याहन्येत, न ह्यर्हन् शिष्यत्वमात्मनः ख्यापयति, त्वं तु तीर्थकृच्छिष्यत्वमिति कथं तदनुरूपतेति दूषणं माता मे वन्ध्येति न्यायकल्पमुपेक्ष्यापि गुरुशिष्ययोः स्वरूपमाह—'सीसो'त्ति शिष्यो नित्यं गुरुवचनास्थितो गुर्वाज्ञातत्परः स्यात्, गुरुरपि हितोपदेशी अहितनिवारकश्च स्यात्, यदुक्तं—"हिताहितप्राप्तिपरिहारोपदेष्टा गुरु"रिति गाथार्थः ॥८॥ अथ गुरोरपि स्वरूपेण द्वैविध्यमाह—

**सोऽवि दुहा जिणणाहेअरभेआ आइमो अ देवगुरू। बीओ खलु सीसगुरू वीरसुहम्माइणाएण ॥९॥**

'सोऽपि' गुरुरपि द्विधा, जिननाथेतरभेदाद्—अर्हत्साधुभेदात्, तत्रादिमो 'देवगुरू' देवः सन् हिताद्युपदेशको देवगुरुः, परोपदेशमन्तरेणैव स्वयं संबुद्धः सन्, अमुकस्य तीर्थकरादेः शिष्य इत्येवंरूपः सन् पारन्त्र्येण हिताद्युपदेशकः शिष्यगुरुः, 'वीरसुधर्मादिज्ञातेन' श्रीवीरसुधर्मस्वामिदृष्टान्तेनेतिगाथार्थः ॥९॥ अथ श्रीवीरश्रीसुधर्मस्वामिनोः सर्वथा सादृश्याभावे हेतुमाह—

अरिहंतस्सुवयारी संजमजोएसु नेय वत्थाई। इअरेसिं उवयारी तेण णो सरिसया तुण्ह ॥१०॥

अर्हत संयमयोगेषूपकारी वस्त्रपात्रादिर्न भवति, इतरेषां–सुधर्मादिसाधूनां भवति, तेन तीर्थकृता सह साम्य न साधोरिति गाथार्थ ॥१०॥ अथार्हन् कीदृशः कीदृशाश्च साधव इत्याह—

तेण अरिहा रहिओ सलिंगपरलिंगऽगारलिंगेहिं। तस्सऽणुरूव रूव धरिउ सम्म न साहूण ॥११॥

येन कारणेन तीर्थकृतां वस्त्राद्यनुपयोगः तेन कारणेनार्हन् स्वलिङ्गपरलिङ्गगृहस्थलिङ्गै रहितः स्यात्, तत्र सलिङ्ग रजोहरणादि परलिङ्गमन्यतीर्थिकलिङ्ग पिच्छिकादिक गृहस्थलिङ्गं तु प्रतीतमेव, एभिर्विप्रमुक्तस्तीर्थकृद्भवति, यदागम–"सव्वऽवि एगदूसेण निग्गया जिणवरा चउवीसं। न य नाम अण्णलिंगे णो गिहिलिंगे कुलिंगे वा ॥१॥ (आ० २२७) इति, तस्यार्हतोऽनुरूप–सदृक्षं रूप धर्तुं न सम्यग्–सत्य युक्तमितिगाथार्थः ॥११॥ अथ तीर्थकरानुकरणे हितशिक्षामाह—

जइ जिणवरअणुकरणे वीसासो तुज्झ ता इमं सव्व। परिहर धम्मुवएसं छउमत्थे सीसकरणाइ ॥१२॥

यदि तीर्थकरानुकरणे विश्वासस्तर्हि एतद्–वक्ष्यमाणं सर्वं परिहरेत्यन्वय, एतत्किमित्याह—छाद्मस्थ्ये–छद्मस्थावस्थायां धर्मोपदेश शिष्यकरणादि च परिहर, यत तीर्थकराः छद्मस्थावस्थायां न धर्मोपदेशं कस्यचित्प्रव्रज्यां च ददति, आदिशब्दादस्य कस्य वय शिष्या अस्माक चायं गुरुरित्यादिव्यवहारोऽपि परिहर्तव्य, तीर्थकृतां तथाव्यवहाराभावात्, तथा आचार्यपदग्रहणं वाचनाध्यापनाध्यापनादि पुनः पुनर्लोचकरणं चैत्याद्यपि त्याज्यं, तेषां तदभावादितिगाथार्थ ॥१२॥ अथ प्रकारान्तरेणापि तीर्थकरानुकृति दूषयितुमाह—

**जइ जिणवरअणुकरणे वीसासो हुज्ज भावओ नियमा। ता किं तस्सुवएसे विसासो ? न उण निउणमए ! ॥१३॥**

पूर्वार्द्धं सुगमं, यदि जिनवरानुकरणे विश्वासः ता–तर्हि तस्य–जिनस्योपदेशे पुनर्न किं विश्वासः?,तत्रावश्यं विश्वासः कर्त्तव्यः, हे निपुणमते! इति संबोधनं,यद्वा जिनस्योपदेशे किंलक्षणे?–निपुणानां–दक्षाणां मतः–सम्मतो विद्याद्यपेक्षया वल्लभो निपुणमत-स्तस्मिन्निति गाथार्थः ॥१३॥ अथार्हदुपदेशमाह—

**उवएसो पुण एवं जिणकप्पो संपयं समुच्छिन्नो। जेणं सो नवपुव्वी पडिवज्जइ पढमसंघयणी ॥१४॥**

उपदेशः पुनरेवं यत्साम्प्रतं जिनकल्पः समुच्छिन्नः–सम्यक् प्रकारेणोच्छिन्नः,तत्र हेतुमाह–येन कारणेन तत्प्रतिपत्ता श्रुतमधिकृत्य नवपूर्वी–नवपूर्वधरः, अर्थात्किञ्चिन्न्यूनान्यपि नव पूर्वाणि यस्येति, प्रथमसंहननी–वज्रर्षभनाराचसंहननी, एतद्द्वयं चाधुना नास्तीति कारणाभावात्कार्यस्याप्यभावः प्रदर्शित इति गाथार्थः ॥ १४ ॥ अथ यत्सामग्र्यभावे यन्नास्ति यत्सामग्रीसद्भावे च यदस्ति तद्दर्शयितुमाह—

**तस्सामग्गिअभावा जिणकप्पो नत्थि अत्थि थेराणं। कप्पो तित्थपवित्तीहेऊ उवगरणपरिकलिओ ॥१५॥**

तस्य–जिनकल्पस्य सामग्र्या उक्तलक्षणाया अभावाज्जिनकल्पो नास्ति,सम्प्रतीति गम्यं, श्रुतसंहननादिसामग्र्यभावात्, तन्निमित्तस्य जिनकल्पस्योच्छेद इत्यर्थः, ननु कस्मिन्काले व्युच्छिन्न इति चेद्, उच्यते, जम्बूस्वामिनि निर्वृत्ते जिनकल्पो व्युच्छिन्नः, यदुक्तं भाष्यकारेण–"मण१परमोहि२ पुलाए३ आहारग४ खवग५ उवसमे६ कप्पे७। संजमतिग८ केवलि९ सिज्झणा य१० जंबुंमि वुच्छिन्ना" ॥१॥ (वि० २५९३) अस्या अर्थः–मनःपर्यायज्ञानं१ परमावधिः२ पुलाकलब्धिः३ आहारकशरीरं४ क्षपकश्रेणिः५

उपशमश्रेणि६ जिनकल्प७ परिहारविशुद्धिसूक्ष्मसंपरायथाख्यातलक्षणं संयमत्रिकं८ केवली९ मोक्षगमनलक्षणा सिद्धिश्च१०, सर्वेऽप्येते पदार्था जम्बूस्वामिनि व्युच्छिन्ना, जम्बूस्वामिनं यावत्प्रवृत्ताः, न तूत्तरत्रेति श्रीविशेषावश्यकभाष्यवृत्तौ ३१३ पत्रे। अथ कारणसद्भावे किमस्तीत्याह—'अत्थि'त्ति चकारोऽध्याहार्यः अस्ति च स्थविराणां कल्पः स्थविरकल्पः, कीदृक्ष?—तीर्थप्रवृत्तिहेतुः, सर्वेष्वपि तीर्थेषु अच्छिन्नप्रवृत्तिहेतवः स्थविरकल्पिका एव साधवो भवन्ति, तेषामेव धर्मोपदेशप्रव्रज्यादानादावधिकारः, न पुनर्जिनकल्पिका अपि, तेषां धर्मोपदेशप्रदानादावनधिकारात्, स्थविरकल्पः पुनः कीदृशो भवति?—उपकरणपरिकलितः, तत्रोपकरणानि रजोहरण१ मुखवस्त्रिका२ कल्पत्रिक५ चोलपट्टक६ सागारमपात्रं—मात्रापरपर्याय७ सप्त च पात्रसम्बन्धीनि 'पत्तं पत्ताबन्धो' इत्यादिप्रागुक्तानि१४ इति चतुर्दशोपकरणानि जघन्यपदेऽपि स्थविरकल्पे भवन्ति, तैः परिकलितः—सहितः स्थविरकल्पो भवतीति जिनोपदेश इति गाथार्थः ॥१५॥ अथोपदेशकरणे दृष्टान्तमाह—

विज्जुवएसं रोगी कुणमाणो लहइ इच्छिअं लच्छिं। जइ तह तस्सवि चरिआमणुहरमाणो अणुहरंतोऽवि ॥१६॥

यथा वैद्योपदेशं कुर्वाणो रोगी रोगाद्विमुक्तः इप्सितां—वाञ्छितां लक्ष्मीं लभते, न तथा तस्यापि—वैद्यस्यापि चर्याप्रवृत्तिमनुहरन्—वैद्यानुकारं कुर्वन् रोगाद्विमुच्यते, प्रत्युत वैद्योपदेशमकुर्वन् वेषादिना तदनुकारं कुर्वन् मण्डिक इत्यभिधीयते, वैद्योऽप्ययमनुचितं इतिकृत्वा परिहरतीति गाथार्थः॥१६॥ अथोपनयमाह—

एवं जिणिंदआणं कुणमाणो लहइ निव्वुइट्ठाणं। आगिइमणणुहरंतो विवरीए ऽणंतसंसारं ॥१७॥

एवं—प्रागुक्तदृष्टान्तेन द्रव्यवैद्येन भाववैद्यस्य जिनेन्द्रस्याज्ञामेव कुर्वाणो निर्वृतिस्थाने—मोक्षास्पदं लभते—प्राप्नोति, किं कुर्वन्?—

आकृतिमननुहरन्, आकारानुकारं परित्यजन्, अपिगम्यः, तीर्थकृदनुकारमकुर्वन्नपीत्यर्थः, गुरुशिष्यसंबन्धे आज्ञाया एव प्राधान्याद्, अयं भावः—यथा द्रव्यवैद्योपदेशेनैव प्रवर्त्तमानो रोगी नीरोगतां भजते तथा जिनाज्ञया प्रवर्त्तमानो हि तदनुकाररहितो मोक्षमाप्नोति, अन्यथा विपरीतो—वैपरीत्यं कुर्वन्नाज्ञामतिक्रम्य नटवत्तदनुकारं कुर्वन्नपि अनन्तसंतापम्—अनन्तकालं यावत् क्लेशं नरकादौ लभते, यतः—"रण्णो आणाभंगे इक्कुच्चिअ होइ निग्गहो लोए। सव्वण्णुआणभंगे अणंतसो निग्गहं लहइ ॥१॥" इति, अत एवास्तामन्यद्, जिनेन्द्राज्ञापराङ्मुखो जिनेन्द्रमेव महाविभूत्या पूजयन्नपि तिरस्करणीयः, यदुक्तम्—"आणाखंडणकारी जइवि तिकालं महाविभूईए। पूएइ वीअरायं सव्वंपि निरत्थयं तस्स ॥१॥" त्ति अत एव हे नग्नाट! तव च तीर्थकरशिष्यत्वात् तदाकारादिकं प्रमाणं तर्हि तदुपदेशोऽपि प्रमाणमास्तां, तथा किं नाग्न्यव्रतस्वीकारेणात्मानं विगोपयसि?, नहि नाग्न्यादिव्रतरूपं कष्टमेवात्मनां कर्मक्षयकारणं, किंतु जिनाज्ञैव, यदुक्तं—"विशिष्टकष्टस्य कर्मक्षयं प्रत्यकारणत्वाज्जिनाज्ञाया एव कर्मक्षयं प्रति कारणत्वात्," तस्माच्चतुर्दशोपकरणविशिष्टं तीर्थकृदुपदिष्टमस्माकमप्यभीष्टं स्थविरकल्पिकमार्गमेव स्वीकुर्विति गाथार्थः॥१७॥ अथोपकरणाभावे दोषदिशं दर्शयन्नाह—

**उवगरणाणमभावे न हुंति समिईउ संजमो कत्तो?। तयभावा उ नराणं तुब्भ मए नेव निव्वाणं ॥१८॥**

वस्त्रपात्राद्युपकरणाभावे समितयः—ईर्याभाषैषणादानपारिष्ठापनिकालक्षणाः पञ्च समितयो न भवन्ति, तदभावाच्च कुतः संयमः?, संयमाभावाच्च तव मते नराणां—पुरुषाणाम्, अपिगम्यः, स्त्रीणामिव पुरुषाणामपि निर्वाणं नैव संभवेदित्यक्षरार्थः, भावार्थस्तु संक्षेपेण त्वेवं—वस्त्राभावे शीतातपवातवारिप्रभृत्युपद्रवे तथाविधधृतिसंहननादिबलरहितः साधुर्द्रुतं२ गच्छन्नागच्छंश्च नेर्यासमितः स्यात्, पात्राभावे च संसक्तसक्तुदध्यादिकं गलनादिभयात् त्वरितं२ गृह्णानो भुञ्जानोऽप्यनेषणासमितः स्यात्, भाजनाभावे च केवलभूमौ

प्रश्रवणसिङ्घानादि कुर्वन् वर्षाकाले विशेषतोऽनेकजन्तुघातकः कथं पारिष्ठापनिकासमितः ?, एवं कुर्वाणः केनाप्युदीरितः सम्यग् वक्तुमशक्तो भाषासमितो न स्यादेव, आदाननिक्षेपणासमितस्तु वस्त्रपात्रादिसद्भावे सत्येव संभवतीति पञ्चानामपि समितीनामभावः प्रदर्शितः, उपलक्षणात् मनोवाक्कायगुप्तयोऽपि सुतरां न संभवन्ति, 'तदभावात्' समित्याद्यभावात् संयमाभाव इत्यादि, वस्त्राद्युपकरणसद्भावे च ये गुणास्ते स्त्रीनिर्वाणव्यवस्थापनावसरे वक्ष्याम इति गाथार्थः ॥१८॥ अथ यदा शिवभूतिना नग्नभावोऽभ्युपगतस्तदानीमुत्तरानाम्न्याः स्वभगिन्या वस्त्रपरिधानमनुज्ञातम्, एवं च सति यदि स्त्रीणां मुक्तिं प्ररूपयति तदा सवस्त्रनिर्वस्त्रयोरविशेषापत्त्या स्वकीयनग्नभावस्य केवलं क्लेशत्वेनापत्तेति विचिन्त्य स्त्रीणां मुक्तिर्निषिद्धा, अतो वस्त्राभावविषयकमूलप्ररूपणानन्तरं स्त्रीमुक्त्यभावप्ररूपणेतिकृत्वा चतुर्विंशत्या गाथाभिः स्त्रीणां मुक्त्यभावे युक्तिं तत्प्रतीकारं च विभणिषुः प्रथमगाथामाह—

इत्थीमुत्तिअभावे जुत्तिं जंपेइ दुब्बला अबला । तम्हो जुत्त जम्हा दुब्बलया केण धम्मेण ? ॥१०॥

अबला'—स्त्रियो दुर्बला—बलरहिताः मुक्तिसाधनबलशून्याः, अतः स्त्रियो न मुक्तिभाजः, अत्र प्रयोगः—स्त्रियो न मुक्तिभाजः पुरुषापेक्षया दुर्बलत्वात्, नपुंसकवदिति स्त्रीमुक्त्यभावे युक्तिं 'जंपेइ' त्ति कथयतीति दिगम्बरेण पूर्वपक्षितम्, अत्र तत्प्रतिकारं सिद्धान्तमाह—'तम्हो' त्ति तस्माद्युक्तं न युक्तं, यस्मात् केन धर्मेण दुर्बलता ?, न केनापीत्यर्थ इति गाथार्थः ॥१९॥ अथ केनापि धर्मेण दुर्बलता न भवतीति समर्थयति—

संघयण पुण पढम सत्त सम्म च विरइपरिणामो । अण्णाणि धम्मकम्म दीसइ तीसेऽवि ताणाई ॥२०॥

संहननं पुनः प्रथमं—[illegible] ग्रामपि भवत्येव, यदागम —"संघयणं संठाणं उच्चत्त चेव कुलगरेहिं स

मं।"ति श्रीआवश्यकनि०(१६०) तथा सत्त्वं–साहसवत्त्वं,परीषहसहनादौ स्वप्राणव्यपरोपणं यावद्धैर्यं,तदपि तासामसदृशं लोकेऽपि प्रतीतं,–"रागो वा यदिवा द्वेषः,कोऽपि लोकोत्तरः स्त्रियाः। ददाति रागिणी प्राणानादत्ते द्वेषिणी च सा ॥१॥" इति, अत एव काश्चन स्त्रियः पत्यौ मृते तदनुरागेण सतीत्वख्यातिहेतुकाभिमानेन वा वह्नावपि निश्शङ्कं प्रविशन्तीति तवापि प्रतीतं, तथा सम्यक्त्वं–यथार्थवस्तुश्रद्धानं, तच्च तासां नास्तीति चेत्, मैवं, प्रथमसंहननादिसमन्वितायाः मनुजगतेरेव क्षायिकसम्यक्त्वनिमित्तत्वेनोक्तत्वात्, चकारः समुच्चयार्थः, तथा विरतिः–सर्वविरतिस्तस्याः परिणामः–अध्यवसायः, सोऽपि तासां युक्त एव, अन्यथा त्रिविधसङ्घापत्त्या तीर्थतीर्थंकरयोः स्वरूपस्यैव हान्यापत्तिः, यतस्तीर्थं चतुर्वर्णः श्रमणसङ्घस्तत्कर्त्ता तीर्थङ्करश्चेति स्वरूपस्याभिमतत्वात्, न चाव्यवधानेन यथाख्यातचारित्रमेव मोक्षाङ्गं, तच्च स्त्रीणां न संभवतीति वाच्यं, क्षायिकसम्यक्त्ववद्यथाख्यातचारित्रस्याप्यविरुद्धत्वात्, सामग्र्यास्तौल्यात्, तथा 'अन्नंपि'त्ति अन्यदपि दानादिकं, दानशीलतपोभावनालक्षणं 'धर्मकर्म' धर्मकृत्यं 'तस्याः' स्त्रिया दृश्यते, इत्येवंविचारणया धर्मकृत्यमाश्रित्य न पुरुषेभ्यो दुर्बलता, किंतु पुरुषसमतैवेतिगाथार्थः ॥२०॥ अथ पुरुषापेक्षया धर्मे दार्ढ्यमपि स्त्रीणां संभवतीति दर्शयति—

**तित्थयराणं जणणी इत्थीवग्गंमि तेण जिणधम्मे। थीणं तिव्वो रागो तेणेव न सत्तमीगमणं ॥२१॥**

तीर्थकृतां जननी तावत्स्त्रीवर्गे–स्त्रीजातौ वर्त्तते, स्त्रीजनान्तर्वर्त्तिनी तीर्थकरमाता, तेन कारणेन पुरुषापेक्षया स्त्रीणां जिनधर्मे तीव्रो रागः, पुरुषापेक्षया विशेषतर इत्यर्थः, यत एवं तेनैव कारणेन, अथवा इवोत्प्रेक्ष्यते, तेन कारणेन स्त्रीणां सप्तमीगमनं–सप्तमनरकपृथिव्यामुत्पत्तिर्नास्तीत्यक्षरार्थः, भावार्थस्त्वयं–ज्ञानादिलक्षणस्य धर्मस्याधारस्तावत्तीर्थं, तद्व्यवस्थापकस्तु तीर्थकरः, तीर्थ-

स्यान्छिभग्नघिरेतवस्तु गमधरादिसाधनः, तन्मातर स्त्रिय एव भवन्ति, मातॄणां च निजापत्येष्वकृत्रिम स्नेहः स्यात्, तन पि त्रायपञ्चया मातर स्वापत्यानि मातिस्नेहं परिपालय तीति जगत्स्थिति', अत एव श्रीऋषभजिने प्रव्रजिते पुत्रस्नेहे शोकाश्रुविमो चनात् क्षामलोचना मरुदेवी प्रत्यहं भरत प्रति—हे भरत ! मत्पुत्र ऋषभो निरशनो निर्वसनो निर्यानो वनवासी वने एकाक्येव परिभ्रमति, त्व तु राज्यसुखनिमग्नस्तच्चिन्तामपि न करोपि, इत्याद्युपालम्भपरायणा वर्षसहस्रं यावत् क्षणमात्रमपि स्वास्थ्य न प्राप न चैव नामिकुल करोऽपि, आस्तां जन्ममाता, कुक्षिधरमात्रेणापि देवानन्दा ब्राह्मणी श्रीवीरवन्दनार्थमागता श्रीवीरं निरीक्ष्य निर्निमेषतया पश्यन्ती रोम भिताऽतिस्नेहन स्तन्यपय'भावेष्पार्द्रकञ्चुकी संजज्ञे इति प्रवचने प्रतीतम्, एवं तीर्थंकरमातॄणां तज्जातीयानामन्यासामपि स्त्रीणां तीर्थंकर तीर्थकरापत्येषु साधुषु तीर्थंकरमापिते च श्रुतचारित्रादिधर्मे तीव्रो रागो युज्यते, एतच्च संप्रति प्रत्यक्षमपि लक्ष्यते, कासांचित् स्त्रीणां पुरुषापेक्षयाऽधिकतरस्यापि धर्मरागस्योपलभ्यमानत्वात्, प्रत्य पलापस्य केनापि कर्तुमशक्यत्वात्, नचैष सम्प्रत्युपलभ्यते परं पूर्व नासीदिति शङ्कनीयं, तीर्थंकरवारकेऽपि तथैवोपलम्भात्, तथाहि—छाद्मस्थ्ये भगवता श्रीवीरेण द्रव्यत कुल्माषाः क्षेत्रतो देहल्या एकं पादमारत एक पाद च परत कृत्वा कालतो भिक्षाचरेषु निवृत्तेषु भावतो राजसुता दासत्वमापन्ना मुण्डितशिरोऽष्ट मोपवासिका धयकोणस्थिताग्न् कुल्माषान् रुदती दास्यति तदा मम पारणकमिति घोराभिग्रहे कृते चतुर्षु मासेषु गतेषु कौशाम्ब्यां शतानीकराजस्य मृगावती नाम राज्ञी कदा भगवतः पारणक भावीति भगवति तीव्ररागेण प्रत्यहं चिन्तापरा तध्यवसादिन निमित्तज्ञ पृष्टवती, न पुन कोटिश संख्येष्वपि श्रावकेषु विद्यमानेषु कोऽपि श्रावक पृष्टवान्, तत्र कारणं किं रागोऽन्यद्वेति स्वयमेव विचा- रणीय, तथा भिक्षामलात्वा चलमाने भगवति वीर चन्दनबालैवारुदत्, न चैव कोऽपि श्रावकः श्रूयते, तथा मङ्खलिपुत्रमुक्ततेजो

लेश्याजन्यरक्तातिसारवतो वीरस्य बाधा सर्वजनप्रतीता, तद्बाधोपशमनाय श्राविका रेवत्येवौषधचिन्तां कृतवती, श्राद्धास्तु कोटिशः-
संख्याका अपि निश्चिता एवासन्, तत्रापि धर्मरागतारतम्यमेव कारणं संभावनीयमिति सिद्धं कासांचित्स्त्रीणां पुरुषापेक्षया धर्मरा-
गेणाधिक्यमपि, अत एव श्रीमहावीरस्य साध्व्यः साधुभ्यो द्विगुणा एव मोक्षं गताः, यदागमः–"समणस्स भगवओ महावीरस्स
सत्त समणसयाइं सिद्धाइं,चउद्दस अज्जिआसयाइं सिद्धाइं"ति,श्रीपर्युषणाकल्पे,एवं श्रीऋषभादीनामपि बोध्यं,ननु स्त्रियोऽनन्तो-
दितपापार्त्ता भवन्ति, यदागमः–"णंताओ पावरासीओ, जया उदयमागया। तया इत्थित्तणं पत्तं, सम्मं जाणाहि गोअम ॥१॥"त्ति
श्वेतवाससामपि सम्मतं, एवंविधाः स्त्रियः कथं मुक्तियोग्या इति चेत्, मैवम्, अत एव पुरुषेभ्यस्तासां धर्मे दार्ढ्यकल्पनायाः प्रामा-
ण्यात्, लोकेऽप्येकः सुभटः द्वाभ्यां वैरिभ्यां समाक्रान्तस्तयोर्जयी बलवान् भण्यते, तदपेक्षया पञ्चजयी तु महाबलवान् एवमनन्ता
अपि पापप्रकृतीर्निर्जित्य मुक्तिभाजः स्त्रियः पुरुषेभ्यो धर्मेऽतिदार्ढ्यभाज इति सिद्धं, न चैवं पापेन तासां सप्तमीगमनं,यद्वा उत्प्रे-
क्ष्यते–हे पुत्र! मत्कुक्षौ समुत्पन्नो मज्जातीयानां स्त्रीणां सप्तमनरकगमनं निवारयेति जननीयाचित इव भगवान् मातृभक्त्यैव स्त्रीणां
सप्तमीगमनं निवारितवानिति, अथ क्षपणकः शङ्कते–ननु भोः पुरुषापेक्षया स्त्रीणां बलवत्त्वमुक्तं तत्किं सर्वेभ्यः पुरुषेभ्यः सर्वासां
स्त्रीणां अथवा कतिपयपुरुषेभ्यः सर्वासां स्त्रीणां उत सर्वेभ्यः पुरुषेभ्यः कतिपयस्त्रीणां किंवा कतिपयपुरुषेभ्यः कतिपयस्त्रीणामिति चे-
त्, सत्यं, भो नग्नाट! त्वामपि वयमपि पृच्छामः, त्वयाऽपि स्त्रीणां या दुर्बलता प्रोक्ता सा किं सर्वेभ्यः पुरुषेभ्यः सर्वासां स्त्रीणा-
मित्यादित्वदुक्तविकल्पचतुष्टये कस्मिन् विकल्पे विश्राम्यति?, आद्यविकल्पत्रये प्रत्यक्षबाधसंभवेन चतुर्थविकल्प एवास्माकमभिमत
इति चेत् तर्हि अस्माकमप्ययमेव पक्षोऽभिमतः, आस्तां कतिचित्पुरुषेभ्यः कतिचित्स्त्रीणां बलवत्त्वमित्ति, ननु स्त्रीणामेवाबला इ-

त्यमिधान कथमिति चेद् भो नघाः ! तथामिप्राय कथय, पश्चाद्वयमपि भणिष्यामः, मुक्तिगमनयोग्यशुभाध्यवसायाभावादूर्ध्वगमन-
सामर्थ्याभावादबला इत्यभिधीयन्ते इति चेद्वयमपि सप्तमनरकगमनयोग्याक्लिष्टपरिणामाभावादधोगमनशक्त्यभावादबला इत्यस्मा
ध्यवसायसामभिप्रायः, अत एव लोके पापकातराः स्त्रियो न संग्रामाद्युपयोगिन्य इति प्रतीतमेव, न च पापकातरा धर्मेऽपि तथैवे
ति शङ्कनीय, तीर्थकरादिषु व्यभिचारात्, तेषां पापकातरत्वेऽपि धर्मे शौर्यदर्शनादित्यलं प्रपञ्चेनेतिगाथार्थः ॥२१॥ अथ प्रागुक्त
विस्तृतमिव नमाटः प्राह—

अह तुच्छलया मणसा जेण न गच्छति सत्तमिं पुढविं। ता कह खवगस्सेणिं पडिवज्जिअ मुत्तिमुवयाति ? ॥२२॥

अथ स्त्रीणां मनसा—मनोवीर्यस्य दुर्बलता येन कारणेन वा —स्त्रियः सप्तमीं नरकपृथिवीं न यान्ति, ता—तस्मात् क्षपकश्रेणिं
प्रतिपद्य मुक्तिं कथमुपयान्ति ?, न कथमपीति दिगम्बरपूर्वपक्षोद्भावनेतिगाथार्थः ॥२२॥ अथ येषां सप्तम्यां गमनशक्तिस्तेषामेव
मुक्तावपीति दिगम्बराभिप्रायात्मकां व्याप्तिं व्यभिचारेण दूषयितुमाह—

अहगमणे जस्स सत्ती उद्ध सत्तीवि तस्स चेवत्ति। नेव नियमो बलदेववासुदेवेसु वभिआरो ॥२३॥

यस्य जीवविशेषस्याधोगमने शक्तिस्तस्योर्ध्वगमनेऽपीति व्याप्ति शीतोष्णस्पर्शयोरिव बाधग्रस्ता, यथा मत्स्यस्याधोगमने
शक्तिनोर्ध्वगमन मनागपि, चित्रमाधूपदर्शसहस्रस्यापि मोक्षहेतुत्वारित्रानु ...चेः, अथ यस्य जातिविशेषस्याधोगमने शक्तिस्तज्जाती
यस्यैवोर्ध्वगमनेऽपि शक्तिरित्यपि व्याप्तिं कथञ्चिद्बाधग्रस्ता—कथंचिद्व्यभिचारग्रस्तेति नैव नियमः, दृष्टान्तमाह—'बलदेवे'त्यादि
बलदेवजातिविशेषस्याधोगमनशक्त्यभावेऽप्यूर्ध्वगमनशक्तिः, वासुदेवजातिविशेषस्याधोगमनशक्तिसद्भावेऽपि न मनागप्यूर्ध्वग

मनशक्तिः, यदागमः—"उद्धंगामी रामा केसव सव्वे अहोगामी"ति (४१५) श्रीआ०नि०, एवमधोगमनशक्तिशून्या अपि स्त्रियो वलदेववदूर्ध्वगतिगामिन्यो भवन्त्येव, ननु यद्यपि नाधोगतिगमनशक्त्युपेता बलदेवादयो भवन्ति तथापि ते पुरुषा एव भवन्ति, पुरुषत्वजात्या च बलदेवसमानजातीया इतरे पुरुषा अधोगतिशक्त्युपेताः, अतो बलदेवा अप्युपचारात्तत्सामर्थ्यभाज उपचर्यन्ते एवेतिचेद्, उपचर्यतां नाम मनुजत्वजात्या स्त्रीसमानजातीया इतरे मनुजास्तथाशक्त्युपेता अतः स्त्रियोऽप्युपचारात्तथाशक्तिभाज इति, युक्तेस्तौल्यात्, तस्माद्बलदेववत् स्त्रीणामपि मुक्तिर्युक्तिसिद्धा, सिद्धान्तसिद्धापि 'समणस्स भगवओ महावीरस्स चउद्दस अज्जिआसयाइं सिद्धाइं'ति (पर्यु०) तथा "एगा सिद्धिं पत्ता मरुदेवी नाभिणो पत्ती"ति (आव० १६६) तथा मत्स्यानामधोगमने यावत्सप्तम्यामपि शक्तिः ऊर्ध्वं तु सहस्रारदेवलोकादर्वागेवेति मत्स्येष्वपि व्यभिचारः, एवमधोगमनशक्त्यभावेऽपि ऊर्ध्वगमनशक्तिभाजो जिनेन्द्रगणधरादिचरमशरीरिणो बोध्याः, तेषां तथास्वभावाद्, अतस्तेष्वपि व्यभिचारः स्फुट एव, अयं भावः—वासुदेवानामधोगमने शक्तिर्नोर्ध्वं मनागपि, बलदेवानामूर्ध्वं, नाधो मनागपि, मत्स्यानामधो महती लघीयसी चोर्ध्वं, स्त्रीणामूर्ध्वं महती लघीयसी चाधोगतिरिति सम्यक् पर्यालोच्य नाधोगमनशक्तिरूर्ध्वगतिनियामिका, बलदेववासुदेवयोर्व्यभिचारात् इति गाथार्थः ॥२३॥ अथाधोगतौ तुल्यसामर्थ्ये सत्येवोर्ध्वगतौ तुल्यसामर्थ्यमिति दिगम्बरेणोपदर्शिता व्याप्तिः सर्वथा प्रशिथिलयितुमाह—

**सरिसव[1]सउणि[2]चउप्पय[3]सप्प[4]त्थी[5]जलयराण[6]सन्नीणं। वीआइनिरयगमणं कमेण उड्ढं तु समगमणं ॥२४॥**

सरीसृपाः—भुजपरिसर्प्पाः शकुनयः—पक्षिणः चतुष्पदाः—सिंहादयः सर्प्पाः—उरःपरिसर्प्पाः स्त्रियः-स्त्रीरत्नादयः जलचरा—मत्स्यादयस्तेषां संज्ञिनाम्, असंज्ञिनां तु रत्नप्रभायाः परत उत्पादासंभवात्, द्वितीयादिनरकगमनं क्रमेण भवति, यथा सरीसृपाः

उत्कर्षतोऽपि द्वितीयायां शर्कराप्रभायामुत्पद्यन्ते, नाधः, शकुनयः पङ्कप्रभायां यावदुत्पद्यन्ते नाध इत्यादि, यावत् मत्स्याः सप्तम्यामपीति, ऊर्ध्वं तु सर्वेषामपि समं गमनं, सहस्रारं यावत्सर्वेषामप्युत्पादात्, अतः सरीसृपादीनामधोगमने वैषम्येऽपि ऊर्ध्वगमने शक्तिसाम्यमेवेति दिगम्बरोक्ताखिला व्याप्तिर्निर्मूलमुन्मूलितैवेति गाथार्थः ॥२४॥ अथोक्तं प्रकृते योजयति—

एवं थीपुरिसाण वेअम्मि अहोगई य अहिगिच्च। उड्ढगमणे भेओ नत्थि त्ति तेण थीमुत्ती ॥२५॥

'एवं' प्रागुक्तसरीसृपादिदृष्टान्तेनाधोगतिमधिकृत्य स्त्रीपुंसयोर्भेदेऽपि—वैषम्येऽपि ऊर्ध्वगमने भेदो नास्ति, तेन कारणेन स्त्रीणां मुक्तिरस्तीति युक्तिरतुरस्य कदर्थनपथपानकल्पाऽनिच्छतोऽपि दिगम्बरस्य गलबिलम्नेति गाथार्थः ॥२५॥ अथ स्त्रीणां चारित्रानङ्गीकारे त्रिविधसङ्घस्या पादोनं तीर्थं संपद्येतेति विचारबाह्यो दिगम्बरः प्रश्नयते—

अचला चीवरचरिआ चीवरचरिमाण होइ ममकारो। ममयापरिग्गहो खलु तेण नो थीण चारित्तं ॥२६॥

अचल'—तुच्छसत्त्वाः स्त्रियः 'चीवरचरिअ'त्ति चीवराणि—वस्त्राणि तैर्वृता—आच्छादिताः भवन्ति, चीवरावृतानां च ममकारो, ममता च परिग्रहः, येनागमः—"मुच्छा परिग्गहो वुत्तो"त्ति, तेन कारणेन परिग्रहवत्त्वेन स्त्रीणां चारित्रं न भवतीति,गाथार्थः॥२६॥ अथ चरणाभावे किं स्यादित्याह—

चरणाभावा मोक्खो इत्थीण नत्थि तत्थ को दोसो?। नहि सामग्गिअभावा कज्जं उप्पज्जए किंचि ॥२७॥

चरणाभावात् स्त्रीणां मोक्षो नास्ति तत्र को दोषः?, कोऽपि नास्तीत्यर्थः, हि —यस्मात् सामग्र्यभावात्—अविकलकारणाभावान्न किञ्चित् घटादिकं कार्यमुत्पद्यते, तथा चारित्राभावात् स्त्रीणां मोक्षाभाव इति गाथार्थः ॥२७॥ अथ दिगम्बरदुर्पक्षं दूषयितुमाह—

जइ इत्थीणं वत्थं सहजायं ता तउव नो दोसो । अह बंभवयहेऊ तोऽणुगुणं सव्वविरईए ॥२८॥

यदुक्तं वस्त्रावृता हि नार्यः, तत्र वस्त्रं किं स्त्रीणां सहजातं ब्रह्मव्रतहेतुर्वा ?, आद्यः पक्षः प्रत्यक्षबाधितः, नहि स्त्रीणां वस्त्रं त्वग्वत् सहजातं दृष्टं श्रुतं वा, तथात्वेऽपि त्वगिव वस्त्रं परिग्रहो न भवेत्, द्वितीयपक्षे चारित्रस्यानुगुणम्—अनुकूलं वस्त्रं, न हि यद् ब्रह्मव्रतहेतुस्तच्चारित्राभावहेतुः, शीतोष्णस्पर्शयोरिव विरोधात्, तथा च सिद्धं—चीवरधारणमेव चारित्रहेतुः, किंच—भो नग्नाट ! अबलानामम्बरपरिभोगः किं तीर्थकृदुपदिष्ट उत तव मताकर्षकशिवभूतिना प्ररूपितः अशक्यपरित्यागकृतो वा ?, आद्ये तावद्वस्त्रावृतानामेव मुक्तिः सिद्धा, यतः "प्रेक्षावतां हि प्रवृत्तिः स्वार्थकारुण्याभ्यां व्याप्ते"तिवचनात् परमप्रेक्षावत्त्वेन परमकारुण्यभाजो भगवन्तो नाबलानां मुक्त्युपघातकमुपदिशन्ति, तथात्वे ह्यास्तां तावदन्यत्, लोकनिन्द्या अप्यर्हन्तो भवेयुः, द्वितीये तु स्त्रीभिः शिवभूतेः किमपराद्धं ? येन पापात्मना वस्त्रदानेनाबलानां मुक्त्युपघातो विहितः, न ह्यान्तरवैरमन्तरेण कश्चित्तथाविधोत्कृष्टसंपद्विघातको भवेत्, अथ शिवभूतिनैव वस्त्रदानं स्त्रीणां ब्रह्मचर्यपालननिमित्तमेव विहितमिति चेद् आयातोऽसि स्वयमेव असदुक्तमार्गेण, यतो यद् ब्रह्मचर्यादिपालनहेतुस्तत्संयमं प्रति हेतुरेवेतिसिद्धं निष्परिग्रहताहेतुर्वस्त्रपात्रादिरिति,अशक्यपरित्यागकृत इति तृतीयोऽपि विकल्पः तुच्छः, प्रत्यक्षबाधात्, बाल्यावस्थायामिवान्यास्वप्यवस्थासु वस्त्राराहित्यस्य सार्वजनीनत्वात्, अथ कादाचित्कमेव वस्त्रसाहित्यमुच्यते तर्हि पुरुषाणामपि गार्हस्थ्ये वस्त्रसाहित्यस्य सद्भावात् पुरुषाणामपि मुक्त्यभावप्रसक्तेः, अथ कादाचित्कमपि प्रव्रज्याप्रतिपत्त्यनन्तरमेवोच्यते इति चेत् तर्हि अर्शोभगन्दरादिषु तद्व्रणमात्रोपयोगिनि वस्त्रे मूर्च्छाया अभावान्न दोष इति चेत् चिरं जीव, तर्हि शीतातपवातदंशमशकादिबाधितस्य शरीरस्य तच्चिकित्सामात्रोपयोगिनि वस्त्रे कुतो मूर्च्छेति विचार्य मोक्षसाधनस्य शरीरस्यो-

पष्टम्भक यत्रं धर्मोपकरणं, न मूर्च्छाविषय परिग्रह , किंतु तदतिरिक्तस्यासंयमनिमित्तस्य मूर्च्छाविषयत्वमागमे प्रतीत, तदेव परिग्रहः, नहि प्रासादनिष्पादनाभिप्रायवता भावकेण तदर्थमेव स्वायत्तीकृतं कनकादिक स्वगृहकरणोद्यतेन स्वायत्तीकृतस्वापतेयेन समानं स्यादपि गीयते,यतस्तयोरेकं धर्मोपष्टम्भकत्वेन मोक्षाङ्गमपर चाभवहेतुत्वेन संसारकारणम् ,एवं वस्त्रमपि संयमार्थमसंयमार्थं च गृहीत न समस्वभावं भवति,नन्वेवं कनकादिकस्यापरिग्रहत्वापत्त्या जगति किमपि परिग्रहो न स्यात् !, तथात्वे च दत्ताञ्जलिरेव परिग्रहापरिग्रहविचारस्येतिचेन् अहो वैदग्ध्यं भवत , नहि वयं स्वरूपेण सत् कनकादिकं किमपि वस्तुजातं परिग्रहमपरिग्रहं वा ब्रूमः, किंतु यन्मूर्च्छाविषयं संयमोपघाति तत्परिग्रहः, यदागमं–तम्हा किमत्थि वत्थुं गंथोऽगंथो व सव्वहा लोए?। गंथोऽगंथो व मओ मुच्छममुच्छाहिं निच्छयओ ॥१॥ वत्थाइ तेण जं ज संजमसाहणमरागदोसस्स । तं तमपरिग्गहो च्चिअ परिग्गहो जं तदुवघाई ॥२॥" (२५७३–४) इति श्रीविशेषावश्यकभाष्ये, एतद्वृत्तिलेशो यथा–तस्मात् किं नाम तद्वस्त्वस्ति लोके यद् आत्मस्वरूपेण सर्वथा ग्रन्थोऽग्रन्थो वा ?,नास्त्येवैतदित्यर्थः, ततश्च 'मुच्छा परिग्गहो वुत्तो,इअ वुत्तं महेसिणे'ति वचनात् यत्र वस्त्रदेहाहारकनकादौ मूर्च्छा समुत्पद्यते तन्निश्चयत–परमार्थतो ग्रन्थः, यत्र तु सा नोपजायते तदग्रन्थ इति। एतदेव व्यक्तीकरोति–'वत्थाइ तेणे'त्यादि, तेन–तस्मात्, शेषं सुगममिति श्रीवि० टीका। तथा च वस्त्रपात्रादिकं संयमोपकारक, तथाऽग्रेवाऽग्रे वक्ष्यते इति, गाथार्थ ॥२८॥ अथानन्तरगाथायां स्त्रीणां वस्त्रपरिभोगः किं तीर्थकृदुपदिष्टो नेत्यादिविकल्पत्रयीत्रिशूल्याहतो व्याकुलीभूत पलायनदिशमलभमानो दिगम्बरः स्त्रीणां ब्रह्मव्रतधरणाय वस्त्रधारणमित्युक्तवान्, तच्च सर्वविरतेरनुकूलमेवेत्यस्मदीयं वचः श्रुत्वा दिगम्बरेण किं कर्तव्यमित्युपदेशमाह—

**ता जह देहं संजमभारुव्वहणत्थमन्नमाईहिं। पोसिज्जा तह नियमा पालेहिवि चीवराईहिं ॥२९॥**

यस्मात्प्रागुक्तं तव प्रमाणं 'ता'तस्मात् यथा देहं–शरीर संयमभारोद्वहनार्थमन्नादिभिः–अशनपानखादिमस्वादिमैः पुष्णीयाः तथा 'चीवराईहि'न्ति चीवरादिभिः, आदिशब्दात् यावच्छरीरोपष्टम्भकं वसतिपात्रादिकं तस्यापि ग्रहः, वस्त्रपात्रवसत्यादिभिः संयमं पालयेत्यर्थः, अन्यथा अशनादिकमपि शरीररक्षानिमित्तं न ग्राह्यम्, अयं भावः–यथा तवेष्टसंयमहेतुशरीरस्य स्थितिहेतवे अशनादिकं गृह्यते तर्हि तादृक्शरीरपरिपालननिमित्तेन वस्त्रादिना किमपराद्धं ?,तस्माद्यथा क्षुधादिपीडितं शरीरं न संयमहेतुस्तथा शीतातपदंशमशकादिपीडितमपीति बोध्यमितिगाथार्थः ॥२९॥ अथ वस्त्रपात्रधरणे ये गुणास्तान् दर्शयितुमाह—

**लोआणुवत्तिधम्मो लज्जा तह बंभचेररक्खा य। सीआतवदंसमसगपीडारहिअस्स सज्झाणं ॥३०॥**

वस्त्रधरणे लोकानुवृत्तिधर्मः प्रथमो गुणो लोकप्रतीतः, तत्र लोको–मर्त्यलक्षणो, नतु तिर्यगादिः, तस्य लज्जादिनिमित्तं वस्त्रधारणासंभवात्, तस्यानुवृत्तिः–अनादिसिद्ध आचारस्तल्लक्षणो धर्मः सत्यापितः स्यादित्यर्थः, तथा 'लज्ज'त्ति लज्जा–व्रीडा संयमो वा, अर्थात्सा रक्षिता भवेद्, वस्त्राभावे च रासभादिवदविशेषेण लज्जाराहित्यं स्यात्, लज्जारहितस्य च कुतश्चारित्रपालनं ?, चकारः समुच्चयार्थः, ब्रह्मव्रतरक्षा च–वस्त्रावृतस्य लज्जया ब्रह्मचर्यं स्याद्, अन्यथा वडवादर्शनात् वाडवस्येव स्त्रीदर्शनाल्लिङ्गादिविकृत्या प्रवचनोड्डाहाब्रह्मसेवादयो बहवो दोषाः सर्वजनविदिता भवेयुः, तथा वस्त्रैः शीतोष्णकालादिषु शीतातपदंशमशकैर्या पीडा तया रहितस्य सद्ध्यानं–धर्मशुक्ललक्षणं स्याद्, वस्त्राभावे च क्षुधाद्यनाकुलस्यापि दुर्ध्यानम्–अग्नितृणादिसेवाभिप्रायेण दुर्ध्यानं, तत्सेवने चासंयमः स्यादितिगाथार्थः ॥३०॥ अथ पुनरपि गुणानाह—

पवयणखिसा परवग्गमोहुदयवारण च चत्थेहिं। तसथावराण जयणा पत्तेहिं तहेव विण्णेआ ॥२१॥

प्रवचनखिंसा–अहो एते मुण्डाः! पापारम्भाः अस्मदीयपुत्रीवध्वादीन् स्वजनान् प्रत्यक्षाद्यं दर्शयन्तोऽपि न लज्जन्ते, अतो मा सद्गुरावो प्रविशन्त्वितिवचोभिः प्रवचनहीला, तथा 'परवर्गस्य' पुरुषापेक्षया परवर्गः–स्त्रीवर्गस्तस्य मोहोदय, प्रायः स्त्रीपुरुषयोरपमेव समाय यदङ्गानावृत परवर्गे दृष्ट्वा मोहोदयो भवत्येव, ततः प्रवचनखिंसा च परवर्गवेदोदयश्चेति द्वन्द्वस्तयोर्निवारणं च त्रैणैव स्यात्, अन्येऽपि वस्त्रादिसाधुनेपथ्यजन्याः पर्यवधर्मप्राप्तिहेतवो रूपसत्त्वादय आचार्यगुणाः स्वधिया योज्याः, ननु जिनेन्द्रजिनकल्पिकादयो वस्त्रादिरहिता एव भवन्ति, तेषां च कथमेते गुणा इति चेत् मैवं, जिनेन्द्रादीनामपि लोकानुग्रहस्यादिकारणसद्भावे वस्त्रसद्भावस्यैवास्माकं सम्मतत्वात्, तत्कथमितिचेत् शृणु जिनेन्द्रा अपि गृहस्थावस्थायां बालभावे तदतिक्रमे च यथोचित वस्त्रालङ्कारविभूषिता एव भवन्ति, प्रव्रज्याप्रतिपत्त्यवसरे तु देवेन्द्रोपनीतदेवदूष्यवस्त्रं सवस्त्रपात्रो धर्मो मया प्रज्ञापनीय इति धामस्कन्धोपरि धरन्ति, यदागम –"सव्वेऽवि एगदूसेण निग्गया जिणवरा चउवीसं"ति श्रीआव० नि० (२२७) परिधानाभावस्तु तेषां सत्यपि नाग्न्ये पुण्योत्कर्षोदयात् कुत्सनीयत्वाभावात् प्रत्युत सुभगत्वाच्च,उक्तं च–"अनध्ययनविद्वांसो,निर्द्रव्यपरमेश्वराः। अनलङ्कारसुभगाः, पान्तु युष्मान् जिनेश्वराः ॥१॥' इति, किंच–जिनेन्द्राणां गुह्यप्रदेशो वस्त्रेणैव शुभ्रभामण्डलेनाच्छादितो न चर्मचक्षुषां दृग्गोचरीभवति, यदुक्तं–"अच्छेमि मोहोदयहेउअभावो सुहाणुबंधाओ। गुत्तिंदिअया य गुणा अणभतुल्ला मुणेअव्वा ॥१॥ (१११६) इतिश्री धर्मसंग्रहणीसूत्रे, तद्वृत्तिर्यथा–अन्येषां च–छद्मस्थादीनां तद्रूपदर्शनानन्तरं मोहोदयहेतुत्वाभावः,गुप्तेन्द्रियतेति गुप्तलिङ्गता, चकारोऽनुक्तसमुच्चये, तेनान्येऽपि निश्छिद्रपाणिपात्रत्वादयो ग्राह्याः, तथा चोक्तं–"ते हि भगवन्तो निरुपमधृतिसंहननाः गूढेन्द्रिया

स्वप्रभामण्डलाच्छादितदेहाः ज्ञानातिशयसंपत्समन्विताः निश्छिद्रपाणिपात्राः जितपरिषहा" इत्यादि, एवरूपादिगुणा अनन्यतुल्या
ज्ञातव्याः । इति श्रीधर्मसंग्रहणीवृत्तौ । तस्माद्वस्त्रपरिधानादिनिमित्तं जुगुप्सनीयावाच्यावयवादिदर्शनं, तच्च तीर्थकृतां न संभवति,
अतः 'कारणाभावात्कार्यस्याप्यभाव' इति न्यायात् वस्त्रापरिधानेऽपि तीर्थकृतां न लोकानुवृत्त्यादिगुणविलोपः, लोकैरपि वस्त्रपरिधानं
मुख्यवृत्त्या असभ्यावयवगोपननिमित्तमेव क्रियते, मर्त्यामर्त्यलोकस्य लज्जया लज्जनीयावयवगोपनस्वभावाद्, अत एव लोका-
भाणकोऽपि–'अहो अधो नग्नस्य मस्तके मौलिक'मिति, शरीरादिशोभा तु क्षुधाद्युपशमनाय क्रियमाणे भोजने अशनाद्यनुसारेण
माधुर्याद्यास्वादशरीरपुष्ट्यादिरिव गुह्यावयवेष्वाच्छादितेषु स्वत एव सिद्ध्यति, न पुनः प्रथमतस्तदर्थमेव प्रवृत्तिः, पात्रभोगस्तु तीर्थ-
कृतां सर्वथा न स्यात्, यतस्ते ह्यच्छिद्रपाणयस्तीर्थकराः तेषां भोजनावसरे चन्द्रादित्यौ यावच्छिखा गच्छति, न बिन्दुरप्यधः पतति,
चतुर्विधज्ञानबलाच्च संसक्तासंसक्तमन्नं सत्रसमत्रसं च जलादिकं ज्ञात्वा निर्दोषमेवोपाददते इति तीर्थकृतां पात्रधारणे न कश्चिद् गुणः,
ये तु जिनकल्पिकास्ते द्विविधा–लब्धिमन्तोऽलब्धिमन्तश्च, तत्र लब्धिरपि कर्मणां क्षयोपशमवैचित्र्यवशात् केषांचित्पात्रविषया
केषांचिद्वस्त्रविषया केषांचिदुभयविषयाऽपि, तत्रापि येषां पात्रविषया तैः पाणिपात्रतयैव भवितव्यं, पाणिनैवाशनादावाह्रीयमाणे न
कापि संयमविराधना, नापि प्रवचनजुगुप्सा, प्रत्युत प्रवचनप्रभावना, सा च लब्धिरेवं "माइज्ज घडसहस्सा अहवा मायंति सागरा
सवे । एआरिसलद्धीओ सो पाणिपडिग्गही होइ॥१॥"त्ति, ते च वस्त्राणि बिभ्रति,तद्विषयकलब्ध्यभावात्,तत्रापि सामर्थ्यानुसारेण
कश्चिदेकं कल्पं कश्चिद् द्वौ कश्चित्त्रीन् कल्पान् बिभर्ति, तेषां च क्रमेण रजोहरणमुखवस्त्रिकोपेतानि त्रीणि चत्वारि पञ्च वोपकरणानि
भवन्ति, एवं वस्त्रानावृता अपि ये नग्ना न दृश्यन्ते ते वस्त्रविषयकलब्धिमन्तः, वस्त्रजन्यकार्यविषयकलब्धिभाज इत्यर्थः, तेषां

चरणापस्य लब्ध्यैव कृतत्वादभावात्, नहि कश्चिदप्यादित्योद्योतिते वस्तुनि प्रदीपमपेक्षते, प्रदीपकार्यस्य सूर्येणैव कृतत्वात्,
तथापि शीतादिसहनसामर्थ्यमपेक्षणीयं, पात्राणि च बिभ्रति, छिद्रपाणिलब्ध्यभावात्, तेषां चोपकरणानि नवैव भवन्ति, नियत
मात्रसंख्याकेषु पात्रनियोगोपकरणेषु विकल्पाभावात्, ये तु वस्त्रपात्रोभयविषयलब्धिमन्तो न ते पात्रं न वा वस्त्राणि बिभ्रति,
द्वयोरपि प्रयोजनाभावात्, उभयजन्यस्यापि कार्यस्य लब्ध्यैव कृतत्वात्, तेषामुपकरणे रजोहरणमुखवस्त्रिकालक्षणे भवतः, ये
त्वतिशयमात्रलिंगवस्य वस्त्रपात्राद्युपकरणं धर्तव्यमेव, यदुक्त–"निरतिशयिना वस्त्रपात्रादिकमन्तरेण परस्य प्रसाधयितुमश
क्यत्वा"दिति श्रीधर्मसंग्रहणीवृत्तौ २२६ पत्रात्मके पुस्तके १९२ पत्रे, तेषां च मध्ये सामर्थ्यानुसारेण कश्चिदेकं कल्पं धरति
तस्य दशोपकरणानि, यस्तु द्वौ कल्पौ बिभर्ति तस्यैकादश, यस्य कल्पत्रय तस्य द्वादशोपकरणानि भवन्ति, यदुक्तं–"पत्तं[1] पत्ता-
बंधो[2] पायट्ठवणं च[3] पायकेसरिआ। [4] पडलाइं[5] रयत्ताणं[6] गुच्छगओ[7] पायनिज्जोगो[9] ॥१॥ 'पायनिज्जोगु'त्ति पात्रपरिकरः "तिन्नेव
य पच्छागा[10] रयहरणं[11] चेव होइ मुहपत्ती[12]। एसो दुवालसविहो उवही जिणकप्पिआणं तु ॥२॥" 'पच्छाग'त्ति प्रच्छादकाः
कल्पा', द्वौ सौत्रौ एकस्त्वौर्णिक इति त्रयः कल्पाः', एवमुपकरणभेदैरष्टौ विकल्पा जिनकल्पे भवन्ति, यदुक्त–"दुग[2] तिग[3] च
उक्क[4] पणगं[5] नव[9] दस[10] इक्कारसेव[11] बारसगं[12]। एए अट्ठ विगप्पा जिणकप्पे हुंति उवहिस्स ॥१॥ पुत्तीरयहरणेहिं दुविहो[2]
तिविहो अ इक्ककप्पजुओ[3]। चउहा कप्पदुगेण[4] कप्पतिगेण तु पंचविहो[5] ॥२॥ दुविहो तिविहो चउहा पंचविहोविहु सपायनिज्जोगो।
जायइ नवहा दसहा इक्कारसहा दुवालसहा ॥३॥ इति (प्रवचसा० ७७२–३–४) एवंविधो हि जिनकल्पः संप्रति व्युच्छिन्नः, यस्मा
त्तोत्तमः सिध्यति तत्कालोत्पन्न एव जिनकल्पं प्रतिपद्यन्ते, नान्यः, संप्रति तथाविधरूपाभावात्, संप्रत्येकः स्थविरकल्प एव, तथान्

पुनर्जघन्यतोऽपि चतुर्दशोपकरणवानेव, तानि चोपकरणानि द्वादश जिनकल्पोक्तान्येव, मात्रकं१३ चोलपट्टकश्चेति१४ चतुर्दश, यदुक्तं—"एए चेव दुवालस मत्तग अइरेग चोलपट्टो उ। एसो चउदसरूवो उवही पुण थेरकप्पंमि ॥ १ ॥ इति (पं० ७७९) तत्र मात्रकं सर्वयतिसाधारणवस्तुग्रहणयोग्यः पात्रविशेषः, स्थविरकल्पे उत्कृष्टपदिकोपकरणचिन्तायां तु शीताद्यसहिष्णून् तपस्विबालग्लानादीन् प्रतीत्य यावत्संयमनिर्वाहहेतुर्द्विगुणोऽप्यधिको वा उपधिः श्रीनिशीथचूर्ण्याद्यागमोक्तोऽवगन्तव्यः, एवमुक्तप्रकारेण जिनकल्पिकाः स्थविरकल्पिकाश्चेत्युभयेऽपि प्रागुक्तगुणहेतवे वस्त्राणि बिभ्रति, अन्यथा प्रवचनखिंसादयः स्त्रीजनस्यात्मनश्च मोहोदयादयो बहवो दोषाः स्युः, ननु परित्यक्तसर्वसङ्गानां साधूनां लोकानुवृत्त्या लज्जया वा किं प्रयोजनं ?, प्रत्युत तयोः परिहरणीयत्वादितिचेत्, मैवं, पापोपादानहेतूनामेव लोकानुवृत्त्यादीनां परिहर्तव्यत्वात्, न पुनः संयमहेतूनामपि, प्रत्युत तेषामुपादेयत्वाद्, अन्यथा कथं त्वयाऽपि नग्नाटेन जलशौचमुखविवरकवलप्रक्षेपादिकं विधीयते, तस्यापि लोकानुवृत्त्यन्तःपातित्वात्, ननु भवतु यत्किञ्चिद् वस्त्रपरित्यागे, निःस्पृहता तु भवत्येव, सा च चारित्रानुगुणा कथं भवतां नाभिमतेति चेत्, सत्यं, धर्मोपकरणातिरिक्तपरित्यागेनैव निःस्पृहताऽस्माकं संमता, न पुनर्धर्मोपकरणपरित्यागेऽपि, अन्यथा तवापि कमण्डलुपिच्छिकादि परिहरणीयं स्यात्, अथ शीतादिसहनार्थं वस्त्रं परिह्रियते इति चेत् परिह्रियतां नाम तदर्थं, परमवाच्यावयवगोपननिमित्तं तु धर्त्तव्यमेव, न हि तावन्मात्रोपयोगिवस्त्रधरणे शीतादिसहनान्तरायः स्यात्, नन्वास्माकीनब्रह्मव्रतधैर्यज्ञापनाय नाग्न्यव्रतमस्माकमिति चेत्, सत्यं, तर्हि लावण्यादिगुणोपेताभिः सुन्दरीभिः सह संवासासनशयनादिकमपि युज्येत, तस्यापि ब्रह्मचर्यधैर्यज्ञापनाय विशेषतो हेतुत्वात्, किंच—नग्नस्य ते वेश्यादिजनोपान्त एवोपवेशनादिकं युक्तं, भण्डिकचेष्टायाः तत्रैव युक्तत्वात्, न पुनः कुलस्त्रीमध्येऽवाच्यं दर्शयतस्त-

चावस्थान युक्त, लोके तत्र तासां चातिनिन्दनीयत्वात्, यदि चेश्याजनोपान्तोपवेशने ब्रह्मचर्यगुप्तिभङ्ग इति चेत् तर्हि नवमगुण स्थानकं यावत्साधूनामपि वेदोदयो नियतः, तीर्थं यावत् षट्सप्तमगुणस्थानकवर्त्तिसाध्वायस, तेषां च साधूनां नग्नभावे तथाविध गीदर्शनादिना सागारिकविकृतिसम्भवे कथं ब्रह्मचर्यगुप्तिस्थितिः ?, कथं वा न प्रवचनोड्डाह इत्यादिक नेत्रनिमीलनपुरःसरं रहसि विचार्य हे आर्य ! परिहरतार्यचित्त,किंच-डोरूभाषया यद्भाष्य सागारिकादिक सजीवजातीयोऽपि कश्चित्कोपाविष्टोऽपि कलहादौ प्रयोजनविशेषे प्रतिपक्ष प्रत्यप्रीतिहेतवे चाग्गोचरीकुर्वन् दृष्ट", परमुककारणाभावेऽपि कुलस्त्रीजनस्यापि दृग्गोचरीकारयंस्तु स्वमेव दृष्टो दृष्ट इत्यठं तव कुविकल्पनया । एवं सत्यपि यदि तव चलेन रुचिस्तर्हि पिच्छिकावत् मयूरपिच्छग्रथिततथाविधरचनया सदृक्कया वा तथाविधकाष्ठकौपीनेन वा सागारिकं तु सगोपनीयमेवेतिभावः॥

अथ जीवरक्षाहेतुत्वेन यथा संयमोपकारकं तथाऽऽह-'तसथावराण'त्ति त्रसस्थावराणां यतना-रक्षा यस्मैरेव स्यात्, वस्तुप दशुपलक्षणपरं तेन रक्षानिष्पन्नरजोहरणादिपरिग्रह", रजोहरणादिभिस्त्रसस्थावरजन्तुयतना स्यादित्यर्थः, तथाहि-शयनोपवेशनादि क्रियां चिकीर्षुणा शय्यासनादिगतकुन्थुपिपीलिकादिप्रमार्जनं साधकस्य कर्त्तव्यम्, अन्यथा तद्गतानेकत्रसघातस्तवापि सम्मतः, तत्प्रमार्जनं च रजोहरणेनैव कर्त्तुं शक्यते, यद्यपि प्रमार्जननिमित्तं पिच्छिका त्वयाऽप्यभ्युपगता परमुभयकालं चिरलीकृत्य प्रतिले- खयितुमशक्यत्वेन तद्गतपनकादिविराधनासंभवात् सैवायतनाहेतु", तथाऽनावृतमुखेन भाषमाणस्य मुखविवरे सहसा मक्षिकादिप्र- वेशस्तवाप्यप्रसिद्ध", मर्यशवचनप्रामाण्याच मुखनिर्गतनिश्वासादिना असंख्यातजीवात्मकमादरवायुकायिकविराधना मुखवस्त्रि- कामन्तरेण निवारयितुं न शक्यते, दंशमशकादिभिरभिद्रूयमाणस्य सहसा कण्डूयनादि कुर्वतो दंशमशकादिविराधना, शीतादिना

ऽभिद्रूयमाणस्याग्निकायादिसेवा, अतोऽनेकत्रसस्थावरविराधना,महिकाधूम्रिकादिपातेऽप्कायविराधना चेत्यादिदोषाः अनावृतशरीरस्य संभवन्ति, तन्निवारणं च न वस्त्रैर्विना कर्तुं शक्यं, तथा ज्वरादिबाधिततनोस्तव वस्त्राभावे गुप्तदवरकसद्दरिकादिगृहस्थोपकरणप्रतिषेवणया गृहस्थतुल्यतैव,प्रतिलेखनानर्हे गुप्तदवरकसद्दरिकादौ त्रसाद्यनेकजन्तुविराधना प्रवचनमालिन्यं चेत्यादिदोषप्रतिहतिनिमित्तं कल्पत्रिकं,यदागमः-"किं संजमोवयारं करेइ वत्थाइ जइ मई सुणसु। सीअत्ताणं ताणं जलणतणगयाण सत्ताणं॥१॥" (२५७५) इत्यादि श्रीविशेषावश्यकभाष्ये तद्वृत्तौ च सविस्तरमितिबोध्यम्। अथ पात्रैः संयमोपकारमाह-"पत्तेहिं"न्ति पात्रैः-पतद्ग्रहादिभिः तथैव-वस्त्रवदेव त्रसस्थावरयतना विज्ञेया, तथाहि पात्राभावेन भोजने क्रियमाणे सस्निग्धा दुग्धादिविन्दवोऽधः पतन्ति,तत्र च पृथिव्यां विद्यमानानां पिपीलिकादीनां सद्य एवोपघातः अविद्यमानानां च तद्गन्धाद्याकृष्टानां पिपीलिकादीनां समागमनं, समुदिताश्च जन्तवः कथंचित् कस्यापि पादादिन्यासेन सद्य एव युगपद्विपद्यन्ते, मक्षिकाद्यर्थमागतेभ्यो गृहगोधादिभ्यश्च सकाशात् महानसंयमः, कुण्डिकादिमण्डापनेऽपि गृहस्थभाजनव्यापारणमसंयम एव, यतस्तदप्रतिलेखितं सत् पनककुन्थ्वादिसंसक्तं सचित्तजलादिसंसक्तं वा भवेत्, कदाचिदेवं दोषाभावे न मनसः शुद्धिः, तद्व्यापारानन्तरं च पतितविन्दूनां गृहस्थकृतायां परिष्ठापनायां प्रागुक्तप्रकारेण जन्तूनामुपघातः, सचित्तजलादिना पात्रधावनादौ बहवो दोषा इति कुण्डिकादिकं नासंयमनिवारकं, प्रत्युत केवलमसंयमहेतुरिति, अत एव गृहस्थपात्रभोगोऽनगाराणामयोग्य एव, यदागमः-"कंसेसु कंसपाएसु, कुडमोएसु वा पुणो। भुंजंतो असणपाणाइं, आयारा परिभस्सइ ॥ १ ॥" इत्यादि श्रीदशवैकालिके (२५९) तथा पाणिभ्यां भुञ्जानस्य द्राक्षादिगतत्रसजन्तुयतना न स्यात्, तथा गलनादिभयेन दध्यादिद्रववस्तुनि त्वरितं२ भुज्यमाने तद्गतजन्तुविपत्तिः स्यात्, तथा पात्राभावेऽशना-

पानयनेन पालस्नानादीनां वैयावृत्त्यासंभवात् तेऽनुकम्पिता न भवेयुः, यदागमः—"संसत्तसत्तुगोरसपाणयपाणीअपागरक्खत्थं । परिगलणपाणधोयणपच्छाकम्माइआणं च ॥ १ ॥ परिहारत्थं पत्तं गिलाणपालादुव्वग्गहत्थं च । दाणमयधम्मसाहण समया पत्त परोप्परओ ॥२॥"(२५७८–९) श्रीविशेषाव० इतिगाथार्थः ॥३१॥ अथ वस्त्रपात्रादिकं साधूनां परिग्रहो न भवतीति दृष्टान्तद्वारा पराशङ्कामपाकर्तुं गाथामाह—

सजमनिमित्तमित्तं उवगरणं न परिग्गहो न भवे । जह रयणामयजिणवरपडिमा तद्दंसणमईण ॥३२॥

संयमनिमित्तमेव–संयमनिमित्तमात्रं चारित्रपरिपालनार्थं यदिति गम्यं यदुपकरणं–रजोहरणादि पात्रनिर्योगपर्यन्तं परिग्रहो न भवेत्, यदागमः—"जंपि वत्थं व पायं वा, कंबलं पायपुंछणं । तंपि संजमलज्जट्ठा, धारिंति परिहरंति अ ॥१॥ न सो परिग्गहो वुत्तो, नायपुत्तेण ताइणा"त्ति श्रीदशवै० (२४७॥ॐ) यथेति दृष्टान्तोपन्यासे, यथा रत्नमयजिनप्रतिमा परिग्रहो न भवति, केषां ?—'तद्दर्शनमतीनां' प्रतिमायामाराध्यत्वेन जिनेन्द्र इव दर्शनं–श्रद्धानं तद्रूपिका मतिः–मतिज्ञानं येषां ते तथा तेषामेवेत्यर्थः, न पुनर्लुम्पाकप्रभृत्यनार्यजनानामपि, यतस्ते तादृशीं प्रतिमां विक्रीयाजीविकामपि कुर्वन्ति ततस्तेषां परिग्रह एवेतिगाथार्थः ॥३२॥ अथ संयमपरिपालननिमित्तादतिरिक्तं किं स्यादित्याह—

सेसं पुण अहिगरणं मुच्छाविसओ परिग्गहो होइ । जह पिच्छिआकमंडलुदेहप्पमुहं तुहं भणिअं ॥३३॥

शेषं–धर्मोपकरणव्यतिरिक्तं पुनरधिकरणमेव, तच्च परिग्रहो भवति, कुतः ?—यतो मूर्च्छाविषयः, यदागमः—"मुच्छा परिग्गहो वुत्तो इअ वुत्तं महेसिणा"त्ति यथेति दृष्टान्तोपन्यासे, यथा 'तुह'त्ति तव नग्नाटस्य पिच्छिकाकमण्डलुदेहप्रमुखं भणितं, तीर्थकृद्भिः

परिग्रहतयेतिगम्यं, ननु पिच्छिकादिकमस्माकं धर्मोपकरणमेव कथं परिग्रह इति चेत् चिरं जीव, धर्मोपकरणं परिग्रहो न भवतीति ब्रुवाणस्त्वमपि स्वयमेव तटादर्शिशकुन्तपोतन्यायेनासत्पक्षमेवाश्रितः, शकुन्तपोतन्यायस्त्वेवं–महासमुद्रमध्यगतपोतकूपस्तम्भात् कश्चित् शकुनिपोत उड्डीनः सन् अन्यत्तटादिकमुपवेशनस्थानमनुपलभमानः पुनः तत्रैवागत्योपविशति, एवं त्वमपि पिच्छिकाकमण्डलुदेहप्रभृतिकं बिभ्राणः श्वेताम्बरेण ध्रियमाणचतुर्दशोपकरणवत् तवापि परिग्रहो नवेति केनचिदुदीरितः अन्यत्प्रत्युत्तरदानासमर्थो धर्मोपकरणं परिग्रहो न स्यादिति ब्रूषे, परमस्माकं यान्युपकरणानि तानि शुभध्यानादिविघातकानां शीतातपादीनां निवारकत्वेनासंयमहेतुधूमकेतुप्रभृतिसेवापराकर्तृत्वेन प्रागुक्तप्रकारेण त्रसादिजन्तुरक्षाहेतुत्वेन च तीर्थकृदुपदिष्टत्वात् संयमपरिपालनहेतवोऽसंयमनिवारकाणि च, तव तु पिच्छिकाकमण्डलुप्रभृतीनि न संयमहेतवो नाप्यसंयमनिवारकाणि, प्रत्युत तीर्थकृदनुपदिष्टत्वेनाधिकरणरूपत्वादसंयमहेतव एव, तीर्थकृदनुपदिष्टत्वं तु तवापि सम्मतं, न हि पिच्छिकादिकं तीर्थकृद्भिरुपदिष्टं धृतं वा, न चास्तामन्यद्यत्किञ्चित् परं पिच्छिका तावत् प्रमार्जनाहेतुतयैव ध्रियते, सा कथमधिकरणमिति चेद्, उच्यते, न हि पिच्छिका तावत्केवलप्रमार्जनहेतव एव ध्रियते, किंतु साधुलिङ्गधिया, न च पिच्छिका साधुलिङ्गम्, अन्यतीर्थिकानामपि पिच्छिकाया दृश्यमानत्वात्, तस्मात्तीर्थकृदनुपदिष्टत्वेनाधिकरणमेव पिच्छिका, किंच–पिच्छिका यदि साधुलिङ्गं स्यात्तर्हि दिगम्बरमात्रस्यापि युज्यते, यथा श्वेताम्बरनाममात्रस्यापि रजोहरणमुखवस्त्रिके, न चैवं दिगम्बरमते, यतो दिगम्बराणां चत्वारो भेदाः, तथाहि–काष्ठासङ्घो मूलसङ्घो गोप्यसङ्घो माथुरसङ्घश्चेति, तत्र मूलसङ्घे मयूरपिच्छिका काष्ठासङ्घे च चमरीगोवालपिच्छिका गोप्यसङ्घे च पिच्छिका गोप्या, माथुरसङ्घेन च मूलतो पिच्छिका नाद्दतेति तेन दिगम्बरस्य पिच्छिकाकमण्डलुदेहादिकं परिग्रह एवेतिगाथार्थः ॥२३॥ अथ नग्नाभूतानां

स्त्रीणां केवलज्ञानं न स्यादिति दिगम्बराकूतकल्पनां क्षपणकल्पां गाथामाह—

जइ चीवरधारिआण न केवलं त हवे तयावरणं । उप्पण्णंपि कयाइ चीवरजोगे विलिज्जा ॥ ३४ ॥

यदि चीवरधराणां—वस्त्राच्छादितशरीराणां केवलज्ञानं न भवेत्, तर्हीति गम्यं, तर्हि तद्—वस्त्रं परिहितवस्त्र 'तयावरण'ति त-स्य—केवलज्ञानस्यावरणम्—आच्छादनकरणं संपद्येत, केवलज्ञानावरणीयकर्मतया परिणत, यथदाप्नोति तदस्यावरणं, यथा श्रुतज्ञान-मापुष्णन् श्रुतज्ञानावरणीयकर्मप्रकृतिरिति 'यद् विद्यमाने सत् यस्योत्पत्तिं प्रतिबध्नाति तत्तथाभूत सद्वदुत्पन्नमपि विनाशयती'ति-न्त्वा उत्पन्नमपि केवलज्ञानं कदाचिच्चीवरयोगे—वस्त्रसम्बन्धे विलीयेत—विनाशं प्राप्नुयात्, तच्च न संभवति, अतो दिगम्बराकूत-मालजालमिति गाथार्थः ॥३४॥ अथ प्रागुक्तमनिष्टमपीष्टापत्त्या स्वीकुर्वन्तं क्षपणकं दूषयितुमाह—

एवं चिअ कप्पिज्जइ चीवरधरिआण जइ न सुअनाणं । घोसिज्जंतं सुज्जा सुणिज्जा अहव भणिअंपि ॥३५॥

चिमशब्दोऽप्यर्थे, एवमपि कल्प्येत यदि सवस्त्रस्य परिहितवस्त्रस्य घोष्यमाणमपि श्रुतज्ञानं न भवेत्, अथवा भणितमपि नश्यतो विलुप्येत, श्रुतज्ञानस्यापि ज्ञानत्वेन केवलज्ञानसाम्यात्, केवलज्ञानस्येव श्रुतज्ञानस्याप्युत्पत्तिविनाशयोरविशेषात्, ननु श्रुतज्ञानं तावत् क्षायोपशमिकं, तस्य सवस्त्रस्यापि संभवो न विरुध्यते, केवलज्ञानं तु क्षायिकं, तच्च वस्त्रादौ ममतावतः कथं स्यादिति चेत्, मेव, देहेऽपि तथात्वसंभवात् देहिमात्रस्यापि तदभावापत्तेः, तस्मात् ज्ञानस्य स्वस्वावरणापगमे स्वस्योत्पत्तेर्बलीयसाऽपि पराकर्तुमशक्तेः श्रुतज्ञानादिवत् केवलज्ञानमपि सवस्त्रस्य भवत्येव, वस्त्रस्य च ज्ञानावरणात्मकत्वाभावादिति गाथार्थः ॥ ३५ ॥ अथ वस्त्रादिधर्मो-पकरणं न केवलं केवलज्ञानावरणमेव न भवति, अपितु केवलज्ञानोत्पत्त्युपकारकमपीति गाथात्रयेण दिदर्शयिषुः प्रथमगाथामाह—

तम्हा केवलणाणं णाणावरणक्खयंमि सो अ पुणो । सुहज्झाणा सुहज्झाणं पायं बाहाविरहिअस्स ॥३६॥
पुण णेगविहा तयभावोऽणेगकारणेहिं भवे। कत्थवि असणाईहिं कत्थवि वत्थाइवत्थूहिं ॥३७॥
इअ विण्णेयं धम्मोवगरणअइरित्तु परिग्गहो होइ । अण्णह असणाईहिं सरीरपोसो तुमं दोसो ॥३८॥

यस्मात्प्रागुक्तयुक्तिसमूहात् न वस्त्रं केवलज्ञानावरणं तस्मात् केवलज्ञानं केवलज्ञानावरणस्य–ज्ञानावरणीयमूलप्रकृतिविशेषस्य क्षये–सर्वथाऽपगमे सति संभवति, 'सोऽपि' ज्ञानावरणीयकर्म्मक्षयोऽपि 'शुभध्यानात्' शुक्लध्यानविशेषात्, शुक्लध्यानमपि 'प्रायो' बाहुल्येन 'बाधाविरहितस्य' शरीरादिपीडाशून्यस्य मनुजस्य संभवति, प्रायोग्रहणात् स्कन्दलाचार्यशिष्यगजसुकुमारादीनामन्यथा दर्शनेऽपि न दोष इति गाथार्थः ॥ ३६ ॥ अथ द्वितीयगाथामाह—

बाधा पुनरनेकधा–अनेकप्रकाराः स्युः, तदभावोऽपि–अनेकविधबाधानामभावोऽपि अनेककारणैर्भवेत्, प्रति कार्यं कारणानामपि भिन्नत्वात्, तदेव स्पष्टयति–'कत्थवि'त्ति कुत्रचित् क्षुधादिपीडिते पुरुषविशेषे क्षुधाजन्यपीडाया अभावोऽशनादिभिरेव स्याद्, ओदनादीनामेव तत्कारणत्वात्, एवं पिपासाजन्यबाधा पानीयेनैवोपशाम्यति, न पुनरोदनादिना, तथा शीतातपदंशमशकादिजन्यायाः बाधाया वस्त्रादिभिरेवोपशमः, ननु शीतातपादिपीडानिवारणं वस्त्रादिप्रावरणं तावद्युक्तं, कथं पुनः पात्रमपीतिचेद्, उच्यते, भिक्षाचर्यां गतः साधुरुष्णमन्नं पानं वाऽवाप्य पाणिना भुञ्जानः पिबंश्च पाणिमुखहृद्दाहादिना बाध्यते, तन्निवारणं तु पात्रेणैव भवेत्, यतस्तथाविधमन्नं पानं वा पात्रेणैवोपादाय संयमाबाधया भुङ्क्ते पिबति च, पात्रमन्तरेण तादृशमन्नादिकं ग्रहीतुमक्षमस्तत्परित्यज्यान्यदन्नादिकमन्वेषयतोऽलाभे संयमबाधा स्याद्, भूयसा कालेन लाभेऽपि स्वाध्यायध्यानादिः उपहन्येत, असंयमनिवारणं तु

पात्रमन्य प्रागेव न्यगादि, भिक्षारभूम्यादिगमने तु नियमात् पात्रोपयोग इति गाथार्थः ॥२७॥ अथ तृतीयगाथामाह—

'इति' अमुना प्रकारेण प्रागुक्तयुक्त्या धर्मोपकरणव्यतिरिक्त एव परिग्रहो भवति, न पुनर्धर्मोपकरणमपीति शेष–सोऽयम्, अन्य पाऽशनादिभिः 'तुमं'ति तव नग्नाटस्य शरीरपोषोऽपि–शरीरपोषणमपि दोषो, ममताविषयत्वेन केवलज्ञानावरणभूतत्वात्संसार-परिभ्रमणहेतुत्वाद्वस्त्रादिवत्, न च शरीरं ममताविषयो न भविष्यतीति शङ्कनीय, स्वसंवेदनवेद्यत्वात्, तन्मूल एवान्यत्रापि ममकार इति प्रागुक्तम्, अत एव शरीरममकारोऽपि साधूनां निषिद्धः, यदागमः–"सव्वत्थुवहिणा बुद्धा संरक्खणपरिग्गहे। अवि अप्पणोवि देहमि, नायरंति ममाइयं ॥१॥"ति श्रीदशवै०, अथ शरीरमन्तरेण संयम एव न स्यात्, अतः कथं तत्पोषोऽस्माकं दोष इति चेत् सत्यं, तर्हि संयमहेतोः शरीरस्य परिपालननिमित्तं वस्त्राद्यपि किं न स्वीकरोषि ?, अशनादिवत्तत्रापि युक्तेः साम्यादिति गाथार्थः ॥२८॥ (त्रिभिर्विशेषकं) अथ नग्नाटनाटके स्त्रीणां मुक्त्यभावमिष्टापत्त्यैव प्रसाधयन् गाथामाह—

धुत्त व नियाण सुइ सासणि कहवि नत्थि इत्थीण। न खलु मोहाभावा सो तासिं नेव संभवइ ॥२९॥

'तुह सासणि'त्ति तव दर्शने कथमपि स्त्रीणां निर्वाणं–मुक्तिर्नास्ति, यत्तदितिगम्य, यदुक्तं, भटवत् इत्यर्थः, यस्मात् तत्–निर्वाणं खलुशब्दस्यैवार्थत्वे मोहाभावात्–मोहनीयकर्मक्षयादेव, 'सो'त्ति स मोहनीयकर्मक्षयः 'तासिं' तासां स्त्रीणां न संभवति, गाथार्थः ॥२९॥ अथ मोहक्षयाभावे हेतुमाह—

देवगुरुमुहपलोअणइच्छाए आगयाण इत्थीणं। पढम मिव मिरिक्खणमिव जुञ्जा न महामोहो ॥३०॥

'देवगुरुमुखमलोकनं' देवगुर्वोर्मुखस्य निरीक्षणं तदिच्छया, वयं देवगुरुमुखं दृष्ट्वा निष्पापा भवाम इति ...

त्कण्ठया, आगतानां स्त्रीणां 'प्रथमम्' आदितः 'इह' त्वदीयमठादौ 'मेण्ढं' मेहनं पुरुषलिङ्गं तस्य निरीक्षणं भवति, द्वयोरपि नग्नत्वात्, मेण्ढदर्शनं महामोहो, महामोहनीयोदयहेतुत्वाद्, अयं भावः—जगत्स्वाभाव्यादनादिकालाभ्यासाच्च नाग्न्ये सति स्त्रीपुरुषयोः प्रायो गुह्यप्रदेश एव दृष्टिपातो भवति, नान्यत्रेति प्रतीतिः सर्वजनानामनुभवसिद्धैव, पुरुषलिङ्गदर्शने च स्त्रीणां वेदोदयान्महामोहः अतः स्त्रीणां मुक्त्यभावस्त्वद्दर्शने युक्त एवेतिगाथार्थः ॥४०॥ अथ वस्त्रधरणे अधरणे च द्वयोरपि लाभमलाभं च दर्शयन्नुपसंहारमाह—

**तम्हा तुमंपि वत्थं इत्थीअणुकंपयाइ जइ धरसि। ता दुण्हवि निव्वाणं अन्नह दुण्हंपि दुग्गइओ ॥४१॥**

'तस्मात्' प्रागुक्तयुक्तिनिचयात् यदि 'स्त्रीष्वनुकम्पया' मल्लिङ्गदर्शनतो मा स्त्रीजनस्य मोहोदयो भवत्विति स्त्रीजनविषयककृपया त्वं वस्त्रम्, अपिशब्दाद्यथा स्त्रियो वस्त्राणि बिभ्रति तथा त्वमपि वस्त्रं धरिष्यसि 'ता' तर्हि 'दुण्हंपि' द्वयोरपि स्त्रियास्तव च 'निर्वाणं' मुक्तिः स्यादेव, अन्यथा—वस्त्राधरणे द्वयोरपि 'दुर्गतयो' नारकादिकुत्सितगतयो, बहुवचनमनन्तशस्तत्र गमनसूचकम्, अत एव भवभ्रमणमित्यर्थः, स्त्रीणां दुर्गतयस्तु त्वल्लिङ्गदर्शनेन वेदोदयाद् दुर्ध्यानात्, तव तु स्त्रीदुर्गतिहेतुमार्गप्ररूपकत्वेनेति गाथार्थः ॥४१॥ अथ नग्नाटनाटकमाश्रितानां मूढत्वमाविष्कुर्वन्नाह—

**न मुणइ मूढो लोओ धम्मं पुच्छंतमेव जो गुज्झं। दंसेइ तस्स पासे धम्मो ता कहिमहम्मो अ ? ॥४२॥**

'मूढः' अज्ञानावृतो लोकः, हे नग्नाट! त्वन्मार्गाश्रितो लोको न जानाति यत् को धर्मो मुक्तिसाधक इति, 'धर्मं' धर्ममार्गं च 'पृच्छन्तमेव' प्रश्नं कुर्वन्तमेव यः प्रष्टव्यपुरुषो गुरुलक्षणो 'गुह्यं' गोपनीयलिङ्गोपस्थादिकं दर्शयति तस्य पार्श्वे यदि 'धर्मः' धर्मप्राप्तिः स्यात् 'ता' तर्हि 'कहिं'ति कुत्रान्यत्राधर्मः?, न क्वापि, किंतु त्वत्समीप एवाधर्मः, हे नग्नाट! त्वमेव पापात्मा मूर्तिमा-

नधर्म पथेतिगाथार्थः ॥४२॥ ।।इति स्त्रीमुक्तिव्यवस्थापना ॥ इति चतुर्विंशत्या गाथाभिः स्त्रीमुक्तिर्व्यवस्थापिता। श्रीमदण-हिल्लपत्तने श्रीजयसिंहदेवराजसभायामनेकविद्वज्जनसमक्षं श्रीवादिदेवसूरयश्चतुरशीतिवादलब्धजयाभिमानिनं दिगम्बरचक्रवर्तिन कुमुदचन्द्राचार्यं निर्जित्य पत्तने दिगम्बरप्रवेशं निवारितवन्त', तत्र वादे स्त्रीमुक्तिव्यवस्थापननिमित्तं श्रीदेवसूरिभिश्चतुरशीति-विकल्पा उद्भाविताः, ते चामी—इह खलु यस्य यत्रासंभवो न तस्य तत्र कारणावैकल्य, यथा शुद्धशिलायां शाल्यङ्कुरस्य, अस्ति च तथाविधस्त्रीषु मुक्तेः कारणावैकल्यं, न चायमसिद्धो हेतुः, यतोऽस्यासिद्धत्व किं स्त्रीणां पुरुषेभ्योऽपकृष्यमाणत्वेनाहोस्विन्निर्वाणस्थाना-पचसिद्धत्वेन निर्वाणसाधकप्रमाणाभावेन वेत्यादि श्रीशान्तिसूरिकृतायां श्रीउत्तराध्ययनवृत्तौ लिखिताः सन्ति ततो बोध्याः, इह तु ग्रन्थगौरवभयान्न लिखिता इति ॥ अथोत्पन्नदिव्यज्ञाना अर्हन्तो न भिक्षार्थं भ्रमन्ति साध्वानीताहारादिभक्तौ च सप्तविधः पात्र निर्योगोऽप्यस्मदभ्युपगन्तव्यः स्यात्, तथा च नाग्न्यमतं स्त्रीमुक्तिनिषेधमेत्युभयमपि व्याहतमेव स्यादिति विचिन्त्य शिवभूतिना केवलिनो भुक्तिर्निषिद्धा, अत एकादशभिर्गाथाभिः केवलिभुक्तिं व्यवस्थापयन् प्रथमगाथामाह—

ज केवली न भुंजइ किं कारणमित्थ केवल णाणं। अह वेअणिआभावा? पढमविगप्पो न जुत्तिजुओ ॥४३॥

यत्केवली न भुङ्क्ते 'इत्थ'त्ति अत्र किं कारणं?, किं केवलज्ञानं अथवा 'वेदनीयाभावो' वेदनीयकर्म्मानुदयो वा?, तत्र प्रथमविकल्पः केवलज्ञानं स न युक्तियुक्त', विचार्यमाणो युक्तिविकल इति गाथार्थः॥ ४३॥ अथ युक्तिरिक्तत्व दर्शयति—

पत्तिअइ छुमणाणी जो जो जम्हा उ होइ अहिअयरो। सो अप्प अप्पतर भुजइ नियमेण भावेण ॥४४॥

केवली केवलज्ञानमाहात्म्यान्न भुङ्क्ते इति यदा प्रतीयते यदि यो यस्मात् मुतज्ञानेनाधिकोऽधिकतरोऽधिकतमो वा भवेत् सोऽ-

ल्पमल्पतरमल्पतमं च भुङ्क्ते, केन स्वरूपेण ?—नियतभावेन—व्याप्तिस्वरूपेण, अव्यभिचारेणेत्यर्थः॥४४॥ अथ प्रागुक्तमिष्टापत्त्या स्वीकुर्वन्तं नग्नाटं दूषयितुमाह—

**दीसइ बहु भुंजंतो बहुस्सुओ कोऽवि अप्पमण्णाणी। दुण्णिवि बहु अप्पं वा भुंजंता केइ दीसंति॥४५॥**

कोऽपि बहुश्रुतो बहु—प्रभूतं भुञ्जानो दृश्यते, श्रूयतेऽपि च दुर्बलिकापुष्पमित्रः बहुतरघृतभोजीति, कोऽपिशब्दो लालावण्टान्यायेनात्रापि सम्बन्धात् कोऽप्यज्ञानी अल्पं—तुच्छं भुञ्जानः, 'द्वावपि' बहुश्रुताल्पश्रुतौ बहु भुञ्जानौ अल्पं ना भुञ्जानौ दृश्येते 'केइ'त्ति केचिदित्यध्यक्षसिद्ध एव व्यभिचार इति गाथार्थः ॥४५॥ अथ वेदनीयाभावं दूषयितुमाह—

**वीए आगमबाहा अरिहंताणंपि वेअणिज्जदुगं। संतुदयं पुण सायाबंधो भणिओ जिणिंदेहिं ॥४६॥**

द्वितीयविकल्पे आगमबाधा, यतः 'अर्हतामपि' पुण्योत्कर्षोदयवतामपि तीर्थकृतां सत्ता चोदयश्च सत्तोदयमितिममाहारः, तदधिकृत्येत्यध्याहार्यं, 'वेदनीयद्विकं' सातासातलक्षणं भवति, बन्धमाश्रित्य पुनः सातबन्धः जिनेन्द्रैर्भणितः, यदाह—"तिसु सायबंधु"त्ति एकादशादित्रिपु गुणस्थानकेषु सातस्यैव बन्ध इति गाथार्थः ॥३६॥ अथ सति कारणे कार्यस्यावश्यंभावादिति केवलिनोऽपि क्षुधायाः कारणमाह—

**केवलिणोऽविअ वेअणितेअसउदया छुहाइआ हुंति। अण्णह भवत्थसिद्धाणमंतरं सवहा न हवे॥४७॥**

केवलिनोऽपि वेदनीयसहकृततैजसशरीरोदयात् क्षुधापिपासे भवतः, अन्येऽपि शीतोष्णादयः परीषहा वेदनीयोदये भवन्ति, यदागमः—"एगविहबंधगस्स णं भंते! सजोगिभवत्थकेवलिस्स कइ परीसहा पं० ?, गोअमा! एकारस परीसहा पं०, नव पुण वेदेंतित्ति"

श्रीभगवतीश॰ ८–उ॰८। एकादश परीषहास्त्वेवं–"वेअणिज्जे ण भंते!" कम्मे कति परीसहा समोअरंति?,गो॰! एक्कारस परीसहा समोअरंति,तं॰–"पंचेव आणुपुव्वी चरिआ सेज्जा वहे अ रोगे अ। तणफासे जल्लमेव य इक्कारस वेअणिज्जंमि॥ १ (१२–५८*)॥" इति श्रीभगवत्यां श॰८ उ॰८। 'अण्णह'त्ति अन्यथा वेदनीयकर्मानुदयात् क्षुधाद्यभावाच्च भवस्थकेवलिनां सिद्धानां च परस्परं सर्वथा 'अन्तरं' भेदो न स्यात्,तच्च तथाप्यनिष्ट इति गाथार्थः॥ ४७॥ अथ दृष्टान्तद्वारेण केवलिनो भुक्तिप्रसाधनाय गाथाद्वयमाह—

जह जलसित्ता रुक्खा सचेअणा जाव आउअ हुंति। अहवा लहंति वुड्ढिं तयभावे नेव उभयंपि॥४८॥

एवं केवलिणोऽवि अ सरीरिणो भुत्तिविरहिआ देहे। थिरभावं वुड्ढिं वा लहंति नेवत्ति विण्णेअं॥४९॥

यथा जलसिक्ता' वृक्षाः सहकारादयः यावदायुस्तावत्सचेतना–सजीवास्तद्वृक्षमजीवा वृक्षमम्भवा भवन्ति, अथवा पुनर्वृद्धिं लभन्ते, शाखाप्रशाखापुष्पफलादिभिः समृद्धिभाजो भवन्ति, 'तदभावे' जलसेचनाद्यभावे तदुचिताहाराद्यभावे 'उभयमपि' सचेतनत्वं वृद्धिमत्त्वं चेति न स्यात्, उपनयनमाह–एवं केवलिनोऽपि च शरीरिणो भुक्तिविरहिता 'देहे' शरीरे स्थितिभावं स्थैर्यं नैव लभन्ते, शरीरात्पृथक् भवन्तीत्यर्थः,तथा वृद्धिं साधिकवर्षाष्टकः कश्चिदुत्पन्नकेवल तदवस्थ एव भवेत्, शैशवावस्थमेव स्यात्, 'पुद्गलैरेव पुद्गलोपचय' इतिवचनात्, आहाराभावे (सचेतनस्य) तनोः शरीरस्य वृद्धेरसम्भवादितिगाथार्थः॥४८–४९॥ अथ नभाष्टविकल्पितं दूषयितु प्रथम तद्विकल्पितमाह—

पुहिए भणंतजीवे पासंतो केवली कहं भुंजे?। अण्णं तऽणंतखुत्तो असुईभाव समावण्णं॥५०॥

अनन्तजीवान् निगोदनारकादिगतान् छेदनभेदनाद्यनन्तवेदनापन्नान् 'पश्यन्' साक्षात् निरीक्षमाणः केवली कथं भुङ्क्ते?,तथा

विधानपि जीवान् पश्यन् केवली यद्याहारव्यापारवान् स्यात्तर्हि तज्जीवविषयकानुकम्पा कथं स्यात् ?, न कथमपीतिकृत्वा तज्जीव- दुःखार्त्तः सन् केवली कवलान् मुखे न प्रक्षिपतीत्यर्थः,तथा 'अण्णं त' त्ति अन्नपदमुपलक्षणपरं तेनान्नपानादिकं पुनः 'अणंतखुत्तो'- त्ति अनन्तकृत्वः—अनन्तशो वारान् , अशुचिभावं' निन्द्यपर्यायं समापन्नं—सम्यक्प्रकारेण निश्चयेनापन्नं, तादृशमशनादिकं पश्यन् कथं केवली तान् कवलान् भुङ्क्ते ?, न कथमपीत्यर्थः, इति केवलिभुक्त्यभावे विकल्पद्वयी दिगम्बराशयारूढेति गाथार्थः ॥५०॥

अथ प्रथमं विकल्पं दूषयितुमाह—

**तन्नो जुत्तं जेणं अणंतदुहकारणं भवे णाणं। पुव्विं निअदुहदुहिओ पच्छा जगदुहदुही जुगवं ॥ ५१ ॥**

अनन्तदुःखविह्वलान् जीवान् प्रत्यक्षं पश्यन् केवली कथं भुङ्क्ते इति यदुक्तं तन्नो युक्तं, येन कारणेन 'ज्ञानं' केवलज्ञानमनन्त- दुःखकारणमापद्येत, तत्कथमित्याह—'पुव्विं'ति केवलज्ञानोत्पत्तेः पूर्वकाले 'निजदुःखदुखितः' निजेन—आत्मीयेन दुःखेनार्थात्क्रम- भाविना छेदनभेदनाद्युद्भूतेनासातवेदनीयेन दुःखित आसीत्, 'पश्चात्' केवलज्ञानोत्पत्त्यनन्तरं 'जुगवं'ति युगपत्—समकालं 'जगदुःखदुःखी' जगतां—चतुर्दशरज्ज्वात्मकलोकवर्त्तिनां प्राणिनां यानि दुःखानि तैर्दुःखी—दु खभाग् जातः, तन्निदानं तु केवल- ज्ञानमेव संपन्नं, तच्च न कस्याप्यभिमतं, केवलज्ञानस्यानन्तानन्दहेतुत्वाद् , आस्तां केवली वीतरागः, छद्मस्थवीतरागोऽप्यनन्त- सुखभाग् भवति, यदुक्तं—"जं च कामसुहं लोए, जं च दिव्वं महासुहं। वीअरायसुहस्सेयं, णंतभागंपि नग्घइ ॥ १॥"त्ति। किंच— केवली वीतरागः दुःखार्त्तं जीवं पश्यन् तदनुकम्पया स्वयमपि दुःखार्त्तः स्यात् तत्र निदानं किं रागो वा भयं वा?, नाद्यो, वीत- रागत्वस्यैव हानेः, नापि भयं, मोहनीयस्य समूलमुन्मूलितत्वात् तत्प्रकृतिभूतस्य भयस्याभावात्, तस्मान्नाटरटितमकिञ्चित्कर-

मिति गाथार्थः ॥ ५१ ॥ अथ केवलिनः स्वरूपमाह—

तम्हा मोहविमुक्को सकयं कम्मं फलंपि तयणुहरं। पइपाणिं पासंतो तम्मुत्तोऽणंतसुह णाणी ॥ ५२ ॥

तस्मात्कारणात् मोहविमुक्तः—सर्वथा क्षीणमोहनीयः 'ज्ञानी' केवलज्ञानी, 'प्रतिप्राणि' प्राणिनं प्राणिनं प्रति प्रतिप्राणि 'स्वकृतं कर्म' शुभमशुभं वा स्वयं २ कृतं ज्ञानावरणादिकर्म 'फलमपि' फलमपि तत्कर्मजन्यविपाकोऽपि 'तदनुहरं' तत्कर्मानुसारि, 'कारणानुरूपं कार्य'मिति वचनात्, शुभं वा अशुभं वा कर्मजन्यं फलमपि स्वस्वकृतकर्मानुरूपमित्यर्थः, तथास्वरूपं पश्यन् 'तद्विमुक्तः' ताभ्यां कर्मतद्विपाकाभ्यां विप्रमुक्तः— स्वयं ततः पृथग्भूतः 'अणंतसुह'त्ति अनन्तं सुखं यस्य सः अनन्तसुखो, लुप्तविभक्तिकमिदं विशेषणमिति गाथार्थः ॥५२॥ अथानन्तशोऽशुचिभावमापन्नमन्नादिकं कथं केवली भुङ्क्ते इति द्वितीयं विकल्पं दूषयितुमाह—

पज्जाओऽवि पमाणं पवट्टमाणो हु न उण इअरोऽवि। सिंहासणे निसण्णो धम्मकहं कहइ जह अरिहा ॥५३॥

'पर्यायोऽपि' प्रतिक्षणभाविवस्तुस्वभावः सोऽपि 'प्रवर्त्तमानो' वर्त्तमानकालवर्त्ती 'प्रमाणं' व्यवहारविषयो भवति, न पुनरितरः—अतीतानागतरूपः, तस्य विनष्टानुत्पन्नत्वेन प्रकृतकार्यानुपयोगित्वात्, न हि भूतभावीन्द्रपर्यायोऽपि गोपालक इन्द्रतया व्यवह्रियते, तत्कार्याकरणत्वात्, अन्यथा देवादिभ्य आगतानां मनुष्याणां चारित्रानुपपत्तेः, देवादीनां विरतिपरिणामस्याप्यसंभवात्, वर्त्तमानपर्याय एव व्यवहारविषयो भवतीत्यत्र दृष्टान्तमाह—'जहे'त्यादि, यथा 'सिंहासने निषण्णः' स्वर्णरत्नमयसिंहासनोपविष्टोऽर्हन् धर्मकथां कथयति, अयं भावः—यथा वार्त्तमानिकपर्यायमपेक्ष्य स्वर्णादिसिंहासनस्थो भगवान् धर्मकथां कुरुते, तथा वार्त्तमानिकपर्यायमधिकृत्य शाल्यादिभोजनमपि क्रियतां, पूर्वोक्तरूभयत्रापि साम्यात्, ननु मनुष्योचितकृतरसवत्कवलभोजित्वे केवलिनोऽपी

तीर्थकृतामितरजनवज्जन्मादिविधिरपि स्वीकर्त्तव्यो न स्याद्, भोज-
रजनसाम्यं स्यात्, तन्न मच्चेतसि प्रतिभासते इति चेत्, तर्हि तीर्थकृतामितरजनवज्जन्मादिविधिरपि स्वीकर्त्तव्यो न स्याद्, भोज-
नापेक्षया स्त्रीकुक्षिसंभवादेरत्यन्तकुत्सनीयत्वात्, अतस्त्वद्विकल्पितमनल्पपापीय इत्यलं विस्तरेणेति गाथार्थः ॥५३॥ इति केव-
लिभुक्तिव्यवस्थापना ॥ अथ नग्नाटमतं कथमेतावद्वृद्धिमुपागतमित्याकाङ्क्षायां गाथामाह—

**सिवभूइप्पभवमयं एअं कालाणुभावओ वुड्ढं । मूढाण पुराणंतिअ भंतिकरं णंतभवहेऊ ॥५४॥**

एतदिदानीमेवानन्तरं लेशतो दर्शितं शिवभूतिप्रभवं मतं 'कालानुभावतः' श्रीवीरजन्मनक्षत्रसंक्रान्तभस्मग्रहकुपितकलिकाला-
नुभावतो भूयसां जनानां निमज्जनस्वभावत्वाच्च वृद्धिं गतं, मूढानां तन्मतवासिनां 'पुरातन'मिति जीर्णं—श्वेताम्बरेभ्यः पूर्वं प्रवृत्त-
मिति भ्रान्तिकरं-भ्रमजनकमनन्तभवहेतुः—चातुर्गतिकानन्तसंसारपरिभ्रमणकारणं स्वस्य परेषां च तदभिमुखानामिति गाथार्थः॥५४॥
अथ पुरातनभ्रान्तिरपि नग्नाटवचनादेव जायते अतस्तद्वचनपद्धतिमाविष्करोति—

**नगिणो पभणइ पढमं अम्हे अम्हेहिं निग्गया तुम्हे । तेणं तित्थं अम्हे तुम्हे तित्थाउ बाहिरिआ ॥५५॥**

'नग्नो' दिगम्बरः 'प्रभणति' पूत्कुरुते प्रथमं—तीर्थप्रवृत्तिकाले आदिभूता 'अम्हे'त्ति वयं 'तुम्हे'त्ति यूयं, 'अम्हेहिं'न्ति अस्मत्
'निग्गय'त्ति निर्गताः, प्रथमे वयं यूयं चास्मन्निर्गता इत्यर्थः, तेन कारणेन श्रीवीरप्रवर्त्तितं तीर्थमस्मदीयसमुदाय एव, यूयं तु
तीर्थबाह्या इति दिगम्बराभिप्राय इति गाथार्थः ॥५५॥ अथ प्रागुक्तप्रकारेण दिगम्बरस्य मुधागर्वविध्वंसनाय गाथाष्टकेन तस्यैव
तीर्थबाह्यतामाविष्कुर्वन् प्रथमगाथामाह—

**तं मिच्छा जं पच्छा सिअंबरा दिअंबरेहि उप्पण्णा । जण्णं किरिआजुत्तं तित्थं तित्थंकरा विंति ॥५६॥**

यदिगम्बरेभ्यः श्वेताम्बरा' पश्चादुत्पन्नास्तन्मिथ्या—असत्य,यद्—यस्मात् तीर्थं हि तीर्थकरप्रवर्तित "तित्थं चाउवण्णो संघो सो पढमए समोसरणे"त्ति (१–२६५) वचनात् साध्वादिलक्षणं, तच क्रियायुक्त भवति, तत्र क्रिया तावत् ज्ञानाद्याराधनरूपा, तया युक्त—सहितं तीर्थंकरा भाषन्ते इतिगाथार्थ ॥५६॥ अथ जिनोक्तां क्रियामाह—

सा पुण किरिआ तिविहा णाणुवयारो अ दसणुवयारो। चरणुवयारो अ तहा उवयारो राहणा तेसिं ॥५७॥

सा पुन' क्रिया त्रिविधा भवति, तस्यास्त्रैविध्यमाह—ज्ञानोपचार', च' समुच्चये, दर्शनोपचार' चारित्रोपचारश्चेति त्रैविध्यं, तत्रोपचारशब्दस्य कोऽर्थ इत्याकाङ्क्षायामाह—उपचारस्तेषां—ज्ञानादीनामाराधना—तीर्थंकरुपदेशेन तदनुकूलप्रवृत्तिरित्यर्थ इति गाथार्थ ॥५७॥ अथ ज्ञानस्योपचारमाह—

तत्थ य णाणुवयारो परपक्खच्चाणजोगपमुहेहिं। तुह सासणि सो न सुओ नामेणवि सुमिणपत्तेण ॥५८॥

तत्र ज्ञानादिषु ज्ञानोपचारो यथा—"काले१ विणए२ बहुमाणे३ उवहाणे४ तह चेव अनिण्हवणे५। वंजण६ अत्थ७ तदुभए८ अट्ठविहो णाणमायारो॥१॥त्ति" तत्र चतुर्थाचारतपोलक्षणमधिकृत्य श्रुताराधन परम्परोपधानयोगानुष्ठानप्रमुखैर्भवति, तत्र परम्परा तावत् श्रीसुधर्मस्वामिनोऽद्ययावदच्छिन्नपरिपाटी, न पुनः स्वच्छन्दप्रवृत्तिभाग्भ्यः शिवभूत्यादिभ्य' प्रवृत्ता, तत्सतान स्वाहरूपेत्यर्थः, तया परिपाट्या अयादागता ये उपधानयोगाः—श्रुताराधनतपोविशेषा , तत्रोपधानानि श्रीआवश्यकश्रुताराधनहेतवे श्रावकश्राविकाणामेव, योगास्तु कालिकोत्कालिकश्रुताराधनतपोविशेषा' साधुसाध्वीनामिति, तत्र श्रावकोपधानविधेर्दिग्दर्शनं स्वेयं –पञ्चपल्यारम्भिवाचाम्लतप पुरस्सरमुद्देशानुज्ञादिक्रियया कृतमहानिशीथयोगानुष्ठानस्य साधोः समीप श्रद्धावान् श्रावको नन्दिवि

धिपूर्वकद्वादशोपवासैः श्रीपञ्चमङ्गलमहाश्रुतस्कन्धस्याराधनं करोति, तत्रापि प्रतिदिनक्रिया तावदच्छिन्नाचार्यपरिपाट्या समागता अवगन्तव्या, एवं द्वितीयोपधानादिषु श्रीमहानिशीथोक्तविधिनाऽऽराधनविधिरवगन्तव्यः, साधुवर्गस्य तु श्रीआवश्यकश्रुतस्कन्धस्याचाम्लादितपोविशिष्टैरष्टभिर्दिनैराराधनं, श्रीदशवैकालिकश्रुतस्कन्धस्य पञ्चदशभिर्दिनैः, श्रीउत्तराध्ययनस्याष्टाविंशत्या दिनैः श्रीआचाराङ्गस्य पञ्चाशता दिनैः श्रीसूत्रकृदङ्गस्य त्रिंशता दिनैः श्रीस्थानाङ्गस्याष्टादशभिर्दिनैः श्रीसमवायाङ्गस्य त्रिभिर्दिनैः श्रीभगवत्यङ्गस्य षड्दिनाधिकैः षड्भिर्मासैः श्रीज्ञाताधर्मकथाङ्गस्य त्रिंशता दिनैः श्रीउपासकदशाङ्गस्य चतुर्दशभिर्दिनैः अन्तकृद्दशाङ्गस्य द्वादशभिर्दिनैः अनुत्तरोपपातिकस्य सप्तभिर्दिनैः श्रीप्रश्नव्याकरणस्य चतुर्दशभिर्दिनैः श्रीविपाकश्रुताङ्गस्य चतुर्विंशत्या दिनैश्च यथोक्तक्रियाविशिष्टैरेवाराधनं स्यात्, एवमुपाङ्गच्छेदग्रन्थप्रकीर्णकादिष्वपि स्वस्वाराधननियततपःक्रियाविशिष्टैर्बोध्यं, एवं श्रुताराधनविधिस्तव दिगम्बरस्य शासने—त्वदीयदर्शने, आस्तां साक्षात्, स्वप्नगतेनापि नाम्ना न श्रुतो—न श्रवणपथमागतः, गगनभक्षणादिकमसंभव्यपि स्वप्ने संभवतीतिज्ञापनायेदं दर्शितमितिगाथार्थः ॥५८॥ अथ दर्शनोपचारमाह—

**दंसणुवयारऽरिहंतासायणाचायओ न सो तुम्हं । जेणं जिणपडिमाहिं सह वासो सायणामूलं ॥५९॥**

दर्शनं—सम्यक्त्वं तस्माराधनं तीर्थकृदाशातनात्यागतो भवति, स च त्यागस्तव कथमपि न संभवति, अयं भावः—सम्यक्त्वं तावत् सर्वविदुपदिष्टपदार्थसार्थस्य यथावच्छ्रद्धानं,तच्च तव दुरापं,यत आस्तामन्यत् ,पदार्थसार्थान्तर्गता तीर्थकराशातना परिहार्यत्वेन श्रद्धाय परिहर्त्तव्या, सा च त्वया तथा श्रद्धानविषयीकृत्य न परिह्रियते, प्रत्युतोदीर्य विधीयते,तत्कथमित्याशङ्कायामाह—'जेणं'ति येन कारणेन तव जिनप्रतिमाभिः सहवास आशातनामूलं वर्त्तते, कुतः सम्यक्त्वाराधनमितिगाथार्थः ॥५९॥ अथ चरणोपचारमाह—

चरणुवयारो पयाहिं समिईहिं होइ तीहिं गुत्तीहिं। सो पुण तुह समयीए मट्ठो विट्ठो मए सक्खं ॥ ६० ॥

चरणोपचार –चारित्राराधना ईर्यासमित्यादिभिः पञ्चभि समितिभिः मनोगुप्त्यादिभिस्तिसृभिर्गुप्तिभिश्च भवति, स च तव मते 'श्रमयाँ' भिक्षाचर्या भ्रष्टो–भ्रशमापन्नो मया साक्षात्प्रत्यक्षं दृष्ट',प्रत्यक्षापलापस्य केनापि कर्तुमशक्यत्वादिति गाथार्थः॥६०॥

अथ समित्यायभाव दर्शयन्नाह—

अह जामाइअपमुहा पाहुणया अण्णउत्थिआ अहवा। उद्दिट्ठमोअणाई भुंजंति तहेव तुम्हपि ॥ ६१ ॥

यथा जामातृप्रमुखा प्राघूर्णका अथवा अन्यतीर्थिकाः 'अथास्मद्गृहे भोक्तव्य'मित्याद्यादरवचनरञ्जिता 'उद्दिष्टं'तन्निमित्तमेवो पस्कृत यदोदनादि यावद्भोजनोपयोगि शाल्यादि सकलवस्तुजात तद्भुञ्जते तथैव त्वमपि, अस्मद्गृह एव गोचरी कर्तव्येति निमन्त्र णरञ्जित प्राघूर्णक इव एकत्र भुञ्जान' कथ समितिगुप्तिमाक्? न कथमपीत्यर्थ', समितीनामभावस्त्वेवं—सदोषमाहारं भुञ्जान स्यानेषणीयभोजित्वात् कथं तद्विरोधिनी एषणासमितिः?,अनेषणीयं भुक्त्वा च निर्दोषभोजित्वमात्मन' ख्यापयन् असत्यभाषित्वात् न भाषासमितिमान्, आदाननिक्षेपणासमितिस्तु संयमोपकारिवस्त्रपात्रादिधर्मोपकरणमुपदधत एव भवति, यदागम –"ओहोवहो वग्गहिअं, भंडग दुविहं मुणी। गिण्हंतो निक्खिवंतो वा,पउंजिज्ज इम विहिं ॥१॥ चक्खुसा पडिलेहित्ता, पमज्जिज्ज जय जई। आइए निक्खिविज्जा वा, दुहओवि समिए सया ॥२॥ (७।९३३–४)त्ति" तथा पञ्चमीसमितिरप्याहारपर्यन्त परिष्ठापयत एव भवन्ति, यदागम–"उच्चारं पासवणं, खेलं सिंघाणजल्लिअं। आहारं उवहिं देहं,अन्नं वावि तहाविहं॥१॥ विच्छिन्ने दूरमोगाढे,नासन्ने बिल वज्जिए। तसपाणबीअरहिए, उच्चाराईणि वोसिरे ॥ २ ॥"त्ति (७।९२५–६) श्रीउत्तरा० २४। भोजनावसरे घृतादिसंपृक्तकरद

उच्छिष्टसिक्थादिकं परिष्ठापयतस्तव पारिष्ठापनिका-
न्नादिसिक्थधृतये गृहस्थैः कुण्डिकादिकं मण्डयित्वा भुक्त्यनन्तरं गृहस्थैरेव
समितिर्दुरुत्तरैव, तथा ईर्यासमितिस्तु गृहस्थाचारवतस्तव न संभवत्येव, एवं समितिपञ्चकाभावे कुतो मनोवाक्कायगुप्तयोऽपि?, ननु
तर्हि तीर्थकृतामपि समित्यादीनामभावः संपद्यते, तेषामपि वस्त्रपात्राद्यभावेन समितिपञ्चकासंभवादिति चेत्, मैवं, तेषां तथाक-
ल्पत्वेन प्रागुक्तयुक्त्या वस्त्रपात्राद्यभावेऽप्यसमितीनामभावात्, तत्प्रतिपक्षभूतानां समितीनामेव सद्भावात्, यथा सिद्धानां प्रत्या-
ख्यानाभावेऽप्यनाश्रवित्वात्तत्प्रतिपक्षभूतः संवर एव सिद्ध्यति, वस्तुतस्तु उक्तलक्षणाः समितयः साधूनुद्दिश्योपदिष्टास्तीर्थकृद्भिः,
तीर्थकरवर्णने तु कथञ्चित्साधुसाम्यात्तीर्थकृतामप्युक्ता द्रष्टव्या इतिगाथार्थः ॥६१॥ अथ न केवलं प्रवचनगम्येनैव ज्ञानाद्युपचारेण
हीना नग्नाटाः प्रवचनबाह्याः, किंतु प्रकारान्तरेणापीति दर्शयति—

**भोअणनेवत्थेहि अ पच्चक्खं अण्णउत्थिआ नगिणा। नगिणा णाणाईहिं णाणीहिं ते मुणेयव्वा ॥६२॥**

भोजनं तावदेकत्र गृहे उद्दिष्टौदनादीनां भक्षणं, नेपथ्यं पिच्छिकाकमण्डलुप्रभृतिभिर्यतिरूपधरणं, ताभ्यां चिह्नीभूताभ्यां साक्षा-
दन्यतीर्थिका एव दृश्यन्ते, यस्मादेवं तस्माद् 'ज्ञानिभिः' पंडितैर्नग्नाः—नग्नाटाः ज्ञानदर्शनचारित्रै रहिताः—शून्या एव ज्ञातव्याः
इति गाथार्थः ॥६२॥ अथ कीदृशा नग्नाटाः किमायत्तं च तीर्थमित्युपसंहारमाह—

**एवं किरिआहीणा नगिणा णाणेण तित्थबाहिरिआ। सेअंबरेहिं तित्थं जुत्तेहिं णाणकिरिआहिं ॥६३॥**

'एवम्' अमुना प्रकारेण क्रियाहीनो—ज्ञानाद्युपचाररहितो नेपथ्यादिरहितश्च ज्ञानेन शून्यो यथावस्थितवस्तुपरिज्ञानविकलः सन्
जैनप्रवचनबाह्यो नग्नाटः स्फुट एव, ननु उक्तलक्षणो ज्ञानाद्युपचारो हि श्वेताम्बराभ्युपगतागमे वर्त्तते, न पुनरस्मदभ्युपगतागमे-

प्रीतिपेदशे देवानुप्रिय ! अत एव त्वदीयागमोऽपि न सर्वज्ञमूलकः, किं तु शिवभूतिना तच्छिष्याभ्यां च कौण्डिन्यकोट्टवीरा-भ्यां प्रवर्तितनिजमतानुसारेण परिकल्प्य निबद्धः, सर्वज्ञोपदिष्टे चागमेऽवश्यमुक्तोपचाराणां सद्भावात् । अथ कैस्तीर्थं प्रवर्तते इत्यु-त्तरार्द्धेनाह—तीर्थं संप्रति श्वेताम्बरैरेव भवति, तैरपि न नाममात्रधारिभिः, यतो नाम्ना श्वेताम्बरा अपि वस्यमाणा राकौट्रिकादयो नाममात्रेणैवास्मदभ्युपगतमेवागममभ्युपगम्यापि निजनिजमतिविकल्पितार्थोद्भावनेन बहुजनान् व्युद्ग्राहयन्तस्तीर्थप्रक्षेपेण स्वतोऽपि भ्रष्टपरिणामाः स्वरूपेऽपि तीर्थबाह्या एव वस्यन्ते, अतस्तीर्थप्रवर्तकैः श्वेताम्बरैः, किंलक्षणैः ?—"ज्ञानक्रियाभ्यां युक्तैः" ज्ञान-चारित्रसंयुक्तैः, न पुनरेकतरेणापि विकलैः, तैस्तीर्थमित्युक्ते, यदागमः—"हयं नाणं कियाहीणं, हया अन्नाणओ किया" इति (२–१०१) इति गाथार्थः॥६३॥ इति गाथाष्टकेन नग्नाटस्तीर्थबाह्यः प्रदर्शितः, अथ प्रकारान्तरेणापि तथा दर्शयितुं युक्तिमाह—

अहवा सत्तुंपसिद्ध सित्तुंजयउज्जयंत तित्थदुग । जस्स य न आयत्त सो संघो वीरजिणतित्थ ॥३४॥

अथवेति प्रकारान्तरोद्योतकः, शत्रुञ्जय प्रतीतः उज्जयन्तगिरिः—गिरिनारिपर्वतः एतत्तीर्थद्वयम्, आसतां जैनाः, तदतिरिक्ता अपि जैनसबन्धीति वदन्ति, सर्वेषां सम्यग्दृशां मिथ्यादृशां चाबालगोपालाङ्गनानामपि प्रसिद्धं, तत्तीर्थद्वयं यस्य स्वस्यायत्तं निश्रया वर्तते स संघः—श्रमणादिसमुदायलक्षणो वीरतीर्थमिति गाथार्थः ॥६४॥ अथैतत्तीर्थं नग्नाटस्यापि भविष्यतीति शङ्कानिरासाय गाथामाह—

उज्जितगिरिविवाए सासणसुरिकहणमित्थ सआयं । जो मण्णइ नारीणं मुत्तिं तस्सेव तित्थमिणं ॥६५॥

'उज्जयन्तगिरिविवादे' दिगम्बरैः सह परस्परमात्मीयत्वेन कलहे समुत्पन्ने 'शासनसुरी' जिनशासनाधिष्ठायिका तस्याः कथ-नमित्थं संजातं—यो नारीणां मुक्तिं मन्यते तस्यैव तीर्थं, तत्र संप्रदायस्त्वेवं—पुरा यदा श्री श्रीमदुज्जयन्तमहातीर्थमाश्वाम्बरैः श्वेत-

मणसङ्घपार्श्वादुद्दालयितुमारब्धं तदा सङ्घस्य कायोत्सर्गानुभावेन कम्पितासना शासनदेवता नृपपर्षदि दूरादानीतकन्यकामुखेन "इक्कोऽवि नमुक्कारो जिणवरवसहस्स वद्धमाणस्स। संसारसागराओ तारेइ नरं व नारिं वा ॥१॥" इति गाथानन्तरं—"उज्जिंतसेलसिहरे दिक्खा णाणं निसीहिआ जस्स। तं धम्म चक्कवट्टिं, अरिट्ठनेमिं नमंसामि ॥१॥"त्ति गाथां चैत्यवन्दनान्तर्गतां कृत्वा समार्प्पयत्, तत्प्रभृत्येवं सकलसंघेन पठ्यमानेयमागादितिगाथार्थः ॥६५॥ अथ विवादे शासनसुरीकथनानन्तरं नग्नाटाः कीदृशा जाता इत्याह—

**तत्तो विसन्नचित्ता खमणा पासंडिआ विगयआसा। निअनिअठाणं पत्ता पब्भट्ठा दाणमाणेहिं ॥६६॥**

'ततो' विवादानन्तरं विगता—नष्टा संज्ञा—जिज्ञासितवस्तुविषयज्ञानलक्षणा यस्मात्तद्विसंज्ञमेवंभूतं चित्तं येषां ते विसंज्ञचित्ताः, कांदिशीका इत्यर्थः, 'क्षपणका' इति नाम पाखंडम्—अज्ञानिप्रणीतमार्गमाश्रिता ये ते पाषण्डिकाः, विगता—नष्टा इदमस्मदीयं तीर्थं भविष्यतीतिरूपा आशा—कदाशा येषां ते विगताशाः, पुनः १—दानमानाभ्यां प्रभ्रष्टाः, नैते पात्रबुद्ध्या दानार्हाः, नवा गुणवत्त्वेनाभ्युत्थानार्हा इत्येवं जनोक्तिविषया जाताः सन्तो 'निजनिजस्थानं' मठादिलक्षणं प्राप्ता इतिगाथार्थः ॥६६॥ अथ दिगम्बरैः सह संभावितभाविविवादभञ्जनाय सङ्घेन यत्कृतं तदाह—

**मा पडिमाण विवाओ होहित्ति विचिंतिऊण सिरिसंघो। कासी पल्लवचिंधं नवीणपडिमाण पयमूले ॥६७॥**

प्रतिमासंबन्धी कलहो मा भूदित्यमुना प्रकारेण 'विचिन्त्य' पर्यालोच्य श्रीसङ्घो 'नवीनप्रतिमानां' अद्यप्रभृतिनिर्मीयमाणानां जिनप्रतिमानां 'पदमूले' पादसमीपे 'पल्लवचिह्नं' वस्त्रपट्टलिकालक्षणं लाञ्छनमकार्षीत्, कृतवानिति गाथार्थः॥६७॥ अथ श्रीसङ्घकृत्यमधिगत्य दिगम्बरो यद्व्यधात्तदाह—

न सोऊण रुट्ठो दुट्ठो न्मवणोऽवि कासि नगि गत्त । निअपडिमाण जिणवरविगोवण सोऽवि गयसन्नो ॥६८॥

तत्–श्रीजिनेन्द्रप्रतिमानां पदमूले श्रीसङ्घकृतं पल्लवचिह्नं ज्ञात्वा दुष्ट' क्षपणको 'रुष्टः' कोपाविष्ट' सन् सङ्घं प्रति किञ्चित्कर्तुम शक्तो जिनवरविगोपनमर्पणहेतुः–'निजानां' स्वायत्तानां जिनप्रतिमानां नग्नत्वं दृश्यमानलिङ्गावयवयत्त्वमकार्षीत्, स'विग तसंज्ञो' नग्नाकारकरणेन जिनेन्द्रविगोपनं भविष्यति नवेति विचारणाशून्य , अय भावः–अहोऽस्मभिभितप्रतिमाकारतो भिन्नाका रकरणाय यदि श्रीसङ्घेन पल्लवचिह्नमकारि, करिष्यामस्तर्हि वयमपि श्वेताम्बरप्रतिमातो भिन्नत्वकरणाय किञ्चिच्चिह्नमितिविचिन्त्य मत्सरभावेन जिनप्रतिमानां नग्नत्व विहितं, श्वेताम्बरेण स्वय वस्त्रधारित्वात् वस्त्र चिह्नं कृत, दिगम्बरेण स्वयं नग्नत्वात् नग्नत्व मेवेति गाथार्थ' ॥६८॥ अथ मुग्धजनप्रत्यायनाय तच्चिह्नमाह–

तेण संपइपमुहप्पडिमाणं पल्लवकण नत्थि । अत्थि पुण संपईणप्पडिमाण विवायकालाओ ॥६९॥

येन कारणेन विवादे समुत्पन्ने पल्लवचिह्न प्रतिमासु संवृत्त तेनैव कारणेन 'सम्प्रतिप्रमुखप्रतिमानां' विवादात् पूर्वकालभाविनीनां त्रिखण्डाधिपतिसंप्रतिनृपप्रभृतिनिर्म्मापितानां तीर्थप्रतिमानां 'पल्लवाङ्कनम्' अञ्चलचिह्न 'नास्ति' न विद्यते, 'अस्ति'विद्यते पुनः साम्प्रतीनप्रतिमानां–आधुनिकजिनप्रतिमानां पल्लवचिह्नमिति, साम्प्रतीनत्वं कुत इत्याह–'विवायकालाउ'त्ति उज्जयन्तगिरिमा-श्रित्य (दिगम्बरै') सह विवादकालादिति गाथार्थः ॥६९॥ अथ विवादकालात्पूर्वं किमासीदित्याह–

पुव्विं जिणपडिमाण नगिणत्त नेव नविअ पल्लवओ । तेण नागारेण भेओ उभयेसि संभूओ ॥७०॥

'पूर्व' विवादात्पूर्वकालं जिनप्रतिमानां नैव नग्नत्व, नापि च पल्लवकः–अञ्चलचिह्नं, तेन कारणेन आकारेण जिनप्रतिमानाम

भयेषां—श्वेताम्बरदिगम्बराणां भेदो—भिन्नत्वं 'न संभूतो' नासीत्, सदृश आकार आसीदितिगाथार्थः ॥७०॥ अथ बोटिकमत-स्वरूपं तत्प्ररूपणापूर्वकनिराकरणे हेतुं च दर्शयन् गाथाद्वयेनोपसंहारमाह—

एअं वोडिअकुमयं पडिअं तित्थाउ दूरतरदेसे। णो तित्थं बाहेई वणगिरिअग्गी जहा नयरं ॥७१॥

तहविअ पवट्टमाणं विवायहेउत्ति मुणिअ भणिअंति। थूलमईणं एसा जुत्तिदिसा दंसिआ णेआ ॥७२॥

यद्यप्येतद्बोटिककुमतं प्रवचनलिङ्गाभ्यां सर्वथा साधर्म्याभावेन शाक्यादिवत्तीर्थाद्दूरतरदेशे पतितं, न बाधते तीर्थं, यथा राकौष्ट्रिकादयस्तीर्थान्तवर्त्तिनां श्राद्धादीनां शङ्कोत्पादकत्वेन तीर्थबाधाकारिणो न तथाऽयं दिगम्बर इति, तत्र दृष्टान्तमाह—यथा 'वनगिर्यग्निः' अरण्यपर्वतवर्त्तिवह्निर्न नगरं बाधते, दूरतरवर्त्तित्वात्, प्रत्यासन्नस्तु प्राकृतजनतृणकुटीं ज्वालयन् बाधते, तर्हि किमर्थमेतन्मतप्ररूपणं कृतमित्याशङ्कामपाकरोति—'तहविअ'त्ति तथापि च प्रवर्त्तमानं—विद्यमानमेतत्, न पुनर्जमाल्यादिवन्निःसत्ताकीभूतम्, अत एव कदाचिद्विवादहेतुर्भवतीतिज्ञात्वा भणितमिति न दोषः, अथ विवादे समुत्पन्ने एतावद्भणनेन किं स्यादित्याह—'थूलमईणं'ति स्थूलमतीनां—मत्तोऽप्यल्पमतीनां न पुनर्धर्मसंग्रहणीविशेषावश्यकादिवृत्तिनिष्णातमतीनां विदुषामपि'एस'त्ति एषा युक्तिदिशा दर्शिता ज्ञेया—ज्ञातव्या, स्थूलमतिभिरनया युक्तिदिशा नग्नाटास्तिरस्करणीया इति गाथायुग्मार्थः ॥७१–७२॥

अथाधिकारोपसंहारमाह—

एवं कुवक्खकोसिअसहस्सकिरणंमि उदयमावण्णे। चक्खुप्पहावरहिओ कहिओ अ दिअंबरो पढमो ॥ ७३ ॥

'एवं' प्रागुक्तप्रकारेण कुपक्षकौशिकसहस्रकिरणे उदयं प्राप्ते 'चक्खु'त्ति चक्षुः—स्वकीयं लोचनं तस्य यः प्रभावो—महिमा नीला-

दिरूपग्रहणशक्तिस्तेन रहितो—विकल' प्रथमो दिगम्बर कथितः, अय भाव —उदिते हि सहस्रकिरणे यथा कौशिको निजचक्षुः—प्रभावरहितो भवति, अथ हि जगत्स्वभावो यथामलप्रकुनिकुलस्य सूर्यकिरणा अतिश्यामतया भासन्ते, यदाह श्रीसिद्धसेनदिवाकर'—"सद्धर्मबीजवपनानघकौशलस्य, यल्लोकबान्धव! तवापि खिलान्यभूवन्। तन्नाद्भुत खगकुलेष्विह तामसेषु,सूर्यांशवो मधुकरीचरणावदाता ॥१॥" इति, तथा कुपक्षकौशिकसहस्रकिरणसंज्ञितेऽस्मिन् प्रकरणे कुपक्षाणां पुरस्तादुद्भाविते कुपाक्षिकविशेषो दिगम्बर निजचक्षु'—कुपदानरूपा कुदृष्टिस्तत्प्रभावरहितो भवति, तस्य स्वमतिकल्पिता' कुयुक्तयो न स्फुरन्ति, अथवा कुदृष्टिरेव सुदृष्टिर्भवति, एवंविधो दिगम्बर कथित इति गाथार्थ' ॥ ७३ ॥ अथाय दिगम्बरः कस्मिन् संवत्सरे कस्मिन् गुरौ विद्यमाने मति कथित इति प्रदर्शनाय गाथामाह—

नयणरसकायरायंकिअममम्मि मिम्मि चित्तसिअपक्खे। गुम्मेवयपुण्णुदए सिरिहीरविजयसुगुरुवारे ॥७४॥
इअ सामणउदयगिरिं जिणभासिअधम्मसायराणुगय। पाविअ पमासयतो महस्सकिरणो जयउ एसो ॥७५॥

॥७४॥ अथैतत्प्रकरणकर्तृनामगर्भितामाशीरभिधायिकां गाथामाह—इअ सा० व्याख्या प्राग्वत् ॥७५॥

इअ कुपक्खकोसिअसहस्सकिरणंमि पवयणपरिक्खावरनामंमि दिगंबरनिराकरणनामो बीओ वीसामो सम्मत्तो

इति श्रीमत्तपागणनभोनभोमणिश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीधर्मसागरगणि-
विरचितस्वोपज्ञकुपक्षकौशिकसहस्रकिरणे श्रीहीरविजयसूरिवत्तप्रवचनपरीक्षापरनाम्नि
प्रकरणे दिगम्बरनिराकरणनामा द्वितीयो विश्रामो विख्यातः (ग्रंथ १०००)



# अथ पौर्णिमीयमतनिरसनस्तृतीयो विश्रामः

अथ पौर्णिमीयकमतं विभणिषुः किंनामा पौर्णिमीयकमताकर्षकः कस्मात् गणात् कस्मिन् संवत्सरे किंनिमित्तान्निर्गत इति-ज्ञापनाय गाथामाह—

**अह चंदप्पहसूरिप्पभवं पुण्णिममयं वडगणाओ । एगारइगुणसट्ठीवरिसे गुरुबंधुऽमरिसेणं ॥१॥**

'अथे' ति बोटिकवक्तव्यतानन्तरं क्रमप्राप्तं बोटिकोत्पत्तेर्भूयसा कालेनापि विद्यमानापत्यकमिदमेव जातमिति गम्यं, किंलक्षणम्—'चन्द्रप्रभसूरिप्रभवं' चन्द्रप्रभाचार्यात्समुत्थम्, अनेन विशेषणेन तन्मताकर्षकश्चन्द्रप्रभसूरिः प्रदर्शितः, 'वटगच्छात्' बृहद्गच्छान्निर्गत इति निर्गमगणोऽपि दर्शितः, कस्मिन् संवत्सरे ?—'एकादशैकोनषष्टिवर्षे' एकोनषष्टयधिकैकादशशतवर्षातिक्रमेऽर्थाद्विक्रमसंवत्सरतः, अनेनोत्पत्तिसंवत्सरः प्रदर्शितः, केन हेतुना ?—'गुरुबन्ध्वमर्षेण' गुरुबन्धुः—श्रीमुनिचन्द्रसूरिस्तस्यामर्षेण—मत्सरेणेति गणान्निर्गमहेतुः सूचित इतिगाथार्थः ॥१॥ अथामर्षकारणप्रदर्शनाय गाथाद्वयमाह—

**गुरुभाया मुणिचंदो संविग्गो आसि सूरिपयपत्तो । कस्सइ तेण पइट्ठं करिज्जमाणं सुणिअ रूसिओ ॥२॥**

**तम्महविद्धंसमई भणइ पइट्ठा न साहुणो किच्चं । दव्वत्थओत्तिजुत्तिं जंपंत महंतसद्देण ॥३॥ युग्मं**

चंद्रप्रभाचार्यस्य गुरुभ्राता—सतीर्थ्यः आचाम्लादितपोऽनुष्ठानकष्टेन संविग्नो बहुश्रुतो गणनायकतां प्राप्तः श्रीमुनिचन्द्रसूरिरासीत्, तेन कस्यचिन्महर्द्धिकस्य श्राद्धस्य प्रतिष्ठां क्रियमाणां श्रुत्वा रुष्टः—क्रोधाविष्टश्चन्द्रप्रभाचार्यः तस्याः प्रतिष्ठाया महोत्सवविध्वंस-

नमति मन् प्रतिष्ठा माधोः कृत्य न भवति,किन्तु भावकस्यमिति भणति, किं कुर्वन् ?-भो लोकाः! प्रतिष्ठा द्रव्यस्तव इति युक्ति जल्पन् महाकष्टेन, पारस्परमत्यधरार्थ ॥

भावार्थमन्वय-तदानीं किल राजश्रीकर्मवारक श्रीचन्द्रप्रभसूरिः श्रीमुनिचन्द्रसूरि श्रीमान् देवसूरि श्रीशान्तिसूरिश्चेति चत्वारोऽप्येकगुरुशिष्याश्चारित्रिणोऽभूवन, तेषां मध्ये समधिकज्ञानादिगुणै भवजनपदविख्यातः श्रीमुनिचन्द्रसूरि, अन्यदा श्रीधननामा कश्चिन्महर्द्धिकः श्रावको बहुवित्तव्ययेन महामहःपूर्वं श्रीजिनेन्द्रप्रतिमां प्रतिष्ठापयिषुर्वृद्धत्वात् श्रीचन्द्रप्रभाचार्यं प्रति प्रोक्तवान्-भो पूज्या! मदीयमनोरथमफलीकरणाय प्रतिष्ठाकृते श्रीमुनिचन्द्रसूरीनाज्ञापयतेति, महान्तमुपरोधं च कृतवान्, चन्द्रप्रभाचार्यश्चिन्तितवान्-मयि वृद्धे सत्यपि कथं श्रीमुनिचन्द्रसूरिः प्रतिष्ठां करोतीत्यभिमानत्यागाक्षम तन्महोत्सवविध्वंसनाय भो चतुरश्रावक! विधिना प्रतिष्ठां कुरु, न ह्यागमे साधो प्रतिष्ठाकृत्यमुक्तं, किन्तु द्रव्यस्तवत्वेन श्रावकस्यैव युक्तमित्यादियुक्त्या वि० सं० ११४९ वर्षे श्रावकप्रतिष्ठा प्ररूपिता, महाजनैरप्युपस्य तिरस्कृताः, तत एकाकीत्यसौ कारणेऽपि पततीति विचिन्त्य श्रीमुनिचन्द्रसूरिमत्सरस्य मतमदकरणाय सं० ११५९ वर्षे अद्य रात्रौ मम पद्मावत्या आगत्योक्तं-श्रावकप्रतिष्ठा पूर्णिमापाक्षिकं चत्यनादिसिद्धं त्वं प्ररूपयति चन्द्रमा मया पूर्णिमापाक्षिकं करिष्यते, द्वितीया पूर्णिमा प्रकाशिता, ततः श्रीसङ्घेन प्रवचनोपघातक वचन मा भूदित्याक्रोशितोऽपि प्रत्युक्तवान्-यदि पद्मावत्योक्तं न प्रमाणीक्रियते तर्हि सा मयि कुप्यतीति वचसा सङ्घोक्तमप्रति पद्यमानोऽस्मानभिनिवेशीति कृत्वा मदन्याय' कृत इति व्यतिकरवान् चन्द्रप्रभाचार्यो मत्सरेण प्रथमं श्रावकप्रतिष्ठां प्ररूपितवानिति गाथाद्वयार्थः ॥ २-३ ॥ अथ चन्द्रप्रभाचार्योद्भाविताऽनुमानप्रयोगघटितां गाथामाह—

जिणपडिमाण पइट्ठा न साहुकज्जं तु दव्वथयभावा । अहवा सावज्जत्ता कुसुमेहिं जिणिंदपूयव्व ॥४॥

जिनप्रतिमाप्रतिष्ठेतिपक्षः, न साधुकार्यमिति साध्यं, तुशब्दात् श्रावकेणैव कार्यमिति द्वितीयमपि साध्यं बोध्यं, द्रव्यस्तवभावात्–द्रव्यस्तवत्वात् सावद्यत्वाच्चेति हेतुद्वयम्, अत्र सावद्यत्वादितिहेतुर्न चन्द्रप्रभाचार्योद्भावितः, किंतु तिलकाचार्योद्भावितः, तिलकाचार्यस्तु तदन्वयीतिकृत्वा प्रसङ्गतोऽत्र लिखितोऽपि हेतुः 'तिलगो कुवक्खतिलगो'त्ति त्रयस्त्रिंशत्तगाथात आरभ्य निराकरिष्यते, कुसुमैर्जिनेन्द्रपूजेवेति दृष्टान्त इतिगाथार्थः ॥ ४ ॥

दव्वमपहाण दविणं थओवि जिणभत्ति धम्ममित्तं वा । दूसइ न किंचि किचं मुणिउचिअपइट्ठकिच्चेसु ॥५॥

अथ स एव तावदित्थं प्रष्टव्यः–भो चन्द्रप्रभाचार्य ! अद्य यावदच्छिन्नं तीर्थमासीत् न वा ?, नेति वक्तुमशक्यत्वेनासीदित्येव वक्तव्यं, तच्च तीर्थं साधुप्रतिष्ठामाश्रितमुत श्रावकप्रतिष्ठां वा ?, यदि साधुप्रतिष्ठामिति ब्रूषे तर्हि किं त्वं तीर्थबाह्यभवनेनात्मानं क्लेशयसि ?, अथ पूर्वमविधिरेवासीदितिचेत् तर्हि विधिं कुर्वाणोऽपि त्वमच्छिन्नपरम्परायाततीर्थबाह्यः संपन्न इति विधेरिहैवैतत्फलं प्राप्तं, परत्रासाद्विधेः किं फलं भावीति स्वयमेव किमिति न पर्यालोचयसि ?, अथ पूर्वं श्रावकप्रतिष्ठैवासीत्, परं कियता कालेन चैत्यवासिभिः साधुप्रतिष्ठा व्यवस्थापितेति चेत् तर्हि एतद्वचनं त्वयैवाप्तेनोक्तमस्माभिः श्रद्धेयं उत तद्व्यञ्जकमन्यत्किमप्यस्ति ?, आद्यपक्षे दिव्यकरणमन्तरेण त्वय्याप्तत्वमेव को गर्दभीक्षीरपायी श्रद्दधातीति पल्लवमादाय दर्श्यतां, द्वितीये तद्व्यञ्जकं त्वदुत्पत्तेः पूर्वं प्रतिष्ठितासु प्रतिमासु अमुकेन श्रावकेणेयं प्रतिमा प्रतिष्ठितेत्यादिवर्णावली उतागमो वा आप्तजनप्रवादो वा ?, नाद्यः, कस्यामपि प्रतिमायां तथावर्णावल्या अनुपलब्धेः, परं यत्र क्वापि जीर्णप्रतिमासु वर्णावली तत्रामुकसूरिभिः प्रतिष्ठितममुकबिम्बमित्यादिरूपेण

नप्रतिरेव रचात् युपलभ्यते, नापि द्वितीय , क्वाप्यागमे अमुकश्रावकस्य प्रतिष्ठा कृतेत्यनुपलब्धेः, प्रत्युत "मुद्दाण१ मंगनासो२ जिणआस्वण३ तहर दिसिबंधो४। नेत्तुम्मीलण५ उमग६ गुरुअहिगारा इह कप्पे ॥१॥" इति श्रीपादलिप्तसूरिवच', तथा–रूप्यकभाजनस्थेन, सुचिना मधुसर्पिषा । स नेत्रोन्मीलनं कुर्यात्सूरि स्वर्णशलाकये ॥१॥ति श्रीउमास्वातिवाचकवच , तथा "सद्देसेण घरलक्खण अट्टिअं सामगुणयथहिं । अभिमतिउं तिसारं सूरिणा सूरिमतेण ॥२॥ इत्यार्यश्रीसमुद्राचार्यवच , तथा "तो इट्ठंसपत्ते इमगिलागासमाविदिपुव । जिणनेत्तुम्मीलणाय करउ मच्छ निसंतत्थो ॥१॥ अच्छीनिलाडसंधिसु दिअणविअ सिरपयाइ एयण्णो। एगयच्च अहिआए गाहिसमह धिरमणो सूरी ॥२॥ इति श्रीहरिभद्रसूरिवच', तथा–विहिवयण न पमाणं सुसुव जण ठावणागुरुणो । रुमा जिणबिंबाण तं च मविमय इसरं करणे ॥१॥ इति श्रीहरिभद्रसूरिवच , इत्यादिप्रवचनप्रमाणपुरुषविरचितस्वस्वप्रतिष्ठाकल्पादिवचांसि त्वदुक्तमचोषायकान्यत्रोपलभ्यन्ते, नापि तृतीय , पूर्वं श्रावकप्रतिष्ठाऽऽसीत् किंवा कालेन चैत्यवासिभि साधुप्रतिष्ठा व्यवस्थापितेति तीचप्रयायानुपलब्धे', प्रत्युत श्रीवसुदेवहिण्ड्यादिश्रीमहावीरचरित्रादौ श्रीशत्रुञ्जयाष्टापदादिषु श्रीनाभेयादिकपिलकेवलिप्रभृतिसाधुभि प्रतिष्ठा कृतेत्यर्थं प्रसाद उपलभ्यते, इत्यादिप्राञ्जलयुक्तिलेशेनापि तिरस्कर्तव्यार्दे चन्द्रप्रभाचार्ये गत्यपि यारसमुद्राधितानुमानानादिरचना तत्प्रतिपक्षभूतैरनुमानादिभिर्न निराक्रियते तावत्कयापि मुग्धानां दुर्विदग्धानां च मनसि नापगमिष्यतीति विचिन्त्य तत्पराकरणायोपक्रम्यते, तथाहि–प्रतिष्ठा न साधुकृत्य, द्रव्यस्तवत्वात् , कुसुमादिना जिनपूजादिनिग्रहमानुमान द्रव्यस्तवत्वादिति पञ्चयावयवस्य हेतोरप्रयोरपि अभ्युपयोर्ककल्पिकपथापानुज्ञाप्य रूपयितु गाथामाह—'नेगमस्सो "साहमिओ गता नयो'त्ति वचनात्, 'धुम्ने द्रव्यमकृत्य' मित्यादिवचनात्र द्रव्य किमप्रधानमुत द्रविणं चेति

विकल्पद्वयी द्रव्यशब्दविषयिणी, स्तवोऽपि किं जिनभक्तिः ? प्राकृतत्वाद्विभक्तिलोपः धर्ममात्रं वेति विकल्पद्वयी स्तवविषयिणी, तथा च द्रव्यस्तवत्वं नाम किमप्रधानजिनभक्तित्वं वा अप्रधानधर्मत्वं वा द्रविणजिनभक्तित्वं वा द्रविणधर्मत्वं वा ?, उपलक्षणाद् 'द्रव्यं हि भावकारण' मितिवचनाद्भावस्तवकारणत्वं वेत्यादिविकल्पजालपतितश्चन्द्रप्रभाचार्यविकल्पितोऽनुमानमीनो मरणातिथिः संपन्नः सन् 'मुनीनां' साधूनामुचितानि-जिनोपदिष्टत्वेन योग्यानि प्रतिष्ठाकृत्यानि "थुइदाण१ मंतनासो२ जिणआहवणं३ तहेव दिसिबंधो४। नेत्तुम्मीलण५ देसण६ गुरुअहिगारा इहं कप्पे ॥१॥" इत्यादि षट् कृत्यानि तेषु किञ्चिदपि कृत्य न दूषयति, अर्थाद्दूषयतीत्यक्षरार्थः, भावार्थस्त्वयं- जिनप्रतिष्ठा न साधुकृत्यं, द्रव्यस्तवत्वादिति कोऽर्थः ?, अप्रधानजिनभक्तित्वात्, तत्र जिनभक्तौ तावदप्राधान्यं किं जिनानुपदिष्टत्वात् उतोपदिष्टेऽप्यापवादिकत्वात् सारम्भत्वात् श्रावकधर्मान्तर्भूतत्वाद् वा ?, आद्ये श्रावकेणापि कथं कर्त्तव्या स्यात् ?, जिनानुपदिष्टस्य धर्मानुष्ठानस्य श्रावकाणामप्यनुचितत्वाद्, अथ जिनोपदिष्टत्वेऽप्यापवादिकत्वादप्राधान्यमिति द्वितीयो विकल्पश्चेत् तर्हि 'कारणिकोऽपवाद' इतिवचनात् तत्र कारणं किं प्रतिष्ठाकृतिमन्तरेण स्थातुं गन्तुं वक्तुं भोक्तुं वा न शक्यते ?, ऐहिकार्थसिद्ध्यभावो वा स्वर्गाद्यनवाप्तिर्वा श्रावकधर्मन्यूनता वा ?, नाद्यौ पक्षौ, प्रत्यक्षबाधात्, प्रतिष्ठाकृतिमन्तरेणापि स्थित्यादिक्रियैहिकार्थसिद्ध्योरुपलम्भात्, न तृतीयः, आगमबाधात्, प्रतिष्ठामन्तरेणानेकेषां तिर्यग्मनुष्याणां स्वर्गावाप्तेः श्रवणात्, चतुर्थे त्वशेषकृत्यसंपन्नोऽपि यदि प्रातिष्ठां न करोति तर्हि श्रावकधर्मन्यूनता, तत्कृतौ च पूर्णतेति प्रतिष्ठायाः श्रावकधर्मपरिपूर्णताहेतुत्वं संपन्नं, तस्या अप्यप्रधानभक्तित्वं स्यात्तर्हि प्राधान्यं कस्योच्यते इति पर्यालोच्य नापवादिकत्वेन हेतुना जिनभक्तेरप्राधान्यं सिद्ध्यति, अथ सारम्भत्वादिति तृतीयोऽपि विकल्पश्चेत्तर्हि प्रतिष्ठा किं चतुर्विधाहारोपवासप्रत्याख्यानवंदक-

स्वभावैकक्रियात्मिका उतानेकस्वभावक्रियाकलापात्मिका वा ?, नाद्यः पक्षोऽप्यबाधात् , द्वितीये किं सर्वा अपि क्रियाः प्रतिष्ठायाः सारम्भाः सचित्तजलफलकुसुमादिसाध्या उत काश्चन ?,नाद्योऽप्यक्षबाधात् , नेत्रोन्मीलनादिक्रियाणां निरारम्भत्वेन सर्वजनप्रतीत-त्वात्, अथ काश्चन सारम्भाः काश्चन निरारम्भाश्चेति चेत्तर्हि यासु क्रियासु सारम्भत्वं ताः क्रिया अधिकृत्य तव मते जिनभक्तेरप्रा-धान्यं सिद्ध्यतु, परं यासु निरारम्भत्वं ता अधिकृत्य प्राधान्ये सिद्धे अप्रधानजिनभक्तेरिति त्वदुपन्यस्तो हेतुर्भागासिद्धिग्रस्तो बोध्यः, बाधोऽपि, यदंशे साधुकृत्यत्वस्यानपायादिति सारम्भत्वमप्यप्राधान्यहेतुर्न स्यात्, अथ साधुधर्मापेक्षया श्रावकधर्मो न प्रधानो, यदागम—"गारत्थेहिं य सव्वेहिं, साहवो संजमुत्तरा" त्ति ॥ श्रीउत्तरा० (१०८०) श्रावकधर्मान्तर्भूता च जिनबिम्बप्रतिष्ठा, अत इयं जिनभक्तिरप्रधानभूतैवेति चेत् तर्हि श्रावकधर्मान्तर्भूतापि जिनबिम्बप्रतिष्ठा साधुसापेक्षा निरपेक्षा वा ?, साधुनिरपेक्षैवेति चेदहो देवानुप्रिय ! श्रावकधर्ममात्रस्यापि साधुसापेक्षत्वे प्रतिष्ठया किमपराद्धं यतः सा साधुनिरपेक्षैवोच्यते, तत्कथमितिचेत् शृणु, कश्चि-द्विवेकी श्रावकः साधुधर्मे प्रत्यसमर्थः सम्यक्त्वमूलद्वादशव्रतरूपं श्रावकधर्मं प्रतिपद्यते, तत्र साधोरपेक्षाऽवश्यं वक्तव्या, सा चैव—स श्रावको विधिना श्रावकधर्मं प्रतिपत्तुकामः प्रशस्तमुहूर्ते चन्द्रबले च सति शुचीभूतो भव्यवस्त्राद्यलङ्कृतशरीरोऽनेकसाधर्मिकसमवाय सहितः सूरिसमीपमुपागत्य नियोजितकरकमलो विनयावनतोत्तमाङ्गः सूरिं प्रदक्षिणयति, सुगन्धादिना पूजयति नमस्यति वन्दते स्तौति च, पश्चात्सकलामपि नन्दिसामग्रीं प्रगुणीकृत्य गुर्वाज्ञया गुरुभिरनुज्ञातप्रदेशे स्थित्वा गुरुबहुमानपरायणो गुर्वाज्ञया ईर्या-पथिकीं प्रतिक्रम्य क्षमाश्रमणपूर्वं मुखवस्त्रिकां प्रतिलिख्य च क्षमा० इच्छकारि भगवन् ! तुम्हे अम्ह श्रीसम्यक्त्वसामायिकश्रुतसामा-यिकदेशविरतिसामायिकआरोपावणी देवे वंदावेह इत्यादिगुर्वाज्ञां प्रतीच्छन् गुरुभिः सह देवानभिवन्दते, ततो द्वादशावर्त्तवन्दनकपूर्वकं

नन्दिसूत्रश्रवणनिमित्तं सप्तविंशत्युच्छ्वासमानं कायोत्सर्गं विधाय नन्दिसूत्रस्थाने नमस्कारत्रयं गुरुमुखाच्छृणोति, श्रुत्वा च गुरुमुखेन सम्यक्त्वं द्वादश व्रतानि चोच्चरति, गुरुरपि श्रावकमस्तके वर्द्धमानाभिर्मुष्टिभिर्वासनिक्षेपं कुर्वन् 'अहन्नं भंते ! तुम्हाण समीवे मिच्छत्ताओ पडिक्कमामी' त्याद्यालापकादिश्रावणेनोच्चारयति, तदनु सप्त क्षमाश्रमणानि, नन्दिं प्रदक्षिणयतश्च श्रावकस्य मस्तके सूरिर्वर्द्धमानाभिर्मुष्टिभिर्वासनिक्षेपं करोति, श्रावकोऽप्यात्मानं कृतार्थं धन्यं च मन्यमानस्तं वासं प्रतीच्छति, ततो गुरुमुखेन यथाशक्त्युपवासादितपः करोति, सूरिश्च तं पुरस्कृत्य श्रावकधर्मोपबृंहणानिमित्तं तदुत्साहपरां धर्मदेशनां विदधाति, ततः श्रावकस्तीर्णोऽहं संसारसमुद्रमित्याद्यात्मानं मन्यमानो यथाशक्ति सङ्घपूजामातोद्यादि श्रावकश्रावकश्राविकादीनां यथोचितद्रविणदानं च सङ्घसमेतश्चैत्यपरिपाटिमपि विदधाति, किं बहुना ?, यथा यथा प्रवचनप्रभावना भवति तथा तथा प्रवर्तते, एवमेकादशोपासकप्रतिमाप्रतिपत्तिरपि भावनीया, आस्तामन्यत्, नमस्कारसहितप्रत्याख्यानघटिकाद्वयमानसामायिकाद्युच्चरन्नपि गुरुसाक्षिकं गुरुमुखेनैवोच्चरति, किमङ्ग पुनः प्रतिष्ठा साधुनिरपेक्षेति, ननु कुसुमादिभिर्जिनपूजा साधुनिरपेक्षैव दृश्यते, तथा प्रतिष्ठाऽप्यास्तामिति चेत् तर्हि पाक्षिकादिकपौषधकरणं नन्दिवासादिनिरपेक्षं दृश्यते तद्वत्सम्यक्त्वपूर्वकद्वादशव्रतोच्चारोऽप्यास्तां, युक्तेस्तौल्यात्, तस्माद्वर्णाण्ठानमात्रे सदृश एव कारणादिविधिर्नान्वेषणीयः, किंतु परम्परागमानुसारेण यथाऽऽम्नायं कस्यचित् क्वचित् कश्चिदपेक्षाऽनपेक्षा वाऽभ्युपगन्तव्या, तेन कुसुमादिद्रव्यपूजाविधौ गुरूपदेशपूर्वकत्वेनैव गुरुसापेक्षत्वमभ्युपेयम्, एवमन्यत्रापि यथासंभवमायोज्यं, किंच—तवाभिप्रायेण द्रवस्तवसाम्येऽपि श्रावकेण किमुपकृतं यत्सम्यक्त्वाद्युच्चारसमये श्रावकमस्तके वासक्षेपं तत्कर्णयोः सूत्रालापकश्रावणं सूरिरेव करोति, तीर्थकृता च किमपराद्धं यत्त्रैलोक्यपूज्यायामपि तत्प्रतिमायां वासक्षेपमन्त्रन्यासं श्रावक एव करोति, न पुनः

सूरिः, परं ज्ञायते त्वया भगवत' कोऽप्यपराधस्त्वया कृतो येन भगवता सद्यया दूरीकृतः, किंच–भो चन्द्रप्रभाचार्य ! यदि तुभ्य-मेवं रोचते तर्हि स्थापनाचार्यप्रतिष्ठायां शिष्यप्रव्राजने सूरिपददाने च वासक्षेपं श्रावक एव करोतु, अन्यथाऽर्द्धजरतीयन्यायमनु सरतस्तव महति संकटे पतनं स्यात् , अथ श्रावकप्रतिष्ठितस्थापनाचार्यस्य पुरस्तात् साधूनां प्रतिक्रमणादिकाः क्रिया' न शुद्ध्यन्ति श्रावकवासक्षेपेण च शिष्य' साधुः सूरिश्च न स्यात् , तर्हि श्रावकप्रतिष्ठिताया' प्रतिमायाः पुरस्तात्कथमीर्याप्रतिक्रान्तिपुरस्सरं देव वन्दनादिकाः क्रिया' साधवः कुर्यु' !, कथं वा श्रावकप्रतिष्ठिता प्रतिमा तीर्थकरकल्पा भवेदित्यापि किं न पर्यालोचयसि !, ननु शिष्यमस्तके वासनिक्षेप' सिद्धान्ते भणित , यदागमः–"खमासमि वट्टमाणस्स निग्गयं भगवओ जिणवरिंदस्स । भावे खओवसमिए वट्टमाणेहिं तो गहिअं ॥१॥" श्रीआव० नि० (३–७३५) एतच्चूर्णिर्यथा–ततो भगवं अणुण्ण मणसीकरेइ, ताहे सक्को वयरामए थाले दिव्वगंधचुण्णाणि घुण्णाणि छोढूण सामि उवगवो, ताहे सामी सीहासणाओ उट्ठित्ता पडिपुण्ण मुट्ठि केसराण गेण्हति, ताहे गोयमसामिप्पमुहा इक्कारसवि गणहरा ईसीओणया परिवाडिए ठंति, ताहे देवा आउज्जगीअसद्दं नि भंति, पुव्वं तित्थं गोयमसामिस्स दव्वेहिं गुणेहिं पज्जवेहिं अणुजाणामित्ति चुण्णाणि सीसे छुभति, ततो देवतावि चुण्णवासं च पुप्फवासं च वासंति, गणं च सुहम्मसामिस्स धुरे ठवेत्ताणं अणुजाणेति'त्ति श्रीआवश्यकचूर्णौ ४६४ संख्ये पुस्तके'८० पत्रे इति चेत् तर्हि प्रतिष्ठायामपि समानं, श्रीसिद्धसेनश्रीहरिभद्रोमास्वातिवाचकप्रमुखमहापुरुषप्रकृतप्रतिष्ठाकल्पादिषु सूरिकृतस्यैव वा सनिक्षेपादेरुक्तत्वात् , अथास्माकं चूर्णिरेव प्रमाणं, न पुन प्रतिष्ठाकल्पादिरिति चेत्तर्हि चूर्णिकारस्य प्रतिष्ठाकल्पकर्त्तार' सम्मता अस म्मता वा !, नान्त्योऽसम्मतत्वात् , आद्ये सुतरां प्रतिष्ठाकल्पानां प्रामाण्यं सिद्ध्यति, अन्यथा माता मे वन्ध्येति न्याय' संपद्यते,

न हि चूर्णिकार प्रमाणतयाऽभ्युपगम्य चूर्णिकारेण प्रमाणीकृते पुरुषे प्रामाण्याभावं वक्तुं शक्यते,अथ श्रीसिद्धसेनश्रीहरिभद्रसूरिप्रभृतिभिरेव कृता अमी प्रतिष्ठाकल्पा इति नास्माकं सम्यगास्थेतिचेत्तर्हि संप्रत्यङ्गोपाङ्गनिर्युक्त्यादिकमपि श्रीसुधर्मस्वाम्यादिकृतमिति कथमास्थेति, युक्तेः समानत्वाद्, अथ प्रतिष्ठाकल्पोक्तो विधिः क्वापि नोपलभ्यतेऽतो नास्थेतिचेत्तर्हि प्रतिष्ठैव नाङ्गीकर्तव्या, अनुपलब्धस्याप्यङ्गीकारे शशविषाणस्याप्यङ्गीकारापत्तेः, अथ नाममात्रेण प्रतिष्ठा सिद्धान्ते समुपलभ्यते, यदुक्तं–"निअदव्वमपुव्वजिणिंदभवणजिणबिंबवरपइट्ठासु। विअरइ य पत्थपुत्थय सुतित्थतित्थयरपूआसु ॥१॥"(२७–३०६) इतिश्रीभक्तप्रकीर्णके इति चेत्तर्हि नाममात्रेणैव प्रतिष्ठा श्रद्धेया तथैवोपलम्भात्,न पुनर्वेदिकायवारकाष्टादशस्नात्रादिविधिरपि,तस्य क्वाप्यनुपलम्भाद्,अथ प्रतिष्ठाकल्पे स विधिरुपलभ्यते इति चेदलं विवादेन, तेषु सूरेरेव षट् कृत्यान्युक्तानि, एवमुक्तयुक्त्या श्रावकधर्मान्तर्भूताया अपि प्रतिष्ठायाः साधुसापेक्षत्वे सिद्धे न किञ्चिदनुपपन्नं, यतो यथा श्रावकधर्मेऽपि सम्यक्त्वमूलद्वादशव्रतोच्चारे प्रतिमाद्युच्चारे च अहण्णं भंते! इत्यादिर्यविद्वासनिक्षेपादिकं साधुकृत्यं सङ्घभक्त्यादिकं च श्रावककृत्यं तथा प्रतिष्ठायामपि 'थुइदाण१ मन्तनासो२' इत्यादीनि षट् कृत्यानि सूरिसंबन्धीनि शेषमशेषं तु द्रव्यव्ययादिसाध्यं सचित्तजलफलपुष्पादिसाध्यं च श्रावककृत्यमेव,तथा चैकस्या अपि प्रतिष्ठायाः क्वचिदंशे साधुकृत्यत्वेन साधुधर्मान्तर्भूतत्वं क्वचिदंशे श्रावककृत्यत्वेन श्रावकधर्मान्तर्भूतत्वं चेत्युभयमपि न विरुध्यते, तथा चानुमाने बाधः स्फुट एव, साधुकृत्यत्वेन सिद्धेऽपि प्रतिष्ठाकृत्ये तदभावसाधनात्, न चैकस्य कार्यस्योभयस्वभावत्वं कथं संभवतीति शङ्कनीयम्–एकस्मिन्नेव पुत्रे मातृपुत्रीत्वपितृपुत्रत्वयोरिवाध्यक्षसिद्धत्वाद्, अत एव ऋषभदेवस्य नाभेयो मारुदेवश्चेत्यभिधानद्वयमप्यविरुद्धं, ननु यदि कदाचिदाचार्यादिसामग्र्यभावे तीर्थकृदभिमुखीभूय तीर्थकृत्प्रतिमां वा पुरस्कृत्य किंचि-

व्रतादिकं श्रावको प्रतिपद्यते यत्र वा शासनदेवतार्पितलिङ्गः प्रत्येकबुद्धादिर्वाऽपि प्रतिपद्यते कथं तत्र नामनिक्षेपादिव्यतिरिक्तत्वमिति चेन्सत्यम्, आचार्याद्यभावे कारणवशात् स्वयमेव व्रतादिकं प्रतिपद्यमानः परलोकाराधको भवति, न पुनस्तथा शासनप्रवृत्तिः, त स्याऽऽगमोक्तव्यवहारसापेक्षत्वात्, अत एव कारणिकतयाविधचरितानुपतितदमयन्तीतिलकमञ्जरीनर्मदासुन्दरीदृष्टान्तेनाग मोक्तविधिं परिहरन् मूलच्छेदको मण्यते, न हि चरितानुवादमनुसृत्य विधिमार्गः प्रवर्त्तते, तथा प्रवर्त्तने च श्रीवीरदृष्टान्तेन जीव तोर्मातापित्रोः पुत्रस्य प्रव्रज्या अप्राप्ता स्यात्, श्रीगौतमदृष्टान्तेन कौतुकविलोकननिमित्तमेकाकिनाऽप्याचार्येण राजान्तःपुरं ग मनमेकाकिन्या च राज्या सह विजनप्रवेशे च सञ्चरणं कर्त्तव्यं स्यात्, श्रीस्थूलभद्रदृष्टान्तेन वेश्यागृहे चतुर्मासककरणं न दोष- भाग् भवेत्, अतिमुक्तकदृष्टान्तेन मृत्तिकापालिनिरुद्धजले पतद्ग्रहप्लावनं क्षुल्लकैः कर्त्तव्यं स्यात्, तथा च प्रवचनमर्यादा दत्ताञ्जलि- तामापद्येत, तस्माच्चरितानुवादेन न विधिः प्रवर्त्तनीयः, किञ्च-यदिदं दमयन्त्यादिचरितानुवादमधिकृत्य प्रवर्त्यते तदा प्रतिष्ठा कृत्यं श्राविकया एवोपपद्यते, न पुनः श्रावकस्यापि, तत्रापि लघुशुद्धसाधन्वेषणं वेदिकायवारकादिकरणमप्युच्छिन्नसंकथं भवेत्, ननु श्रावकस्यापि क्वापि प्रतिष्ठाकृत्यमुक्तमस्ति, यदुक्तं-"न पड्डा तस्स कया दाणं दाऊण सयलसंघस्स। तेणेव दुक्खभारो मये मव हेउ अम्गुरुओ ॥१॥" इति स्तवने इति चेत्सत्यं,प्रतिष्ठायां प्रागुक्तयुक्त्या कथंचित् श्रावकस्यापि तत्कर्तृव्यवहारस्याविरुद्धत्वात्, यथा सम्यक्त्वमूलद्वादशव्रतानि श्रावकाणां चरितानीति, एवं सत्यपि यदि स्तवनवचोमात्रमवलम्ब्य श्रावकप्रतिष्ठाव्यवस्थापनसमीहा स्यात् तर्हि "नमिविनमिकुलान्वयिभिर्विद्याधरनामकालकाचार्यैः। कासहदाख्ये नगरे प्रतिष्ठितो जयति जिनवृषभः ॥१॥" इति स्त वनवचनात्सूरिप्रतिष्ठाऽपि कथं न समीह्यते ?, तस्मात् कथंचिच्छ्रावककृत्यत्वमपि प्रतिष्ठाया न विरुद्धम्, एतेन 'कोइ सावगो

जिणपडिमाणं पढमपइट्ठाणं करेइ' इत्यादीनि कल्पचूर्ण्यादिवचनानि तथाऽन्यान्यपि च स्थानककथाकोशकल्याणकप्रकर-
णोपमितिभवप्रपञ्चादिसंबंधीनि कुपाक्षिकतिलकतिलकाचार्येण स्वमतिविकल्पितप्रतिष्ठाकल्पे मुग्धजनभ्रान्तिजनकान्युद्भावि-
तानि तानि निरस्तानीति बोध्यम्, उक्तयुक्तेः सर्वत्राप्यवतारात्, क्वचिच्चान्यथाभिप्रायेण चूर्ण्यादिषु विद्यमानस्यान्यथाभिप्रायवता तिल-
काचार्येण विलल्पितस्य द्रव्यस्तवत्वादितिहेतोरप्रधानभक्तित्वादिति प्रथमो विकल्पश्चन्द्रप्रभाचार्यस्य पाशकल्पः संपन्न इति प्रदर्शितं १,
अथ जिनप्रतिष्ठा न साधुकृत्यमप्रधानधर्मत्वादिति द्वितीयो विकल्पश्चेत्तत्रापि धर्मेऽप्राधान्यं किं जिनानुपदिष्टत्वमित्यादिप्रथमविक-
ल्पोद्भावितविकल्पजालकवलितत्वादकिंचित्कर एव २, अथ जिनप्रतिष्ठा न साधुकृत्यं द्रविणजिनभक्तित्वादितितृतीयो विकल्प-
श्चेत्सोऽप्ययुक्तः, तथाहि—द्रविणेन—सौवर्णिकादिधनेनार्थात् द्रविणलभ्येन स्रक्चन्दनादिपूजोपयोगिवस्तुजातेन जिनभक्तिः सा
द्रविणजिनभक्तिस्तस्या भावो द्रविणजिनभक्तित्वं तस्मात् द्रविणजिनभक्तित्वादितिहेतुः संपन्नः, स हेतुः प्रतिष्ठालक्षणे पक्षे वर्त्त-
मानः किं श्रावकोचितकृत्यमात्रवर्त्ती निगद्यते उताचार्योचितकृत्यमात्रवर्त्ती वा उभयकृत्यवर्त्ती वा ?, नाद्यः, सिद्धसाधनात्, प्रति-
ष्ठायां देशेन श्रावकोचितकृत्येषु सूरिकृत्यत्वानभ्युपगमात्, द्वितीये स्तुतिदानादिषु षट्सु सूरिकृत्यत्वेन सिद्धान्तसिद्धेषु सूरिकृत्य-
त्वाभावसाधने स्फुट एव बाधः, हेतुश्च तदंशे शब्दे चाक्षुषमिव स्वरूपासिद्धः, स्तुतिदानादिषु सूरिकृत्येषु द्रविणजिनभक्तित्वाभावात्,
तृतीये हेतोर्भागासिद्धिरंशतो बाधश्च, यतः प्रतिष्ठोपयोगिकृत्यमात्रवर्तीतिहेतुरुच्यमानः सूरिकृत्येष्ववर्ती भागेनासिद्धः, तदंशे
सूरिकृत्यत्वाभावोऽपि साधयितुं शक्यते, तदभावस्य साधुकृत्यत्वस्य सिद्धान्तसिद्धत्वात्, सिद्धान्तसिद्धे वस्तुनि तदभावसाध-
नायानुमानस्याप्रवृत्तेरिति द्रविणजिनभक्तित्वादितितृतीयोऽपि विकल्पोऽकिञ्चित्कर एवेति ३, एवं द्रविणधर्मत्वादिति चतुर्थोऽपि

विकल्पस्त्वदावाग्निपक्षवनहेतुन स्यात्, तस्यापि स हेतु किं भावकोचितकृत्यवर्तीत्यादिविकल्पत्रिकज्वलनज्वालाकलापकवलित त्वात्, एवमुपलक्षणपक्षचिन्तं भावस्तवहेतुत्वादित्यपि पूर्वोक्तविकल्पत्रिककवलितोऽसमर्थ एव४, एतेन चतुर्थगाथायां 'अहवा सावज्ज'त्ति पदेन यो द्वितीयो हेतु भावयत्वादिति सोऽपि निरस्तो बोध्यः, धरिकृत्यांशे सावद्यत्वाभावेन स्वरूपासिद्धेरिति गाथार्थ ॥५॥ अथ 'दव्वमप्पहाणे' त्यादनन्तरोक्तगाथाहेतुचतुर्भंगी निगदिता, तस्यां यानि दूषणानि तानि सूत्रत एव दर्शयन्नाह—

भंगेसु चउसु भागासिद्धो हेऊ अ सज्जवज्जोऽवि । ज देसेणं तुणहवि अहिगारो इह पइट्ठाए ॥६॥

चतुर्षु भङ्गेषूक्तलक्षणेषु हेतुर्भागासिद्ध, यः पुन' साध्यव्यभिचारि, अपिशब्दाद्विपक्षया कश्चिदशुद्धो बाधो हेतुश्च स्वरूपासिद्ध इत्यपि बोध्य, कुत एवं ?–'यत्' यस्मादिह–प्रतिष्ठायामभ्युपसिद्धे प्रतिष्ठाकल्पे देशेन, न पुन' सर्वथा, द्वयोरपि–सूरि श्रावकयोरप्यधिकार', हे गौतम ! प्रतिष्ठाविधावेतावत्कृत्यं श्रावककरणार्हमेतावच्च सूरिकरणार्हमित्येवंरूपेण श्रीवीरोपदिष्टत्वादित्य-क्षरार्थ', भावार्थस्त्वयं–जिनप्रतिष्ठा न साधुकृत्य द्रव्यस्तवत्वादिति कोऽर्थ ?–सारम्भजिनभक्तित्वात् श्रावकधर्मान्तर्भूतत्वाद्वा, उभ-यथाऽपि श्रावकोचितकृत्यमात्रवर्तित्वेन पक्षैकदेशे वर्तमानाद्भागासिद्धः, यथा पक्वाम्रफल सचित्तपरिहारिणा न मोक्तव्य, सर्वात्मना जीवप्रदेशैर्व्याप्तत्वात्, जलाग्नी शीतार्तेन सेव्यौ उष्णस्पर्शाधिकत्वादित्यादयो भागासिद्धा हेतवः, तथा प्रतिष्ठायां श्रावकस्यैवातः साधोरप्यधिकारात् साधुकृत्यत्वमपि सिद्धान्तसिद्ध, तथा च सति तदभावसाधने बाध एव, 'धर्मिग्राहकप्रमाणेनाबाधते साध्ये सद्भावसाधने बाध एव' तिवचनात्, यत्र च द्रव्यस्तवस्य नाम द्रव्यपूजात्वमितिविवक्ष्यते तदा स्वरूपासिद्धो हेतुः स्यात्, नहि प्रतिष्ठा द्रव्यपूजोच्यते, प्रतिष्ठामहसि जिनपूजाऽपि क्रियत इति लोकव्यवहारस्याप्यभावात् प्रतिष्ठितानां पूजाभिप्रायेण कुसुमा-

दिभिः क्रियाविशेषः पूजोच्यते, अन्यथा प्रतिष्ठाया वैयर्थ्यमापद्येत, अप्रतिष्ठिताया अपि प्रतिमाया द्रव्यपूजार्हत्वात्, यदंशे सूरिकृत्यत्वं तदंशे सूर्यकृत्यत्वसाधने बाधः, क्रियामात्रे च साधनेऽशतो बाध इत्याद्यनुमानप्रयोगनिपुणैः स्वयमेव भाव्यमितिगाथार्थः ॥६॥ अथ प्रतिष्ठायां किं सूरिकृत्यं किं च श्रावककृत्यमिति स्पष्टयितुं गाथामाह—

**तत्थवि जमणारंभं जिणभणिअं तंमि सूरिअहिगारो। सेसेसु अ अहिगारो गुरूवएसा गिहीणंपि ॥७॥**

'तत्रापि' प्रतिष्ठायामपि 'अणारंभं' निरारम्भं क्रियाकाले सचित्तानुपयोगि तदपि यद् जिनभणितम्, अनेन विशेषणेन निरारम्भमपि जिनानुपदिष्टं न मोक्षाङ्गमिति ज्ञापितं,हितवचने जिनाज्ञाया एव प्राधान्याद्, यदुक्तं—"आणाइ तवो आणाइ संजमो तहय दाणमाणाए। आणारहिओ धम्मो पलालपूलुव्व पडिहाइ ॥१॥" इति जिनाज्ञामन्तरेण स्वबुद्ध्या सुन्दरमप्यसुन्दरमेव, यदागमः—"अप्पागमो किलिस्सइ जइवि करेइ अइदुक्करं तु तवं। सुंदरबुद्धीइ कयं बहुयंपि न सुंदरं होइ ॥१॥" इतिश्रीउपदे०(४१४)"तंमि"त्ति तस्मिन्निरारम्भे जिनभणिते सूरेः-आचार्यस्योपलक्षणादुपाध्यादेरपि परिग्रहः,तस्याधिकारो जिनाज्ञा,शेषेषु च गुरूपदेशाद्'गृहिणामपि' श्रावकाणामपि, उपलक्षणात् श्राविकाणामपि, स्वस्वकृत्येषु अधिकारः, प्रतिष्ठाकल्पोक्तविधिना कचित्कृत्येषु श्रावकाणां कचिच्च श्राविकाणामप्यधिकार इत्यर्थः, गुरूपदेशादित्यनेन यादृच्छिकप्रवृत्तिः श्रावकश्राविकाणामपि नोचितेति ज्ञापितं, अन्यथा काणकुण्यादयः श्रावकाः श्राविकाश्च वन्ध्याविधवादयोऽप्यधिकारिण्यो भवेयुः, न च तेषामधिकारः, प्रतिष्ठाकल्पादौ निषिद्धत्वादिति गाथार्थः ॥७॥ अथ सूरिश्रावकयोरुक्तकृत्यं सव्यक्तं सदृष्टान्तं च विभणिषुर्गाथायुग्ममाह—

**थुइदाण[1] मंतनासो[2] जिणआह्वणं[3] तहेव दिसिबंधो[4]। नेत्तुम्मीलण[5] देसण[6] गुरुअहिगारा जिणुवइट्ठा ॥८॥**

कार्या, प्रतिष्ठाकृत्यमपि सूरिश्रावकयोरन्यतरेण कर्तुमशक्यं,जघन्यविधावपि श्रावकानीतवासमन्तरेण प्रतिमानां मस्तके मन्त्रन्यासं च कुर्वन् दक्षिणकर्णे च किं प्रक्षिपति ?, आनीतमपि वासं सूरीणामपि जिनेन्द्रबुद्ध्याराधनीयानां जिनप्रतिमानां मस्तके कः प्रक्षिपति ?, न चैवं सामान्यसाधुकृता प्रतिष्ठा सूरेरप्रमाणं भविष्यतीति शङ्कनीयं, स्वहस्तदीक्षितसाधुरिव सामान्यसाधुदीक्षितसाधुरविशेषेण प्रमाणीभवन्निव स्वप्रतिष्ठितप्रतिमेव साधुप्रतिष्ठिताप्यविशेषेण प्रमाणमेवेतिप्रसिद्धेः,न पुनर्महार्द्धिकेनापि श्रावकेण दीक्षितः साधुः स्यात् ,एवं श्रावकप्रतिष्ठिताप्रतिमाऽपि प्राज्ञशेखरं चन्द्रप्रभाचार्यं विहाय नान्यस्य कस्यापि प्रमाणं भवेदित्यादि नेत्रे निमील्य पर्यालोच्यमिति गाथायुग्मार्थः ॥ ८–९ ॥ अथ सिंहावलोकनन्यायेन चन्द्रप्रभाचार्यस्याशङ्कामाह—

**अह भावत्थयहेऊ दव्वथओ न य मुणीण सो जुत्तो। जण्णं मुणीण मग्गो सिद्धफलो भावथयरूवो॥१०॥**

अथ भावस्तवहेतुर्द्रव्यस्तवः, स च मुनीनां न युक्तः, यद्–यस्मात् ,णमित्यलङ्कारे, मुनीनां मार्गो भावस्तवरूपः 'सिद्धफलः' सिद्धं फलं द्रव्यस्तवस्य भावस्तवलक्षणं यस्य स तथेति गाथार्थः ॥१०॥ अथ मुनीनां मार्गो भावस्तवरूपः कुत इत्याह—

**आरंभकलुसभावो कत्थवि नत्थित्थ पुण्ण जिणआणा। देसाणो सारंभो सावयधम्मो अ दव्वथओ ॥११॥**

अत्र–मुनिमार्गे कुत्रापि आरम्भेण–पृथिव्यादिविराधनया कलुषभावः–आविलस्वभावो नास्ति, तत्कुतो ?, यतो मुनिमार्गे जिनाज्ञा पूर्णा वर्त्तते, 'सव्वाओ पाणाइवायाओ वेरमण'मित्यादिरूपेण जिनोपदिष्टमार्गः, सर्वात्मना मुनिभिरङ्गीकरणात् , चः पुनः, 'श्रावकमार्गो द्रव्यस्तवः', कुतो ?, यतः स 'देशाज्ञो' देशेन–अंशेनाज्ञा यत्र स तथा, तत्कुतो ?, यतः सारम्भः पृथिव्याद्यारम्भाध्यवसायकलुषित इत्यर्थः, अयं भावः–जिनेन्द्रैरुत्सर्गतः साधुमार्ग एवोपदिश्यते, तत्राशक्तस्य 'थूलाओ पाणाइवायाओ वेरमणं'

इत्यादि यथाकथिप्रतिपन्नमतमाग' श्रावकधर्मो निगद्यते, अय च मार्गः सर्वविरतिसमुद्रापेक्षया गोपदकल्प', यदागम —चत्तारि तरगा पं०, तं०—समुद्द तरामित्तेगे गोपतिसं तरती''त्यादि,(स्थान० १० ३५९) अत्र समुद्रप्राया सर्वविरतिः, गोपदप्राया च देश विरतिरुक्ता, आज्ञा च विरतिमात्रविषयिकेति देशतः —अल्पाज्ञ' श्रावकः, तथा च कथ साधुर्द्रव्यस्तवाधिकारी स्यादितिगाथार्थ ।१। अथ द्रव्यस्तवे साधोरधिकारो न युक्त इत्यत्र सम्मतिमाह—

यत—भावच्चणमुग्गविहारया य दव्वच्चण तु जिणपूआ। भावच्चणाउ भट्ठो हविज्ज दव्वच्चणुज्जुत्तो ॥१२॥

'भावार्चन' भगवतां पारमार्थिकपूजनमुग्रविहारिता, यथावभारणार्थत्वात् उग्रतविहारितैव, द्रव्यार्चनं तु, तुशब्दो भावार्चनापेक्षया गौणत्वख्यापकः, तत्कि?—'जिनपूजा' माल्यादिभिर्भगवदर्चना, भावार्चनाद्भ्रष्ट'—सर्वसङ्गत्यागं कर्तुमशक्तो भवेत् द्रव्यार्चनोपयुक्तः, तत्परम्परपुण्यानुबन्धिपुण्यैकनिबन्धनतया तस्यापि भावार्चनामूलबीजभूतत्वादिति, सर्वसङ्गपरित्यागलक्षणं (भावार्चन), तच साधुमार्ग एव, तद्विलक्षणस्तु श्रावकमार्गो द्रव्यार्चनमिति श्रीउपदेशमालायामप्युक्तमितिगाथार्थः ॥ १२ ॥ अथोक्त मिथ्यापत्त्या दूषयितुमाह—

एव ते जइ बुद्धी सिद्ध अम्हाण सम्मयं सव्व। मुणिकज्जसे भावत्थओ अ होउत्ति तुह वयणा ॥१३॥

हे चन्द्रप्रभाचार्य! यद्येवं—प्रागुक्तप्रकारेण 'ते' तव बुद्धिः—मतिः स्यात् तर्हि अस्माक सर्वं सम्मतमेव—त्वदुक्तमस्माकमपीष्टमेव, तत्कथमित्याह—'मुणिकज्जसे'त्ति प्रतिष्ठायामपि मुनिकार्यत्वे स्तुतिदानमन्त्रन्यासादिसाधुकर्तव्याऽशे भावस्तवः, सकारोऽवधारणे, भावस्तव एव, 'होउ'त्ति भवतु, तव वचनात्, त्वयैवोक्त—सर्वोऽपि मुनिमार्गो भावस्तव एव, मन्त्रन्यासादो मुनिमार्गस्य तु

इदानीमेव किञ्चिद्दर्शयिष्यते, अत्र तव वचनादिति भणनेनास्माकं तु जिनाज्ञया द्रव्यस्तवत्वेऽपि साधुकर्त्तव्यताया अनपायादि-
त्यग्रे दर्शयिष्यते इति ज्ञापनार्थमितिगाथार्थः ॥१३॥ अत्र नेत्रोन्मीलनादिकं तु मुनिकृत्यमेवेति दर्शयति—

मुणिकज्जं पुण हरिभदओमासाईपइट्ठकप्पेसु। विहिवाए चरिए पुण केवलिकविलाइनिम्मविअं ॥१४॥

मुनिकार्यं पुनः श्रीहरिभद्रोमास्वातिवाचकप्रतिष्ठाकल्पेषु, उपलक्षणाद्बहुवचनाच्च श्रीसिद्धसेनदिवाकरश्रीपादलिप्त-समुद्रसूरिकृतप्रतिष्ठाकल्पेष्वपि, मन्त्रन्यासनेत्रोन्मीलनादिकं सूरिः कुर्यादित्येवंरूपेण विधेरुक्तत्वात्, तथाहि—"तो इट्ठं संपन्ने हेमसिलागाइमंतविहिपुव्वं। जिणनेत्तुम्मीलणयं करेज्ज वण्णं निसंतित्था ॥१॥ अच्छीनिलाडसंधिसु हिअएवि अ सिरपयाइए वण्णे। रययस्स वट्टिआए गहिअमहू थिरमणो सूरी ॥२॥ इतिश्रीहरिभद्रसूरिकृतप्रतिष्ठाकल्पे,तथा "रूप्यकच्चोलकस्थेन,शुचिना मधुसर्पिषा। (तन्) नेत्रोन्मीलनं कुर्यात्, सूरिः स्वर्णशिलाकये ॥१॥"ति श्रीउमास्वातिवाचकप्र०, तथा "थुइदाण१ मंतनासो२, इति श्रीपा-दलिप्तसूरिप्र० तथा 'सदसेण धवलवत्थेण वेढिअं वासधूववत्थेहिं। अहिमंतिउं तिवारं सूरिणा सूरिमंतेणं ॥१॥" इति श्रीसमुद्र-सूरिः, तथा 'सूरिः प्रतिष्ठां कुर्यादि'ति निर्वाणकलिकायामित्यादिप्रतिष्ठाकल्पवचनात्साधुकृत्यं विधिवादेनत्र सिद्धं, तथा "निप्फाइअ जयणाए जिणभवणं सुंदरं तहिं बिंबं। विहिकारिअमह विहिणा पइट्ठविज्जा असंभंतो ॥१॥ (११२९) इति पञ्चवस्तुक-सूत्रे, अस्या वृत्तिः—निष्पाद्य यतनया—परिणतोदकादिग्रहणरूपया 'जिनभवनं' जिनायतनं सुन्दरं 'तत्र' भवने विम्बं भगवतो विधिकारितं सद् अथच विधिना वक्ष्यमाणेन प्रतिष्ठापयेद् असंभ्रान्तः—अनाकुलः सन्निति गाथार्थः" इतिश्रीहरिभद्रसूरिकृतवृत्तौ पत्रे १०४, अत्रापि विधिवादेन श्रावकस्य प्रतिष्ठापनमुक्तं, तथा चरितानुवादेनापि यथा 'चरिए पुणे'त्यादि, चरितानुवादे कपिल-

केवल्यादिनिर्म्मितं, यथापि 'केवल्येव स्वयंबुद्धः, श्वेताम्बरशिरोमणिः। कर्त्ता प्रतिष्ठां कोऽप्येष, पुण्यानामुदयस्तव ॥१॥ तत माघन्तिनाथेन, प्रार्थित कपिलो मुनिः। प्रत्यष्ठात्प्रतिमां मन्त्रपूर्वं चूर्णं विनिक्षिपन् ॥२॥" इति श्रीहेमाचार्यकृतश्रीमहावीरचरित्रे ११ सर्गे, तथा "प्रतिष्ठाप्य जिनेन्द्राणां, प्रतिमा निर्म्मिता नवाः। विधिना सूरिमन्त्रेण, गुरुणा ब्रह्मचारिणा॥१॥ इति सम्यक्त्वकौमुद्यां तृतीयप्रस्तावे तृतीयकथायां, तथा "प्रतिष्ठामर्हतां यो हि, कारयेत्सूरिमन्त्रतः। सोऽर्हत्प्रतिष्ठां लभते, यथा तापसस्तथा फलम्॥१॥ इति बृहच्छत्रुञ्जयमाहात्म्ये, तथा "सर्वतीर्थोदकैः सर्वौषधीभिर्दैवताहृतैः। शास्त्रोक्तविधिना भूपः, प्रतिष्ठामप्यकारयत् ॥ १ ॥ पासाधताः सूरिमन्त्रेणाभिमन्त्र्य पवित्रिताः। क्षिप्ता ध्वजेषु दण्डेषु, चैत्यबिम्बेषु सूरिभिः ॥२॥ इति वि० सं० ४७७ वर्षे निष्पन्ने श्रीशत्रुञ्जयमाहात्म्ये लघुनि, तथा तत्रैव-तत्र "एवं सिद्धनिषाद्यास्यं, प्रासाद भरताधिपः। कारयित्वा प्रतिष्ठाप्य, जिनाज्ञापूजय च्च ॥१॥ इति श्रीश० अष्टापदप्रासादप्रतिष्ठाधिकारे, एवमनेकेष्वपि चरित्रेषु भरतादीनां श्रीनाभसूरिश्रीविद्यासागरसूरिप्रभृतिभि प्रतिष्ठा कारयितृत्वेन प्रयोगा दृश्यंते, न पुन स्वयं प्रतिष्ठाकर्तृत्वेनेति। तथा जीर्णप्रतिमास्वपि 'श्रीजगत्सूरिभि' प्रतिष्ठितं श्रीमहावीरं बिम्ब'मित्यादिरूपेण सूरीणां बिम्बानां च नामपरावृत्त्यापि सूरिलेखोपलभ्यते, न पुन अमुकश्रावकेणेदं बिम्बं प्रतिष्ठितमित्याद्युपलभ्यते, एव प्रासादप्रशस्त्यादावपि बोध्यम्, एवं विधिवादचरितवादाभ्यां प्रतिष्ठा मुनिकर्तृत्वेनैव सिद्धा, न चैवं पूर्वं कर्पाद्यष्टकत्वेनाप्युक्ता तथा चार्सगतिरिति शङ्कनीय, वस्तुगत्याऽन्त्यक्रियैव फलवतीतिकृत्वा सूरिकृतनेत्रोन्मीलनादि क्रियैव प्रतिष्ठोच्यत, सा चोक्तप्रकारेण सूरिकृत्यत्वेनैवागमसिद्धा, सा च तवाभिप्रायेण भावस्तवत्वेनाविवादेन साधुकर्तृत्वेनैव प्रतिष्ठा सिद्धेतीष्टापत्तिरस्माकमिति गाथार्थः॥१४॥ अथ द्रव्यस्तवत्वेन हेतुना प्रतिष्ठाकृत्य मात्योर्नौचित्यमितिवचनं कीदृगित्याह—

**दव्वत्थउत्तिकाउं पइट्ठकिच्चं न साहुणो सम्मं। अण्णाणमूलमूलं वयणमिणं भणइ मूढमणो ॥१५॥**

द्रव्यस्तव इतिकृत्वा साधूनां प्रतिष्ठाकृत्यं न सम्यग्–न युक्तमिति, इदं वचनं मूढमनाश्चन्द्रप्रभाचार्यो भणति, तद्वचनं कीदृग्? –'अज्ञानमूलमूलम्' अज्ञानमूलं–ज्ञानावरणीयं कर्म तस्यापि मूलं–मोहनीयं, तदप्यभिनिवेशरूपं मिथ्यात्वमोहनीयं बोध्यं, सर्वेषामपि कर्मणां मोहनीयमूलकत्वाद्, अज्ञानमूलमूलमिति अभिनिवेशमिथ्यात्वमूलकमित्यर्थ इति गाथार्थः ॥ १५ ॥ अथ तथा वक्तुर्मूढत्वं कुत इत्याह—

**दव्वत्थओऽवि समए पडिसिद्धो सव्वहा न साहूणं । अणुमोअणाइरूवो काउस्सग्गे मुणीणंपि ॥१६॥**

'समये' जिनशासने साधूनां द्रव्यस्तवः सर्वथा न प्रतिषिद्धः, यतोऽनुमोदनादिरूपः कायोत्सर्गे मुनीनामपि भणितः–वंदनवत्तिआए पूअणवत्तिआए सक्कारवत्तिआए इति वचनैरनुमोदनालक्षणो द्रव्यस्तवः साधूनामप्यागमे भणितः,स च तेनाज्ञेन न ज्ञातः, न च द्रव्यस्तवोऽनुमोदनारूपो भावस्तवो भविष्यतीतिशङ्कनीयं, द्रव्यस्तवोऽपि कृतकारितानुमतिभिर्विभजनीयः, तथा चानुमोदनारूपोऽपि द्रव्यस्तवो भवत्येव, अयं भावः–केवलो द्रव्यस्तवः कस्यापि न संभवति, न वा केवलो भावस्तवोऽपि, किन्त्वन्योऽन्यानुसमनुविद्ध एव, यदुक्तं–"दव्वत्थयभावत्थयरूवं एअंपि होइ दट्ठव्वं । अण्णुण्णसमणुविद्धं निच्छयओ भणिअविसयं तु ॥१॥ (१२०९) इति पञ्चवस्तुके, तेन भव्यविधिना पुण्पादिकृतां जिनेन्द्रपूजामालोक्य तत्कर्तुरुत्साहप्रवर्द्धनार्थं पूजाजन्यफलप्राप्त्यर्थं च धन्योऽयं जिनेन्द्रपूजाकर्त्तेत्यादिवचोभिरनुमोदनालक्षणोऽभितो द्रव्यस्तवः साधूनामपि, यदुक्तं–"जइणोवि हु दव्वत्थयभेओ अणुमोअणेण अत्थित्ति । एअं च इत्थ णेअं इअ सुद्धं तंतजुत्तीए ॥१॥ (१२१०) इति 'तंतजुत्तीए'त्ति तंत्रयुक्त्या–सिद्धान्तयुक्त्या, तन्त्रयुक्ति-

स्तवे-कायोत्सर्गे मुनीनामपि 'वंदणवत्तिआए' इत्यादिसिद्धान्त', यदुक्त-"वंदंमि पदनाए पूआसक्कारहेउमुस्सग्गो। जइणोऽवि हु निद्दिट्ठो सो पुण दव्वत्थयसरूवो ॥१॥" इति गाथार्थः॥१६॥ अथाऽऽस्तां साधुः, जिनेन्द्रस्याप्यनुमोदनालक्षणो द्रव्यस्तवोऽस्तीति दर्शयति—

किंचऽण्णजणो दूरे बलिपमुहं जिणवराणमोसरणे। अणिसेहा अणुमोअणमाइअविसओ अ वयणओ ॥१७॥

'अन्यजनो' जिनेन्द्रापेक्षयाऽन्यः साधुजनो दूरे आस्तां, साधुजनस्यानुमोदना तु भवत्येव, परं जिनेन्द्रस्यापीत्यर्थः, तत्कथमित्याह-'बली' त्यादि, समवसरणे बलिप्रमुखमनिषेधादनुमोदनाविषयो भवति, स च द्रव्यस्तव एव, यदुक्तं-"ओसरणे बलिमाई णचेह जं भगवयावि पडिसिद्धं। तो एस अणुण्णाओ उचिआणं गम्मई वेणं॥१॥ ण य भगवं अणुजाणइ जोगं मोक्खविगुणं कयाइंवि। णय तयणुगुणोवि तओ बहुभेओ होइ अण्णेसिं ॥२॥ इति पञ्चाशके (२७५-२७६) (पत्र १२१३-१४) 'ओसरणे'त्ति समवसरणे-देवसंस्कृतभगवद्व्याख्यानभूमौ बल्यादि-उपहारप्रभृति, आदिशब्दाद् चमरादि (त्यगीत) मायपरिग्रहः, 'न' नैव, चशब्दो द्रव्यस्तवादन्यस्य समर्थनकारणान्तरस्य समुच्चयार्थः 'इह' आगमे लोके वा 'यत्' यस्मात्कारणाद्भगवतापि-जिनेनापि, तेन हि किल निरतिचारचारित्रितया निषेधनीय स्यादित्यपिशब्दार्थः, [न] प्रतिषिद्धं-[न] निवारितं 'ता' इति ता-तस्मात्कारणादेषः-द्रव्यस्तवो, बल्यादिविधानस्य द्रव्यस्तवत्वात्, अनुज्ञातोऽनुमत इति मन्यते-अवसीयते, 'अप्रतिषिद्धमनुमत'मितिवचनात्, उचितानां-तद्योग्यानां गृहस्थानां, राजादीनामित्यर्थः, तेन भगवता-जिनेनेति, आह च-"राया व रायमच्चो तस्सासइ पउरजणसओ वावि। दुब्बलिखंडिअ बलिछडिअतंदुलाणाढय कलमा ॥१॥ भाइअपुणाणिआणं अखंडफुडिआण फलगसरिआण। कीरइ बली सुराविअ तत्थेव छुब्भंति गंधाई ॥२॥ (आव॰नि-५८४-५) इत्यादीतिगाथार्थः ॥१७॥ अथ कथितकर्त्तव्यरूपोऽपि द्रव्यस्तवो जिनाज्ञेति दर्शयति—

णाणाइविणयविहिणो चउद्दा उवयारविणयरूवो जो। सो दव्वथयाणण्णो कायव्वो सव्वसाहूणं ॥१८॥

'ज्ञानादीनां' ज्ञानदर्शनचारित्रोपचाररूपाणां विनयविधयश्चतुर्द्धा,तत्रोपचारो–लोकव्यवहारः पूजा वा प्रयोजनमस्येत्यौपचारिको –भक्तिरूपो यः स 'द्रव्यस्तवानन्यः' द्रव्यस्तवादन्यो न भवति,द्रव्यस्तव एवेत्यर्थः,स च साधूनां कर्त्तव्यः–कर्त्तव्यतया जिनैरुपदिष्टः,यदुक्तं–"जं च चउद्धा भणिओ विणओ उवयारिओ अ जो तत्थ। सो तित्थयरे नियमा न होइ दव्वत्थया अण्णो॥१॥ एअस्स उ संपाडणहेऊ तह हंदि वंदणाएवि। पूअणमाउच्चारणमुववण्णं होइ जइणोऽवि॥२॥ इति पञ्चाशके (२८१-२८२) (पंच०१२१९-२०) एतद्वृत्तिर्यथा 'जं च च०' व्याख्या–यद्–यस्मात्कारणात्, चशब्द उपपत्त्यन्तरसमुच्चयार्थः, चतुर्द्धा–चतुर्भिः प्रकारैः ज्ञानदर्शनचारित्रोपचारलक्षणैर्भणितः–साधूनां विधेयतया वर्णितोविनयसमाध्यध्ययनादौ विनयः–कर्मविनयनसमर्थोऽनुष्ठानविशेषः, 'तत्थ'त्ति तत्र–तेषु चतुर्षु विनयेषु मध्ये उपचारो–लोकव्यवहारः पूजा वा प्रयोजनमस्येति औपचारिको–भक्तिरूपः,तुशब्दः पुनरर्थे, य इति विनयः स–इत्यसौ तीर्थकरे–अर्हद्विषये नियमाद्–अवश्यंभावेन न भवति–न वर्त्तते द्रव्यस्तवात्–पूजादेः अन्यः–अपरो, द्रव्यस्तव एवासाविति भावः,तस्माद्द्रव्यस्तवानुविद्धो भावस्तव इति प्रकृतम् ॥ औपचारिकविनयस्वरूपं चेदं–"तित्थयरसिद्धकुलगणसंघकिरिअधम्मणाणणाणीणं। आयरियथेरुवज्झायगणीणं तेरस पयाणि ॥१॥ अणसायणा य१ भत्ती२ बहुमाणो३ तहय वण्णसंजलणा४। तित्थयराई तेरस चउग्गुणा हुंति बावण्णा॥२॥ (दश० नि० ३२७-८) इति गाथार्थः॥ यदि द्रव्यस्तवादन्यो नासौ ततः किमित्याह–'एअस्स द०' व्याख्या–एतस्य तु–एतस्यैव द्रव्यस्तवरूपौपचारिकविनयस्य 'संपादनहेतुः' संपादनार्थं 'तह चेव'त्ति तथैव–तेनैव प्रकारेण कायोत्सर्गकरणलक्षणेन वन्दनायां–चैत्यवन्दनायां, तुशब्दः पूरणे, 'पूजनाद्युच्चारणं' पूजाप्रभृतिपदाभिधानम्,

आदिसम्प्रात्सत्करादिपरिग्रहः, उपपन्नं-संगतं भवति-वर्तते यतेरपि-भावस्तवयतो,न केवलं गृहिण एवेतिगाथार्थः। इति पञ्चा० वृत्तौ,नचैवं पुष्पादिभिरपि साधूनां द्रव्यस्तवस्य कर्त्तव्यताऽऽपत्तिरितिशङ्कनीयं,तथैव जिनाज्ञायाः सद्भावात्,तथाकरणे च कृत्स्न संयमस्य हानिः स्यात्,एतच्च सविस्तरं किञ्चित् पञ्चाशके 'सक्कारो' (२८४)त्ति गाथायामुक्तमस्ति ततो ज्ञेयमिति,इह तु विस्तरभयान्नोक्त,द्रव्यस्तवस्य कारितत्वं तु उपदेशद्वारा प्रतीतमेव,एवं कृतकारितानुमतलक्षणस्य द्रव्यस्तवस्य कथितेकर्मभिःसाधुकर्त्तव्यतया सिद्धेर्यदि प्रतिष्ठाऽपि भावस्तवहेतुतया द्रव्यस्तवत्वेनाभिमता तर्हि भवदुक्तयुक्त्या द्रव्यस्तवत्वात्प्रतिष्ठाऽपि तदन्तर्गता साधुकर्त्तव्यतयैव ज्ञेया, अन्यथा तीर्थसम्मताः श्रीहरिभद्रसूरिश्रीउमास्वातिवाचकप्रभृतयो महापुरुषाः निजकृतप्रतिष्ठाकल्पेषु मन्त्रन्यासादिविधि सूरिकर्त्तव्यतया कथमकथयिष्यन्?, तीर्थकृदाज्ञामन्तरेण तथा कथने तेषां तीर्थबाह्यताऽभविष्यत्,तथा च तत्कृता ग्रन्था तीर्थसम्मततया नाप्रवर्तिष्यन्, यथा पाक्षिकतिलकाचार्यकृत प्रतिष्ठाकल्पः, नच तिलकाचार्यकृतावश्यकचूर्ण्यादयो ऽपि प्रवर्तन्ते इतिवाच्यं, प्रवचनपरमार्थविकिरस्तत्कृतेस्तिरस्कृतत्वात्, तिलकाचार्यकृतेः प्रामाण्ये 'भरतः स्वयं प्रतिष्ठितवा'निति 'थूभसयभाउआणं' (आव मू भा-४५) गाथाव्याख्याने भणितं, तथानागमिकमेव, तदभ्युपगमे च श्रीहरिभद्रसूरिप्रभृतिकृतीनामप्रामाण्यापत्त्या तीर्थमपि परिहरणीयं स्यात्, तस्मात् तीर्थतिलकाचार्ययोः परस्परं विपरीतप्ररूपिणोरेकतरपरिहारस्यावश्यकत्वात् तिलकाचार्यस्यैव परिहारः श्रेयान् प्रवचनविदामितिगाथार्थः ॥१८॥ अथ 'भावचरणमुग्गविहारया मे'तिगाथायां श्रावकमार्गो द्रव्यस्तवो भावस्तवस्तु साधुमार्ग इति कथं निपतनाद्यमित्याशङ्कापरिहाराय गाथामाह—

अणणुचण भाविकम्मा दोवि पया सावयाण बहुवयो। बहुभावो साहूणं ववहारो बहुपया णेओ ॥१९॥

द्वावपि स्तवौ–द्रव्यस्तवभावस्तवावन्योऽन्यं–परस्परं सापेक्षौ, भावस्तवो द्रव्यस्तवं विहाय न केवलः क्वापि तिष्ठति, न वा द्रव्यस्तवः केवलो भावस्तवं विहाय क्वापि तिष्ठति, किंतु सामानाधिकरण्येन द्वावपि तिष्ठतः, तथा च साधुश्रावकयोः साम्यं मा भवत्वित्याह–श्रावकाणां बहुद्रव्य इति–भूयान् द्रव्यस्तवोऽर्थात् स्वल्पो भावस्तवः,साधूनां बहुभावो–भूयान् भावस्तवोऽर्थादल्पो द्रव्यस्तवः, व्यवहारो बहुस्तवाद्—व्यवहारप्रवृत्तिः पुनर्यो यत्र भूयान् तदनुसारेणैव बोध्या, तेन श्रावकधर्मो द्रव्यस्तवात्मको भावस्तवात्मको यतिमार्ग इति **नोपदेशमालावचनविरोध** इति गाथार्थः ॥१९॥ अथ बहुधर्मानुसारेण व्यवहारे दृष्टान्तमाह—

**जह सावयाण धम्मो सवो आरंभकलुसिओवि तहिं । सामइअं भावथओ इअरो दव्वुत्ति ववहारो ॥२०॥**

यथा श्रावकाणां धर्मः सर्वोऽप्यारम्भकलुषितः–आरम्भाध्यवसायमलिनस्तत्रापि सामायिकं भावस्तव इतरो–जिनभवनजिनबिम्बादिनिर्मापणादिकुसुमादिपूजापर्यन्तो धर्मः 'दव्व'त्ति पदैकदेशे पदसमुदायोपचारात् द्रव्यस्तव इति व्यवहारो बहुत्वमधिकृत्यैव, अयं भावः–यथा कुसुमादिपूजाध्यवसायो ह्यारम्भाध्यवसायकलुषितः तथा सामायिकाध्यवसायोऽपि धनधान्यपुत्रकलत्रादिममत्वभावयुक्तस्य अप्रत्याख्यातानुमत्यारम्भस्य सामायिकेऽप्युद्दिष्टभोजिनः श्रावकस्यारम्भाध्यवसायकलुषित एव, यदागमः–"कामी सघरंगणओ थूलपइण्णा सि होइ दट्ठवा। छेअणभेअकरणा उद्दिट्ठकडंपि से भुंजे ॥१॥" इति श्रीनिशीथभाष्यम्,एतच्चूर्णिरेवं–पंच विसया कामेइत्ति कामी, गृहश्चाङ्गना च गृहाङ्गने सह गृहाङ्गनाभ्यां यः स सगृहाङ्गनकः, थूलपइण्णा–देसविरइत्ति वुत्तं भवति, साहूणं सव्वविरई, वृक्षादिच्छेदने पृथिव्यादिभेदने प्रवृत्तः, सामायिकभावादन्यत्र, जं च उद्दिट्ठकडं तं कडसामइओवि भुंजइ, एवं स सर्वविरतो न भवति इति श्रीनिशीथचूर्णौ उ० १५ पत्रे, (।१–१५–२७५, २९१) एवं सर्वत्रापि साम्ये सत्यपि सामायिकं

न पुनरौपाधिकः, अल्पोऽपि भावस्तवः पुनः कीदृशः ?–'स्वरूपबहुकान्तः' स्वरूपेण–वस्तुस्वभावेन बहुकान्तः–अतिशयेन मनो-
हरः,द्रव्यस्तवापेक्षयाऽतिसुन्दर इत्यर्थः,अथ द्रव्यस्तवभावस्तवयोरल्पानल्पत्वज्ञापनाय दृष्टान्तमाह–'रययामए'त्यादि,रजतं-रूप्यं
तन्मयः–तन्निष्पन्नो यो गजो–हस्ती तस्य काञ्चननयनं–सुवर्णमयलोचनं तद्वत्, रूप्यमयहस्तिनो हेममयलोचनकल्पो भावस्तवः
श्रावकाणामित्यर्थः, अयं भावः–देशविरतिलक्षणो धर्मस्तावद्रजतुल्यः, स च द्रव्यस्तवभावस्तवाभ्यां विभज्यमानो रजतशरीरतुल्यो
द्रव्यस्तवः, भावस्तवः पुनः काञ्चनलोचनसदृशः, काञ्चनलोचनमपि न सर्वात्मना, किंतु काञ्चनरसरसितत्वेन काञ्चनलोचनमि-
वावभासमानं ग्राह्यम्, अन्यथा साधुश्रावकधर्मयोरल्पतरमेवान्तरं स्याद्, विद्यते च महद्, एवं च सति यद्यपि स्वभावतः
सुवर्णमतिसुन्दर भवति तथाप्युक्तदृष्टान्तरीत्या नयनप्रमाणं सुवर्णं गजशरीरतुल्यस्य रजतपुञ्जस्य मूल्यं न लभते, तस्मात्स्व-
भावत उत्तमत्वेऽपि मूल्यमाश्रित्यानुत्तमत्वमेव, स्वल्पत्वाद्, एवं श्रावकधर्मे बहुवित्तव्ययायाससाध्यप्रासादप्रतिमाप्रतिष्ठायात्रा-
साधर्म्मिकवात्सल्यादिलक्षणो द्रव्यस्तवो भूयस्त्वात् प्रवचनोत्सर्पणादिहेतुत्वादन्येषां चाभिन्नग्रन्थिकानामनुमोदनादिना ग्रन्थिभेद-
हेतुत्वाद्भिन्नग्रन्थिनां चोत्साहप्रवर्द्धनेन बोधेर्नैर्मल्यहेतुत्वात्पूज्यपूजाप्रवृत्तिहेतुत्वाद्धर्मानभिमुखीभूतानामपि धर्माभिमुखीकरणहेतुत्वा-
दित्याद्यनेकहेतुभिर्यथा सुगतिसाधको भवति न तथा सामायिकादि, यतः सामायिकेऽपि साध्वनुकृतिमात्रेणैव भावस्तवत्वात् स्वभा-
वत उत्तमत्वेऽप्यल्पत्वादल्पप्रयाससाध्यत्वादल्पर्द्धिकप्रभृतिभिरपि कर्त्तुं शक्यत्वाच्च, नचैवं सामायिकादिकरणे निरुत्साहता भवि-
ष्यतीतिशङ्कनीयं, यतो महति प्रासादादिद्रव्यस्तवे सामर्थ्याभावाद्यदि सामायिकादिकमपि न करोति तर्हि तेनापि वञ्चितः सन्नुभ-
यभ्रष्टो भवति, किंच–यदि सामायिकादावुत्साहप्रवृद्ध्यर्थं प्रासादाद्यपेक्षया सामायिकादौ भूयान् लाभ उपदिश्यते तर्हि प्रासादादि-

क तु मूल्य एवोच्छिन्नसकृय भवतु, आस्तामन्यत्, साधुदानादिकमपि विलीयेत, वस्त्रादिदानाद्यपेक्षया सामायिकमेकं सुखसाध्यं महाफलं चेति विमृश्य को मूढात्मा दानादौ प्रवर्त्तेत ?, न च साधुदानाद्यपेक्षया सामायिक बहुफलं न भविष्यतीति शङ्कापि विधेया, यतो देवा अपि तीर्थकरसाधुदानादिरञ्जिता 'अहो दानमहो दान'मित्यादिहर्षप्रादुर्भूतवचोभिर्दातारमभिष्टुवन्त' कोटिश' कनकवृष्टि प्रभृतानि पञ्च दिव्यानि कृतवन्त', न तथा क्वापि कदाचिदप्येकस्यापि सौवर्णिकस्य मोचनं सामायिकादौ कृतवन्त इति स्वयमेव पर्यालोच्यं, किंच–प्रासादप्रतिमादयो हि साध्वादीनां मोक्षाध्वगानामध्वनि धर्मप्रपा ,तासां च व्युच्छेदे कोटिशो जनानां धर्मपिपासितानामनुपकारितया महापातकमिति तदनुत्साहोऽपि न कर्त्तव्यः, तस्मात् यथाशक्ति यथोचितं यथावसरं च परस्पराबाधया सर्वमपि धर्मानुष्ठानमनुष्ठेयं, नच सामायिकाद्यपेक्षया प्रवचनप्रभावना गरीयसी न भविष्यतीति शङ्कनीयं, प्रवचनप्रभावनाहेतवे सामायिककरणाभावस्याप्यनुज्ञातत्वात् , यदागम –"सो सड्ढो दुविहो–इड्ढिपत्तो अणिड्ढिपत्तो अ, जो सो अणिड्ढिपत्तो सो चेइघरे साहुसमीवे घरे पोसहसालाए वा जत्थ वा वीसमइ अच्छति वा निव्वावारो सव्वत्थ करेइ सव्वं, चउसु ठाणेसु नियमा कायव्वं, चेइअ–चेइयघरे साहुमूले पोसहसालाए वा घरे वा,आवस्सयं करेंतो'त्ति इत्यादि यावत् 'साहुसक्खिअं सामाइअं करेति–करेमि भंते ! सामाइअं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव साहू पज्जुवासामित्तिकाऊण, जइ चेइआइ अत्थि तो पढमं वंदति,साहूणं सगासाओ रयहरणं निसिज्जं वा मग्गति,अह घरे तो से उग्गहिअं रयहरणं अत्थि, तस्स असति पोत्तस्स अन्तेण,पच्छा इरिआवहिआए पडिक्कमइ, पच्छा आलोइत्ता वंदति आयरिआदी जहारायणिआएत्ति,पुणोऽवि गुरुं वंदित्ता पडिलेहित्ता निविट्ठो पुच्छति पढइ वा, एवं चेइएसुवि, जया साहुपेइआणं पोसहसालाए सगिहे वा,एवं सामाइअं आवस्सयं वा करेति,तत्थ नवरि गमणं नत्थि, जया का-

वनिअमेणं समाणेमि। जो सो इड्ढिपत्तो सो किर एंतो सव्विड्ढीए एति तो जणस्स अच्चायरो होति, आढिआ य साहुणो सप्पु-
रिसपरिग्गहेण, जइ सो कयसामाइओ एति ताहे आसहत्थिमादिजणेण य अहिगरणं पवट्टति, ताहे ण करेति''न्ति श्रीआवश्यक-
चूर्णौ, अत्र महार्द्धिकस्य राज्ञः सर्वर्द्ध्याऽऽगमने जनास्था साधुजनादरश्च सामायिकापेक्षया बहुलाभहेतुः, तेनैव तदकरणानुज्ञा
'न करेइ'त्तिपदेन बोध्येतिगाथार्थः ॥२२॥ अथ 'कञ्चणमणिसोवाण' मित्याद्युपदेशमालावचनात् प्रासादाद्यपेक्षया तपःसंयमो
महान् भणितः, स च सामायिकादिरूप एवेति पराशङ्कामपाकरोति—

जं पुण कंचणमणिसोवाणंति अ वयणमागमे भणिअं। तत्थऽहिओ मुणिधम्मो तवसंजम न उण इअरोऽवि ॥२३॥

यत्पुनः 'कंचणमणिसोवाण' मित्यादि चागमे भणितं अत्राधिको—विशिष्टतरो मुनिधर्मः—सर्वविरतिरूपस्तपःसंयमो, न पुनरित-
रोऽपि—देशविरतिसंबन्ध्यपीतिशब्दार्थः, भावार्थस्त्वयं—कंचणमणिसोवाणं थंभसहस्सूसिअं सुवण्णतलं। जो कारिज्ज जिणहरं तओऽवि
तवसंजमो अहिओ ॥१॥ (४९४) इतिगाथां शरणीकृत्य प्रासादप्रतिमाप्रतिष्ठापूजाद्यपेक्षया निरारम्भसामायिकादिधर्मानुष्ठानं
महाफलमिति कस्यचिदपरमार्थज्ञस्य संकल्पः संपद्यते अतस्तन्निराकर्तुं प्रथमतोऽस्या एव व्याख्यानमाह—''ननु द्रव्यार्चनभावार्च-
नयोः किमभ्यधिकतरमिति, अत्रोच्यते—'कंचण०' व्याख्या—काञ्चनं सुवर्णं मणयः—चन्द्रकान्ताद्यास्तत्प्रधानानि सोपानानि यस्मिन्
तत्तथा, स्तम्भशतसहस्रोच्छ्रितमनेन विस्तीर्णतामुद्भावयति, सुवर्णप्रधानं तलं यस्य तत्तथा, सर्वसौवर्णिकमित्यर्थः, यः कारयेत्—नि-
र्मापयेत् जिनगृहं—भगवद्भवनं 'ततोऽपि' तथाविधजिनगृहकारापणादपि, आस्तामन्यस्मात्, किं?, तपःसंयमोऽधिकः—समर्गलतरः,
त एव मोक्षावाप्तेरिति, यत एवं तस्मात्सति सामर्थ्ये भावार्चने यतितव्यं, केवलमङ्गीकृते तस्मिन् प्रमादो न विधेयः, अन्यथा

'कंचणमणिसोवाण' मित्यादिगाथास्थाने 'आजम्मनिरतिचारं पोसहधम्मं गुरुण पयमूले। जो कुणइ सुद्धभावो तओवि तवसंजमो
अहिउ ॥१॥ त्ति गाथामकथयिष्यन्, तच्च नोक्तं, कुत इतिपर्यालोचनया व्यवहारतः श्रावकधर्मे प्रासादप्रतिमादिकं तथा
तथाविधपूजादिकृत्यं च प्रवचनगौरवहेतुर्महाफलं, न तथा सामायिकादि, अत एव श्रीवज्रस्वाम्यपि कुसुमादिद्रव्यपूजानिमित्तं
विद्याप्रयोगेण श्रीदेवताप्रभृतिसमीपे गत्वा कुसुमान्यानीय श्रावकेभ्यो दत्तवान्, साधवोऽपि कायोत्सर्गे " पूअणवत्तिआए " त्ति
पाठोच्चारेण पूजाप्रत्ययिकफलमभिलषितवन्तो,न पुनः 'पोसहवत्तिआए'त्ति वचसा पौषधादिप्रत्ययकं फलं, किंच—साधुकायोत्स-
र्गप्रत्ययिकफलापेक्षया कुसुमादिनाऽर्हत्पूजाप्रत्ययकं फलं महत्संभाव्यते, अन्यथा साधोरपि "पूअणवत्तिआए" इत्यादिवाक्पद्धत्या
तथाप्रार्थनाया असंभवात्, नचैवं सारम्भोऽपि धर्मो निरारम्भधर्मापेक्षया शोभनः संपद्येत, तच्च न युक्तमिति शङ्कनीयं, प्रागुक्त-
गजदृष्टान्तेन कथञ्चिच्छोभनतया अपीष्टत्वादित्यलं विस्तरेणेति गाथार्थः ॥२३॥ अथ प्रासादापेक्षयाऽधिको यस्तपःसंयमो भणितः
स च साधुसंबन्ध्येवेत्यत्र युक्तिमाह—

जं तेण संजमेणं मुत्तिसुहसंपयावि इअरेणं। अच्चुअकप्पो भणिओ महानिसीहंमि फुडमेअं ॥२४॥

यद्—यस्मात्कारणात्तेन—संयमेन मुक्तिसुखसंपदपि भणिता श्रीमहानिशीथे 'कंचणमणिसोवाण'मित्यादिगाथायां, "तओवि त-
वसंजमो अणंतगुणो"त्ति भणितं, तेन तपःसंयमेन "तवसंजमेण बहुभव" इत्यादिगाथायां मुक्तिसुखप्राप्तिर्भणिता इत्यनन्तरगाथा-
व्याख्यायां प्रदर्शितं, तच्च साधुतपःसंयममन्तरेणासंभवि, इतरेण—तद्व्यतिरिक्तेन प्रासादादिधर्मकृत्येनाच्युतदेवलोकं यावद्गतिरु-
क्ता, एतच्च श्रीमहानिशीथे स्फुटमित्यत्र विचारणया येन तपःसंयमेनाच्युतादूर्ध्वं गतिर्भवति स एव ग्राह्य इतिगाथार्थः ॥२४॥

अथ भावकधर्मे भावस्तवापेक्षया द्रव्यस्तवस्य प्राधान्यमपीति दर्शयति—

ज सावयदव्वथओ बहुमुल्लो अप्पमुल्ल भावथओ। रूवमणुण्णोऽवि तओ गेणत्त भणइ वीरजिणो ॥२५॥

यद्—यस्मात् श्रावकद्रव्यस्तवो बहुमूल्यः,अल्पमूल्यो भावस्तवः,स च भावस्तवो रूपेण मनोज्ञोऽपि द्रव्यस्तवमूल्यापेक्षयाऽल्पमूल्यः ततोऽनेकान्तं भणति वीरजिन इत्यक्षरार्थः, श्रावकधर्मे द्रव्यस्तवो रूप्यस्वरूपोऽपि गजशरीरतुल्यो, महापुण्यप्रकृतिजनकत्वेन स्वर्णरसरसितलोचनकल्पभावस्तवापेक्षया महानित्यर्थः, (भावस्तवस्तु) रूपमनोज्ञोऽपि स्वर्णतुल्योऽपि मूल्येनाल्पो, न हि लोचनप्रमाण स्वर्णं गजकल्पन रजतपुञ्जेन सह सममूल्यं भवति,तेन मूल्यमपेक्ष्य स्वर्णापेक्षयाऽपि रजतमुत्तम स्वर्णं चानुत्तम,स्वर्णं च धात्वपेक्षयोत्तमत्वेऽपि मूल्यापेक्षयाऽनुत्तममिति, अत एवैकमपि वस्तु 'कथञ्चिदुत्तम कथञ्चिच्चानुत्तममपीति नैकान्त भगवान् श्रीमहावीरो भणति-ब्रूते इति गाथार्थ' ॥२५॥ अथोक्तयुक्त्या किं संपन्नमित्याह—

तेण सह सामत्थे चेइअपमुह महत्तकज्जपि। चइऊण य सामइअं जुत्त भंसिति संतसिक्खा ॥२५॥

यन कारणेन प्रासादादिविधानादिद्रव्यस्तवापेक्षया सर्वविरतिरूपभावस्तवोऽनन्तगुणो भणितः तेन कारणेन सति सामर्थ्ये प्रासादिनिष्पादनसामग्र्यां सत्यां चैत्यप्रमुख महदपि कार्य त्यक्त्वा सामायिकमेव युक्तं भावस्तवत्वादिति कस्यचिद्भ्रान्ति' साऽपि 'सं त्रासिता' सम्यक् प्रकारेण त्रासं नीता, विध्वस्तेत्यर्थः,प्रत्याख्यानेऽपि 'महत्तरागारेण'मित्याकारस्य चैत्यादिप्रयोजननिमित्तमेवोक्तत्वात्, न पुन' सामायिकादिकार्यनिमित्तमपि, किञ्च-प्रतिष्ठादिनिमित्त यथा सूरिप्रभृतयो महापुरुषा अपि देशान्तरतोऽप्यायान्त-आयान्ति च न तथा सामायिकादिनिमित्तमपि, तथा प्रायश्चित्तग्रन्थेऽपि प्रमादत' प्रतिमादिविनाशे यथा प्रायश्चित्तविशेषो

जिनाज्ञामाह–प्रतिष्ठितानां प्रतिमानां पूजनमितिबुद्ध्या–अहं जिनेन्द्रं पूजयामीतिधिया पूजा भवति, न पुनरप्रतिष्ठितानां प्रतिमानामपि,
प्रतिष्ठाया वैयर्थ्यापत्तेः तादृशी च पूजा वीरेण–श्रीवीरजिनेन्द्रेण लिङ्गिनां–साधुलिङ्गधारिणां निषिद्धा, कुत्र ?–श्रीमहानिशीथे,
तथाहि–"से भयवं ! जे णं केइ साहू वा साहुणी वा निग्गंथे अणगारे दव्वत्थयं कुज्जा से णं किमालविज्जा ?, गोअमा ! जे णं केइ
साहू वा जाव दव्वत्थयं कुज्जा से णं अजएइ वा असंजएइ वा देवभोएइ वा देवच्चगेइ वा जाव णं उम्मग्गपइट्ठिएइ वा दूरुज्झिअ-
सीलेइ वा कुसीलेइ वा सच्छंदायरिएइ वा आलविज्जा" (सू. ३८) इतिश्रीमहानिशीथे पञ्चमाध्ययने, ननु पूर्वमौपचारिकविनयरूपो
द्रव्यस्तवः साधूनामप्युक्तः, इदानीं च श्रीमहानिशीथोक्तसम्मत्या सर्वथा द्रव्यस्तवो निषिद्धः, तथा च कथमन्योऽन्यं संगतिरिति
चेत् सत्यं, श्रीमहानिशीथोक्तोत्सर्गवचनस्यापवादिकविशेषवचनादन्यविषयकत्वान्न दोषः, तेन स्नानादिपूर्वकपुष्पादिभिः पूजा-
भिप्रायेण द्रव्यस्तवस्य साधूनां निषिद्धत्वमिति बोध्यमितिगाथार्थः ॥३१॥ अथ चन्द्रप्रभाचार्योक्तमुपसंहरन्नाह—

**इय चंदप्पहभणिओ दव्वत्थयहेउ दूसिओ किंची । अह तस्स पक्खवाईतिलगविगप्पंपि दूसेमि ॥३२॥**

इति–प्रागुक्तप्रकारेण चन्द्रप्रभाचार्यभणितो द्रव्यस्तवहेतुर्दूषितः, अथ तस्य–चन्द्रप्रभाचार्यस्य पक्षपातितिलकाचार्यविकल्पमपि
दूषयाम इति गाथार्थः, भावार्थस्तु जिनप्रतिमाप्रतिष्ठा न साधुकृत्यं, द्रव्यस्तवत्वादित्यादिरचनादिरूपेण प्राग् प्रदर्शित इतिगाथार्थः
॥३२॥ अथ तिलकाचार्यविकल्पमाह—

**तिलगो कुवक्खतिलगो सावज्जत्तेण सड्ढकिच्चमिणं । इअ साहंतो साहइ अप्पस्सव मूढचक्कित्तं ॥३३॥**

तिलकः–तिलकाचार्यः किंलक्षणः ?–'कुपक्षतिलकः' कुपाक्षिकाणां–स्तनिकागमिकादीनां तिलक इव, तत्पक्षपातित्वेन तल्ललाटे

जिनाज्ञामाह—प्रतिष्ठितानां प्रतिमानां पूजनमितिबुद्ध्या—अहं जिनेन्द्रं पूजयामीतिधिया पूजा भवति, न पुनरप्रतिष्ठितानां प्रतिमानामपि,
प्रतिष्ठाया वैयर्थ्यापत्तेः तादृशी च पूजा वीरेण—श्रीवीरजिनेन्द्रेण लिङ्गिनां—साधुलिङ्गधारिणां निषिद्धा, कुत्र ?—श्रीमहानिशीथे,
तथाहि—"से भयवं! जे णं केइ साहू वा साहुणी वा निग्गंथे अणगारे दव्वत्थयं कुज्जा से णं किमालविज्जा ?, गोअमा ! जे णं केइ
साहू वा जाव दव्वत्थयं कुज्जा से णं अजएइ वा असंजएइ वा देवभोएइ वा देवच्चगेइ वा जाव णं उम्मग्गपइट्ठिएइ वा दूरुज्झिअ-
सीलेइ वा कुसीलेइ वा सच्छंदायरिएइ वा आलविज्जा" (सू. ३८) इतिश्रीमहानिशीथे पञ्चमाध्ययने, ननु पूर्वमौपचारिकविनयरूपो
द्रव्यस्तवः साधूनामप्युक्तः, इदानीं च श्रीमहानिशीथोक्तसम्मत्या सर्वथा द्रव्यस्तवो निषिद्धः, तथा च कथमन्योऽन्यं संगतिरिति
चेत् सत्यं, श्रीमहानिशीथोक्तोत्सर्गवचनस्यापवादिकविशेषवचनादन्यविषयकत्वान्न दोषः, तेन स्नानादिपूर्वकपुष्पादिभिः पूजा-
भिप्रायेण द्रव्यस्तवस्य साधूनां निषिद्धत्वमिति बोध्यमितिगाथार्थः ॥३१॥ अथ चन्द्रप्रभाचार्योक्तमुपसंहरन्नाह—

**इय चंदप्पहभणिओ दव्वत्थयहेउ दूसिओ किंची। अह तस्स पक्खवाईतिलगविगप्पंपि दूसेमि ॥३२॥**

इति—प्रागुक्तप्रकारेण चन्द्रप्रभाचार्यभणितो द्रव्यस्तवहेतुर्दूषितः, अथ तस्य—चन्द्रप्रभाचार्यस्य पक्षपातितिलकाचार्यविकल्पमपि
दूषयाम इति गाथार्थः, भावार्थस्तु जिनप्रतिमाप्रतिष्ठा न साधुकृत्यं, द्रव्यस्तवत्वादित्यादिरचनादिरूपेण प्राग् प्रदर्शित इतिगाथार्थः
॥३२॥ अथ तिलकाचार्यविकल्पमाह—

**तिलगो कुवक्खतिलगो सावज्जत्तेण सड्ढकिच्चमिणं। इअ साहंतो साहइ अप्पस्सव मूढचक्कित्तं ॥३३॥**

तिलकः—तिलकाचार्यः किंलक्षणः?—'कुपक्षतिलकः' कुपाक्षिकाणां—स्तनिकागमिकादीनां तिलक इव, तत्पक्षपातित्वेन तल्ललाटे

यद्यपि किञ्चिदारम्भो द्रव्यतो दृश्यते तथाऽपि शुभाध्यवसायान्महती निर्जरा महांश्च पुण्यप्रकृतिबन्धो भवति, यस्तु द्रव्यतः कि-
ञ्चिदारम्भजन्योऽल्पीयानशुभबन्धः स चाल्पतरत्वाद्व्यक्त्या तज्जन्यफलानुदयात् तत्कर्मवर्गणानामतिरूक्षत्वेन तत्क्षणादेव विलयाच्च
न विवक्ष्यते, अत एव किञ्चित्सारम्भोऽपि जिनपूजालक्षणो द्रव्यस्तवो जिनैः श्रावकाणामनुज्ञातः, यदागमः—"अकसिणपवत्त-
गाणं विरयाविरयाण एस खलु जुत्तो। संसारपयणुकरणे दव्वथए कूवदिट्ठंतो॥१॥"त्ति श्रीआव० नि० (आ० भा० १९६) ननु तर्हि
द्रव्यस्तवे कूपदृष्टान्तो न युक्तः,तत्र कूपखननानन्तरमेव जलनिर्गमे मलापगमः,अत्र पूजां कुर्वत एवारम्भसंभवमालिन्यापगम इति
चेत्,मैवं,कूपखननजनितं मालिन्यं कूपजलेनैवापनीयते इत्येवंरूपेण देशत एव दृष्टान्तात्,नहि दृष्टान्तदार्ष्टान्तिकयोः सर्वधर्मसाधर्म्यं
केनापि दृष्टं श्रुतं वा,तथा जगद्व्यवहाराभावाद्, अन्यथा द्वयोरेकत्वापत्त्या उपमानोपमेययोरेव हान्यापत्तेः,तस्माच्छ्रावकधर्मः सा-
वद्य इति निष्ठुरवचनं न वक्तव्यं, किंतु सारम्भः श्रावकधर्म इति वक्तव्यं,निरारम्भश्च श्रमणधर्म इति, अत एवागमे "दुविहे धम्मे
पण्णत्ते, तं०—अगारधम्मे अणगारधम्मे"त्ति,न पुनः 'सावज्जधम्मे निरवज्जधम्मे'त्ति पाठः,यत्तु क्वचिद्द्रव्यस्तवे सावद्यत्वव्यपदेशः स
द्रव्यतः किञ्चिदारम्भजन्यरूक्षाल्परजःस्पर्शलक्षणमालिन्यनिर्देशपरो, न तु नरकादिगतिभोग्यपातकनिर्देशपरोऽपि, ननु त्रिविधत्रि-
विधप्रत्याख्यानवतां साधूनां सारम्भो द्रव्यस्तवः कथमनुमोदनीयः?,तद्गतारम्भस्याप्यनुमोदनापत्तेरितिचेत्, मैवं, सामायिकादि-
श्रावकधर्ममात्रस्याप्यननुमोदनीयत्वापत्तेः, कृतसामायिकादीनामप्युद्दिष्टभोजित्वेनारम्भकलुषितत्वात्, तस्मात्साधूनां तद्गतारम्भो
नानुमोदनाविषयः, किंतु तज्जन्यः श्रावकधर्म एवेतिगाथार्थः ॥३५॥ अथ कुसुमादिपूजायाः वस्तुगत्या सावद्यत्वाभावेन साधुक-
र्तव्यतया कथं नानुज्ञेति पराशङ्कामुद्भाव्य तिरस्कुर्वन्नाह—

यद्यपि किञ्चिदारंभो द्रव्यतो दृश्यते तथाऽपि शुभाध्यवसायान्महती निर्जरा महांश्च पुण्यप्रकृतिबन्धो भवति, यस्तु द्रव्यतः किञ्चिदारम्भजन्योऽल्पीयानशुभबन्धः स चाल्पतरत्वाद्व्यक्त्या तज्जन्यफलानुदयात् तत्कर्मवर्गणानामतिरूक्षत्वेन तत्क्षणादेव विलयाच्च न विवक्ष्यते, अत एव किञ्चित्सारम्भोऽपि जिनपूजालक्षणो द्रव्यस्तवो जिनैः श्रावकाणामनुज्ञातः, यदागमः—"अकसिणपवत्तगाणं विरयाविरयाण एस खलु जुत्तो। संसारपयणुकरणे दव्वथए कूवदिट्ठंतो॥१॥"त्ति श्रीआव० नि० (आ० भा० १९६) ननु तर्हि द्रव्यस्तवे कूपदृष्टान्तो न युक्तः,तत्र कूपखननानन्तरमेव जलनिर्गमे मलापगमः,अत्र पूजां कुर्वत एवारम्भसंभवमालिन्यापगम इति चेत्, मैवं,कूपखननजनितं मालिन्यं कूपजलेनैवापनीयते इत्येवंरूपेण देशत एव दृष्टान्तात्,नहि दृष्टान्तदार्ष्टान्तिकयोः सर्वधर्मसाधर्म्यं केनापि दृष्टं श्रुतं वा,तथा जगद्व्यवहाराभावाद्, अन्यथा द्वयोरेकत्वापत्त्या उपमानोपमेययोरेव हान्यापत्तेः,तस्माच्छ्रावकधर्मः सावद्य इति निष्ठुरवचनं न वक्तव्यं, किंतु सारम्भः श्रावकधर्म इति वक्तव्यं,निरारम्भश्च श्रवणधर्म इति, अत एवागमे "दुविहे धम्मे पण्णत्ते, तं०–अगारधम्मे अणगारधम्मे"त्ति,न पुनः 'सावज्जधम्मे निरवज्जधम्मे'त्ति पाठः,यत्तु कचिद्द्रव्यस्तवे सावद्यत्वव्यपदेशः स द्रव्यतः किञ्चिदारम्भजन्यरूक्षाल्परजःस्पर्शलक्षणमालिन्यनिर्देशपरो, न तु नरकादिगतिभोग्यघातकनिर्देशपरोऽपि, ननु त्रिविधत्रिविधप्रत्याख्यानवतां साधूनां सारम्भो द्रव्यस्तवः कथमनुमोदनीयः?,तद्गतारम्भस्याप्यनुमोदनापत्तेरितिचेत्, मैवं, सामायिकादिश्रावकधर्ममात्रस्याप्यननुमोदनीयत्वापत्तेः, कृतसामायिकादीनामप्युद्दिष्टभोजित्वेनारम्भकलुषितत्वात्, तस्मात्साधूनां तद्गतारम्भो नानुमोदनाविषयः, किंतु तज्जन्यः श्रावकधर्म एवेतिगाथार्थः ॥३५॥ अथ कुसुमादिपूजायाः वस्तुगत्या सावद्यत्वाभावेन साधुकर्तव्यतयां कथं नानुज्ञेति पराशङ्कामुद्भाव्य तिरस्कुर्वन्नाह—

पूआ सावज्जंति अ वयण जइ होइ निट्ठुर वयण । ता साहूणवि वुत्ता सयपि पयपि दुव्वयण ॥२६॥

पूजा—कुसुमादिना जिनार्चनं सावद्येति यदि निष्ठुरवचनं भवेद् 'ता' तर्हि साधूनां स्वयमपि पुष्पैः कर्तुमिति गम्यमिति परासङ्गवचनं, एतदपि दुर्वचनम्—अवक्तव्यार्हमितिगाथार्थः ॥२६॥ अथ कथं परोक्तं वचनं दुर्वचनमिति दर्शयन्नाह—

नेय ज निरवज्ज तं समणेहिं सयंपि करणिज्ज । पारसवपसामाइअमुचारो ज न साहूण ॥२७॥

यदभिरवद्य तत्साधुभिः स्वयमपि करणीयमित्येव नियमो नास्ति, हेतुमाह—'ज'ति यद्—यस्मात्तत्रां सारम्भो, निरारम्भत्वयोपवर्णितोऽपि श्रावकव्रतसामायिकपौषधभावप्रतिमाचारः साधूनां नास्तीति व्यभिचार इतिगाथार्थः ॥२७॥ अथ महामतिनामशुभताचारो न युक्त इतिकृत्वा प्रकारान्तरमाह—

अहवा अण्णुण्णपिअ वेआवच्चपि किं न जिणकप्पे। तम्हा जिणिंदआणा पमाणमिह केवलं तत्त ॥२८॥

अथवा 'जिनकल्पे' जिनकल्पमार्गे 'अन्योऽन्यमपि' जिनकल्पिकानां परस्परमपि 'वैयावृत्त्यम्' अशनादिदानसंवाहनादिरूपं 'किं ने' ति केन हेतुना जिनैर्निषिद्धं ?, तत्र सावद्यसंभावनाया अप्यसंभवात्, तस्मात्कारणादिहेति—जिनकल्पेऽन्यत्र वा 'जिनाज्ञा' पञ्चाङ्गरोऽप्याहार्यो जिनाज्ञैव प्रमाणं केवल, नान्यस्त्वमतिविकल्पनादि किंचिदपि सुंदरमपीत्यक्षरार्थः, भावार्थस्त्वयम्—शोभनमप्युत्थानमुपदिष्टमपि पुरुषविशेषं प्रतीत्य प्रतिषिद्धं दृश्यते, तथैवं—"पचहिं ठाणेहिं समणे निग्गंथे महानिज्जरे महापज्जवसाणे भवति, तं०—अगिलाए आयरियवेआवच्च करमाणे" (१०–३९७) इत्यादि सामान्योक्तमपि पुरुषविशेषं प्रतीत्य निषिद्ध, यथा जिनकल्पिकानां परस्परं वैयावृत्त्यादि, यदागमः—"चत्तारि पुरिसजाया पं०, तं०—करोति नाममेगे वेयावच्चं नो पडिच्छति इत्यादि" (१०–३२०)

इति स्थानाङ्गे चतुर्थस्थानके तृतीयोद्देशके, अत्र चतुर्थे भङ्गे जिनकल्पिकः, स च वैयावृत्त्यं न करोति न वा प्रतीच्छतीति, तथा द्वितीयभंगे स्थविरकल्पिका अप्याचार्यग्लानादयो, वैयावृत्यं प्रतीच्छन्ति न कुर्वन्तीति, अत एवावश्यकनिर्युक्तावपि, व्याख्येयव्याख्यानयोरभेदात् निर्युक्तिशब्देन तद्वृत्तिर्ग्राह्या, अस्ति च तत्रेच्छाकारसामाचारीवर्णने इयं गाथा "एएहिं कारणेहिं तुंबीभूओ अ होइ आयरिओ। वेयावच्चं न करे कायव्वं तस्स सेसेहिं ॥१॥ति, एवमभ्युत्थानवन्दनसत्कारसन्मानपृच्छाप्रतिपृच्छाव्याकरणादिष्वपि योज्यं, तस्माज्जिनाज्ञैव केवलं प्रमाणं, नान्यत्किमपि, परस्परं वैयावृत्त्यादेरपि सावद्यत्वापत्तेरितिगाथार्थः ॥३८॥ अथ पूजायाः सावद्यत्वस्वीकारेऽतिप्रसङ्गरूपदोषमाह—

**अण्णह सा साहूणं पूआ अणुमोअणोवएसेहिं। णो जुत्ता जं तेसिं सावज्जं सव्वहा हेयं ॥३९॥**

अन्यथा पूजायाः सावद्यत्वस्वीकारे श्रावकैः पुष्पादिना विहिता सा पूजा साधूनामुपदेशानुमोदनाविषयो न स्याद्, यतः कारणात्तेषां—साधूनां सावद्यं—सपापमनुष्ठानं सर्वथा—सर्वप्रकारेण "सव्वं सावज्जं जोगं पच्चक्खामि" इत्यादिवचोभिः मनोवाक्कायकृतकारितानुमतिभिर्हेयं—त्याज्यं वर्त्तते, नहि साधवः सावद्यमुपदिशन्ति, न वाऽनुमोदन्ते, अब्रह्मसेवादेरप्युपदेशादिविषयत्वापत्तेः, न चायं दोषः सारम्भपक्षेऽपि भविष्यतीतिशङ्कनीयम्, आरम्भस्यानन्यगत्या पूजाकारणत्वाद् अवद्यस्य च तथा स्वभावाभावात्, तस्मात् सत्यप्यारम्भे तज्जन्यफलाभावात् पूजाया निरवद्यतैव, साधोः स्वयं कर्त्तव्यतानिषेधे तु युक्तिरुक्ता, वक्ष्यतेऽनन्तरमितिगाथार्थः ॥३९॥ अथोपसंहरन्नेव साधुकर्त्तव्यतानिषेधे युक्तिमाह—

**तम्हा महव्वएसुं संकंतोऽणुव्वयाइगिहिधम्मो। जइ संकंता पंचममहव्वए किं न ता पूआ? ॥४०॥**

तस्माद् यदि यथेत्यध्याहार्यं यथा महाव्रतेषु अणुव्रतादिगृहिधर्मः संक्रान्तस्ता–तर्हि तथेत्यध्याहार्यं तथा पञ्चममहाव्रते पूजा किं न संक्रान्ता ?, अपितु संक्रान्तेत्यर्थ इतिगाथार्थः ॥४०॥ अथ द्रव्यपूजा यथा पञ्चममहाव्रते संक्रान्ता तथा दर्शयन्नाह—

आणाइ दव्वपूआ दव्वचाएण देसरूवेण । सो सव्वदव्वचाए जिणआणाए समोअरई ॥४१॥

द्रव्यपूजा हि बिम्बकुसुमचन्दनादिद्रव्यसमुदायसाध्या, सा चाज्ञया देशरूपेण द्रव्यत्यागेन भवति, देशतो द्रव्यव्ययेनैव स्यादित्यर्थः, आज्ञाऽपि तीर्थकृदुपदेशरूपा,न पुनः कुसुमादिद्रव्यव्ययमात्रेण, उत्सूत्रभाषिणामपि तीर्थकृत्पूजाकृतिप्रसक्तेः, नचैवं, यतो द्रव्यपूजा हि भावपूजाकारणं–भावस्तवहेतुः, भावस्तवो हि चारित्रं, यदुक्तं–"जिनभवनबिम्बठावण जत्ता पूआ य सुत्तओ विहिणा । दव्वत्थउत्ति नेअं भावत्थयकारणत्तेणं ॥१॥ इतिपञ्चाशके (२४७) तच्चोत्सूत्रभाषिणामनन्तेनापि कालेन दुरापम्, अनन्त कालस्थितिहेतुस्तु कुपाक्षिकाणां पूजापि भगवति उत्सूत्रसंयुक्ता,आस्तां कुसुमादिपूजा,प्रव्रज्याऽप्यनन्तसंसारहेतुस्तथावस्तुस्वभावात्, युक्तयस्तु प्रथमविश्राम तीर्थस्वरूपस्थापनावसरे दर्शिता, एवम् जमाल्यादीनामेवेति प्रवचने प्रतीतमेतत्, कुमतं हि क्रिया बलेन वर्द्धते इति पूजादिक्रियैव चैषामन्येषां चाऽनुमोदनादिविषयत्वेनानर्थहेतुरपि, तस्मात्कुमतं यथा२ क्रियाशिथिलं तथा२ प्रवचनस्य तस्य च हितमपति मतिमता मन्तव्यं, स देशतो द्रव्यत्यागः, सर्वद्रव्यत्यागे "सव्वाओ परिग्गहाओ वेरमणं"मितिजिनाज्ञयैव सर्वपरिग्रहत्यागात्मके पञ्चममहाव्रते समवतरति, अथ मा न्यदि साधूनां कुसुमादिद्रव्यस्तवो निर्जराङ्गमभविष्यत्तर्हि सर्वज्ञाः सर्वपरिग्रहत्यागं साधूनां नाकारयिष्यन्,कारितवन्तश्च सर्वपरिग्रहत्यागं साधूनामतः सर्वपरिग्रहत्यागान्तर्भूतोऽपि द्रव्यस्तवः पृथक् क्रियमाणस्तीर्थकृदाज्ञातनैवाज्ञाबाधास्यादितिगाथार्थः ॥४१॥ अथ प्रतिमाप्रतिष्ठा श्रावकेणैव कर्त्तव्या साधूनामतस्त्वाद्द्रव्यस्तवपूजादिवदिति

तिलकाचार्योद्भावितस्यानुमानस्य तद्विपरीतसाधकं तत्प्रतिपक्षभूतमनुमानमाह—

**जिणपडिमाण पइट्ठा कायव्वा मुणिगुरूहिं जगसक्खं । तेलुक्कपूअकारणभावा गणहरपइट्ठव्व ॥४२॥**

जिनप्रतिमानां प्रतिष्ठा जगत्समक्षं मुनिगुरुभिः कर्त्तव्या, अनापवादिकत्वे सति त्रैलोक्यपूजाकारणभावात्—त्रैलोक्यपूजाहेतुत्वाद्गणधरप्रतिष्ठावद्—गणधरपदस्थापनावदित्यनुमानप्रयोगः, व्याप्तिग्रहस्त्वेवं—यद्यत्त्रैलोक्यपूजाकारणं तत्तन्मुनिगुरुणैव विधेयं, यथा गणधरपदप्रतिष्ठा, तत्र हेतुसाध्ययोर्द्वयोरपि सत्त्वात्, प्रकृतसाध्यसिद्ध्यर्थं मुनिगुरुः—सूरिः दृष्टान्ते तीर्थकृदिति, न पुनर्गृहिकृत्यं त्रैलोक्यपूज्यत्वहेतुर्भवति, यत्तु क्वचिच्चरितानुवादे तथा दृश्यते तद्दिव्यानुभावाद्यात्मकमौपाधिकमेवावगन्तव्यं, दिव्यानुभावस्तु विधिवादे विचारक्षोदक्षमो न भवति, यथा अविरतदेवतार्प्पितलिङ्गः साधुलिङ्गधारी कश्चित् साधुस्त्रैलोक्यस्याप्याराध्यो भवति, न तथा द्वादशव्रतधारकश्रावकार्प्पितलिङ्गात्साधुः स्यात्, तथाऽनादिसिद्धजगत्स्वभावात्, जगत्साक्षिकमितिपदेन प्रतिष्ठाकृत्यं न रहोवृत्त्या विधेयं, किंतु राजामात्यादिसमस्तमहर्द्धिकजनसमक्षं, यतः समस्तजनसाक्षिकं प्रतिष्ठाकृत्यं समस्तस्यापि लोकस्याराध्यत्वेनाभिमतं स्यात्, तत्रापि साधुना कृतमविवादेनैव समस्तानामपि सम्मतं, साधोः समस्ताभिमतत्वादितिगाथार्थः ॥४२॥ अथ सत्प्रतिपक्षितं तिलकाचार्योद्भावितमनुमानं कीदृशं जातमित्याह—

**पडिवक्खऽणुमाणसरप्पहओ तुह हेउसउणि गयपक्खो । सिद्धंतपक्खजुत्तो हेउसरो जयउ अम्हाणं ॥४३॥**

प्रतिपक्षानुमानं—परोद्भावितानुमानसाध्याद्विपरीतसाधकानुमानं तदेव शरो—बाणस्तेन प्रहतः—आहतः 'तुहे'ति—हे तिलकाचार्य! तव त्वदीयो हेतुः सावद्यत्वादितिरूपस्तद्रूपः शकुनिः—पक्षी, किंलक्षणो?—गतपक्षः—छिन्नपक्षो जातः, अन्योऽपि पक्षी परप्रयोगप्रे-

रिपुमन्मथतो विगतपक्षोऽसमर्थः प्लवमानो वा भवति, तथा त्वदनुमानपक्षी तीर्थप्रेरितानुमानशरप्रहतो बोध्यः, यत एवं ततो ऽस्माकम्–अस्मत्संबन्धी त्रैलोक्यपूज्यप्रपत्त्यादिविधिपक्षो जयतु, किंलक्षणः ?–सिद्धान्तपक्षयुक्तः–अनेकप्रतिष्ठाकल्पादिप्रवच-नानुयायी, अपरोऽपि पक्षः सिद्धाः–परिकर्मणा संस्कृता येऽन्त्या–अन्तिमावयवास्तेषु यथा –पतत्राणि यत्र स तथा, पतत्रमन्तरेण गमनसामर्थ्यगतेः, त्वदनुमानपक्षिवन्त्वा सिद्धान्तपक्षयुक्तोऽस्मदीयो भावो जयत्विति समुदायार्थः ॥४३॥ इति चन्द्रप्रभाचार्य तच्छिष्यार्यविरचितान्यनुमानानि हेत्वाभासग्रस्तानि न भावकप्रतिष्ठाव्यवस्थापनाय समर्थानीति ज्ञापयित्वा साधुप्रतिष्ठाव्यवस्थापना-यानुमानानि आगमसम्मतयश्च प्रदर्शिताः॥ अथ अनुमानात् केषांचिन्मतिर्मा भूदिति तिलकाचार्यकृतप्रतिष्ठाकल्पमालोक्य शङ्कोत्पद्यते तत्पराकरणाय गाथामाह–

जो पुण तिलगायरिओ कुवक्खसमुक्खो मयाणुरागेण। लविओ कप्पाभासे अमुणंतो धम्मपरमत्थं ॥४४॥

यः पुनस्तिलकाचार्यः कुपक्षमूर्खो महाज्ञानान्धः स्वमतानुरागेण स्वमतदार्ढ्यहेतवे एव ग्रन्थकर्तृत्वाक्षेपकुपाक्षिकापेक्षया प्रसिद्धः, यथा कुपाक्षिकाणां मध्ये मूर्खो,मूर्खत्वं प्रतिष्ठाकल्पादिग्रन्थरचनायां स्वयमनुमानादिप्रयोगकरणाशक्तः परकृतानामनुमानप्रयोगाणां दूषणभूषणान्यजानन्नेव राकामतावर्तकचन्द्रप्रभाचार्येण क्रोधाविष्टेन भावकप्रतिष्ठाव्यवस्थापनायोपन्यस्ता ये हेत्वाभासास्तानेवान्य प्रकटभिप्रायास्तुर्याविष्करणाय निजकृतिप्रान्तलिखितपदार्थी मूर्खत्वमप्यस्य नाशास्यम्, यतः–'एक्को ताव महग्घो मोग्ग कज्जम सपढमज्झंमि। जाव न ससुरससपुससकुक्कुससमत्तं कमइ॥१॥"त्ति, नचैवं विपश्चितां गतिः,यदास्माकीनेन पूर्वजिन क्रोधाना-भोगादिना परवशीभूतेन यत्किंचित्कृतं कारितं प्रकाशितं वा तत्सर्वमपि प्रमाणीकृत्य विपश्चित्पर्षदि व्यवस्थाप्यते, तद्व्यवस्थापने

च स्वकीयं मौखर्यमेवाविष्कर्त्तव्यं स्यात् , नह्यनुमानाभासो बलीयसाऽपि पुरुषेण प्रामाणिकपर्षदि परवादिजयायोद्भावितः स्वात्मनः शरणं भवितुमर्हति, किं खड्गाभासेनाप्यर्ककाष्ठेन वैरिसैन्यं जेतुं शक्यते ? इत्यादि स्वयमेव बोध्यं, मतानुरागेणेतिपदेन तिलकाचार्यस्य राकाशाखापतितत्वं सूत्रितं ॥ 'लविउ'त्ति लपितो यत्तत्प्रलपितः, कुत्र ?—'कल्पाभासे' कल्पशब्देनेह प्रतिष्ठाकल्पस्तद्वदाभासते अप्रतिष्ठाकल्पोऽपि प्रतिष्ठाकल्पतया आभासते इति प्रतिष्ठाकल्पाभासस्तस्मिन्, किं कुर्वन् , ?—'धर्मपरमार्थमजानन्' धर्मस्य—श्रुतचारित्रात्मकस्य परमार्थो—रहस्यं सामान्यविशेषोत्सर्गापवादात्मकं न ज्ञातवानित्यर्थः।

अथ तिलकाचार्यप्रलपितं प्रादुष्कर्त्तुं तद्विकल्पिता प्रतिष्ठाकल्पपीठिका (दर्श्यते) यथा—ॐनमो भगवते श्रीपञ्चमङ्गलाय ॥ येनास्त्ररहितेनापि, विषमास्त्रो विनिर्जितः । महावीरः स वः पायाल्लोकोत्तरपराक्रमः ॥१॥ सर्वोत्तमसमाचीर्णज्ञानचारित्रदर्शनाः। गुरवः सुखमेधन्तां, सिद्धिश्रीसंगमोद्यताः ॥२॥ साधूनां श्रावकाणां च, विधिर्यत्र निरुच्यते । स निष्कन्दितसंदेहश्चिरं जीयाज्जिनागमः ॥३॥ एवं समाहितस्वान्तः, स्मृत्यर्थं भविनां सदा । जिनबिम्बप्रतिष्ठानविधिमाविष्करोम्यहम् ॥४॥ इह च प्रथममेव केचिदुत्सूत्रप्ररूपिणो यथाच्छन्दाः स्वात्मप्रत्यनीकाश्चिरपरिचितापारसंसारकान्तारसंचारविरहभीरवः सिद्धिसीमन्तिनीपरिरम्भयोग्यभोग्यविकलाः कुगतिवनिताङ्गपरिष्वङ्गबद्धरङ्गाः स्वीकृतनिष्प्रपञ्चपञ्चमहाव्रतानां व्रतिनां प्रतिष्ठाकारत्वमुपवर्णयन्ति तदसंगतं, यतः प्रतिष्ठाकारस्येदं स्वरूपं निरूप्यते-यथा-न्हायविलित्तउ चंदणिण गंधसुगंधिअ देह। परिहाविअसिअसदसजुयल गुणगणरयणह गेह॥१॥ "तक्खणि दक्खिणि करि धरिअ कंकणकडहसणाहु। सुंदरमुद्दारयणजुय दक्खिणकरतरुसाहु॥२॥ सुदृढु पइट्ठाकार तहिं वण्णिज्जइ जय-

वंतु। जो नवि नाहिअमयकलिओ न फुरंतप वीसंतु ॥२॥ तत्र 'वयछक्क कायछक्कं अकप्पो गिहिमायणं पलिअंक निसिज्जाए सिणाणं सोमवज्जण ॥१॥ इत्यागमात् साधूनां स्नानं शरीरे चन्दनविलेपनं गन्धैः सुगंधीकरणं शोमाङ्गत्वाभेन युज्यते, तथा "आ-पपमाणा कप्पा असङ्गमज्झा य नितमडा इत्या" इत्यागमेषु प्रमाणोपेतवस्त्रपरिधानेन साधोरचेलकत्वस्थापनात्स्वच्छसदृशव स्त्रपरिधानमपि न युज्यते। तथा—"जस्स हिरण्ण सुवण्णं हत्थेण पराणयंपि नो छुप्पे। कारणसमप्पिअंपिहु गोअम ! गच्छं तयं भणिमो ॥१॥ इत्यागमेन साधोः सुवर्णस्पर्शनमात्रमपि निषिद्धं,तत्कथं कङ्कणधत्रायलङ्कारमङ्गीकरिष्यति, अतः प्रतिष्ठाकारलक्षणं सर्वमपि साधोर्विरुध्यते, श्रावकस्यैवोपपद्यते, ततस्तेनैव प्रतिष्ठा कार्या, अत्र चार्थे अनुमिमीहे—जिनबिम्बप्रतिष्ठा श्रावकेणैव कर्त्तव्या; द्रव्यस्तवरूपत्वात्पुष्पपूजादिवत्, द्रव्यस्तवत्वं चास्याः "जिणभवणबिंबठावणजत्तापूआइ सुत्तओ विहिणा। दव्वत्थउत्ति नेअं भावत्थयकारणत्तेणं ॥१॥" इति वचनात्, तथा सावद्यरूपत्वादितिहेतोः बिनप्रतिष्ठा श्रावकेणैव कार्या,सावद्यरूपत्वं चास्या एवं—शुद्धिं कृत्वा प्रतिष्ठाकारचन्दनमभिमन्त्र्य स्वहस्तेन बिम्बस्य विलेपनं करोति, अभिमन्त्रितधूपोत्पाटनं स्वहस्तेन करोति, पुष्पवासयुक्ताभिमन्त्रितमदनफलबन्धनं स्वहस्तेन करोति, मस्यप्रवस्त्रेण प्रतिमाच्छादनं तदुपरि चन्दनच्छटामोचनं पुष्पक्षेपं नानाग-न्धयुक्ताक्षतधान्यप्रक्षेपणं च स्वहस्तेन करोति, ततो लग्नसमये त्रिपञ्चसप्तवारान् सर्वाङ्गं प्रतिमां स्पृशेत्, पुनर्वासनिक्षेपणं पुष्पारोपणं च प्रतिष्ठाकारः स्वहस्तेन करोति इति सर्वप्रतिष्ठाकल्पेषूक्तत्वा'दिति कुपाक्षिककौशिकतिलकतिलकाचार्यः समताानुरागेण श्रावकप्रतिष्ठा-व्यवस्थापनाय पञ्चप्रकरपञ्चजन्मचकेलिसदृशीं प्रतिष्ठाकल्पाभासपीठिकामुत्सूत्रविद्सुतग्रस्तमन्मूनां चिरंजीविना विभामकृते कृतवान्, तत्र सामान्यतस्तावदिदमभिधातव्य—

नन्वु भो तिलकाचार्य ! एवं शुद्धिं कृत्वा प्रतिष्ठाकारश्चन्दनमभिमन्त्र्य स्वहस्तेन विम्बस्य विलेपनं करोतीत्यादिरूपः प्रतिष्ठाविधिस्त्वया कुतो लिखितः ?, किं सिद्धान्तादुत पूर्वाचार्यविरचितप्रकरणेभ्यो वा अथवा पूर्वभवाभ्यस्तपरिज्ञानहेतोर्जातिस्मृत्यादेर्वा स्वमतिविकल्पनाद्वा ?, नाद्यः, क्वापि सिद्धान्ते त्वल्लिखितविधेरनुपलम्भाद्, द्वितीये प्रकरणान्यपि चरित्रादिरूपाणि उत प्रतिष्ठाविधेरेव प्रतिपादकानि ?, नाद्यः, आस्तामन्यत् त्वयैव प्रतिष्ठाकल्पे नामग्राहं निदर्शितानि यान्युपमितिभवपश्चादीनि चरित्ररूपाणि प्रकरणानि तेष्वपि क्वापि त्वदुक्तविधेर्गन्धस्याप्यभावात्, न हि क्वापि केनापि तिलकमञ्जर्यादिशक्रपर्यन्तेन प्रथममभिमन्त्रितचन्दनेन बिम्बं लिप्तं, न चाभिमन्त्रितधूपोत्पाटनमित्यादि यावन्मन्त्रन्यासनेत्रोन्मीलनादि कृतं, तावन्मात्रस्यैव तवोपदेशार्हत्वाद्, अथ प्रतिष्ठाविधेः प्रतिपादकानि प्रतिष्ठाकल्परूपाणि प्रकरणानीति चेत्तर्हि ते प्रतिष्ठाकल्पास्तव प्रमा आगमप्रमाणं वा ?, आद्ये विवादस्य दत्ताञ्जलितैव, तेषु प्रतिष्ठाकल्पेषु यानि कृत्यानि श्रावकस्य तानि श्रावकस्यैवाभ्युपगन्तव्यानि, यानि च साधोस्तानि च साधोरेवेति नष्टा त्वदभीष्टा श्रावकप्रतिष्ठा दूरमिति । इह च प्रथममेव केचिदुत्सूत्रप्ररूपिणो यथाच्छन्दाः स्वात्मप्रत्यनीकाश्चिरपरिचितापारसंसारकान्तारसंचारविरहभीरव इत्याद्यनार्यदुर्वचनैः साधुप्रतिष्ठाव्यवस्थापकानां तीर्थसम्मतानामपि श्रीहरिभद्रसूरिप्रभृतिपूर्वसूरीणां महाशातनां कृत्वा सूरिप्रतिष्ठाभिधायकेभ्यस्तत्कृतप्रतिष्ठाकल्पेभ्यः शेषप्रतिष्ठाविधिं च स्वकृते प्रतिष्ठाभासे लिखन् पुनः साधुप्रतिष्ठोत्थापनाय श्रीहरिभद्रसूरिप्रभृतिकृतानामेव पञ्चाशकादिग्रन्थानां सम्मतिं दर्शयन् हे निर्लज्ज ! तिलकाचार्य त्वं कीदृशः किंसंज्ञो भण्यते ?, परं 'निस्स्थानिकायाः सपत्न्याः पितृगृहं स्थानक'मिति लोकाभाणकस्त्वया सत्यापित इति, किंच—भो तिलकाचार्य ! सर्वप्रतिष्ठाकल्पेषूक्तत्वादिति वचसा ये त्वयैव प्रतिष्ठाकल्पाः सम्मतितयोद्भाविताः तत्र क्वापि मन्त्रन्यासनेत्रोन्मीलनादिकमपि श्रावक एव

करोति,न पुनः साधुरित्यादि लिखितं दृष्टं न वा ?,नेति चेत्तर्हि तव पितुः किं याति यत्त्वमेव कण्ठागतान्त्र यावत् गाढस्वरेण प्रतिष्ठा श्रावकेणैव कर्त्तव्या साधोस्तत्रानधिकारादित्यादि जल्पसि,अथ प्रतिष्ठाकल्पा अप्रमाणमितिचेत् मैवं, प्रतिष्ठाकल्पप्रणेतॄणां श्रीहरिभद्रसूरिप्रभृतीनामनाप्तत्वापत्त्या तत्कृतपञ्चाशकादिग्रन्थानां सम्मतितयाऽनुद्भावनापत्तेः त्वद्विकल्पितप्रतिकल्पाभासस्यापि निर्मूलतापत्तेश्च, अथ तृतीयो विकल्पश्चेत् न पूर्वभवाम्यस्तपरिज्ञानहेतोर्जातिस्मृत्यादेरिति दिव्यकरणप्रत्यायनीयत्वेनाकिंचित्करत्वान्न सदसि वक्तुमपि कल्प्यः, अथ स्वमतिविकल्पनादिति योऽन्त्यः सोऽत्यन्त हास्यास्पदः,नहि स्वमतिविकल्पित कस्यापि विश्वासहेतुः,तस्मात् स्वयं प्रतिष्ठाकल्पाभासमपि कुर्वता त्वया तन्मूलभूताः श्रीहरिभद्रसूरिप्रभृतिकृता प्रतिष्ठाकल्पाः प्रमाणीकर्त्तव्या , अन्यथा सर्वं प्रतिष्ठाकल्पेषूक्तत्वादिति वक्तुमप्यशक्यत्वात्,तत्प्रमाणीकरणे च त्वद्विकल्पितप्रतिष्ठाकल्पोऽर्धजरतीयन्यायमापन्नो न श्रयणार्हो ऽपि, तथा च सिद्धमनायासेनैव साधुप्रतिष्ठाकरणमिति गाथार्थः ॥४४॥ अथोक्तार्थसंग्राहक गाथात्रिकमाह—

णणु तुह पइट्ठकप्पे विहि लिहिओ आगमा पगरणेहिं ?। पढमो तुहऽपणिट्ठो बीए चरिअ च विहिमंत ॥४५॥

दमयंतीपमुहाइं जाइं चरिआइं तयवि वुत्ताइं । तेसुवि तुह लिहिअविही न दीसई आससिगुव ॥४६॥

विहिमंतं पुण पगरण पइट्ठकप्पो हविज्ज जइ तुम्ह । ता अम्हाणवि इह सूरिपइट्ठा जिणुवइट्ठा ॥४७॥

ननु तव प्रतिष्ठाकल्पे लिखितो विधिः आगमात् प्रकरणेभ्यो वा ?, प्रथमस्त्वचाप्यनिष्टः,आचाराङ्गादिषु त्वदुक्तविधेरनुपलम्भात्, द्वितीये प्रकरणमपि चरितं विधिमद्वा ?, प्रथमे दमयन्तीप्रमुखानि यानि चरितानि त्वयाऽप्युक्तानि सम्मतितयेति तेष्वपि तव लिखितो विधिर्न दृश्यते,अश्वभ्रमरवत् ,यथा तुरङ्गभ्रमरत्वं तथा त्वदुक्तो विधिश्चरित्रप्रकरणेषु न दृश्यते,यदि तव विधिमत्प्रति

ष्ठादिविप्रतिपादकं पुनः प्रकरणं प्रतिष्ठाकल्पस्ता-तर्हि अस्माकमपीष्टं,सूरिप्रतिष्ठा जिनोपदिष्टा सिद्धेतिगाथात्रयार्थः ।४५।४६।४७।

अथ फलितार्थमाह—

**तम्हा जत्थ नवीणं बिंबं निम्मविअ मट्टिआइमयं । महिअं अहिग्गहीहिं तत्थ विही नेव सत्थुत्तो ॥४८॥**

यस्मात्कारणात्प्रतिष्ठाकल्पोक्तो विधिः 'सूरिः प्रतिष्ठां कुर्यादि' त्यादिवचोभिर्व्यङ्ग्यः प्रमाणं तस्मात्कारणात् मृत्तिकादिद्रव्यमयं-मृत्तिकागोमयादिपुद्गलात्मकं 'विम्बं' जिनप्रतिमा 'अभिग्रहिभिः' जिनविम्बं नमस्कृत्यैवाशनादि भोक्तुं कल्पते,नान्यथेत्यभिग्रहवद्भिः क्वचित्कदाचित्प्रयोजनविशेषे विम्बसामग्र्यभावे 'निर्मापितं' निष्पादितं तत्र शास्त्रोक्तो विधिः-प्रतिष्ठाकल्पोक्तो विधिर्नभवेत् , नहि विधिप्रतिष्ठां चिकीर्षन् कोऽपि मृत्तिकादिद्रव्येण जिनविम्बं करोति, तादृशस्य विम्बस्य जलस्पर्शमात्रेणैव विनश्वरस्वभावात् कुतः स्नात्रादिविधिकरणसंभवः?,किंतु स्वाभिग्रहपरिपालननिमित्तं मृत्तिकादिना तीर्थकृदाकृतिं विधाय चैत्यवन्दनशुद्ध्यर्थं नमस्कारमात्रेण स्थापना क्रियते,सा च तथाविधभवितव्यतायोगाद्देवतया तीर्थतया प्रवृत्ता सर्वेषामपि सम्मता जातेतिबोध्यं,नचैवं शास्त्रोक्तो विधिर्लुप्येतेतिगाथार्थः ॥४८॥ अथ तिलकाचार्यः स्वप्रतिष्ठाकल्पे प्रतिष्ठादिशब्दानामर्थं यथा तथा प्रलपन् बहुजनानां भ्रान्तिजनकः अतस्तच्छङ्कापराकरणार्थं प्रतिष्ठाशब्दस्य कोऽर्थ इत्याह—

**सेसहिगारि पइट्ठा पइठिअपडिमाणमासणट्ठवणा । अहिगारट्ठपवित्ती जह लट्ठिपइट्ठिआ य धया ॥४९॥**

'शेषाधिकारे' नवीनप्रतिमाकरणादतिरिक्ताधिकारे यत्र कोऽपि प्रतिष्ठाशब्दो दृश्यते तत्र प्रतिष्ठा तावत् प्रतिष्ठितानां जीर्णप्रतिमानामासनस्थापना,प्रासादसिंहासनादिकं नवीनं निष्पाद्य पूजानिमित्तं तत्रोपवेशनमिति प्रतिष्ठाशब्दार्थः, तत्कुत इत्याह-अधि-

घणात्-ग्रहणविज्ञानादप्रतिपत्ति –यथाभ्युपगमो भवति,तत्र दृष्टान्तमाह–'जहे'त्यादि,यथा लष्टिप्रतिष्ठिता ध्वजा, लष्टौ–दण्डे प्रतिष्ठिता–न्यस्ता यथा ध्वजत्यर्थः। यदागमः–"तओ पुणो जयकणगलट्ठियपइट्ठिअंसमूसनीसे'त्यादि श्रीपर्युषणाकल्पे, तथा "मगंतपरइ्ठाण मथुरानयरीए मगनाह तु। गहेसु पघरेसु अ छन्नवइगामअद्धेसु॥१॥त्ति मदुराए नयरीए घरे कए परमं अरहंता पइट्ठविज्जंति मगन्निमित्त, जइ न करांति घरे पडइ"त्ति, अत्र ब्राह्मणक्षत्रियादिगृहेषु न्यसनमात्र एव प्रतिष्ठाशब्दार्थः, एतेन प्रतिष्ठा१ प्रतिष्ठान२ प्रतिष्ठापन३ संस्थापन४ स्थापना५ दिशब्दानामेकार्थतां विकल्प्य परस्परपर्यायवाचिता तिलकाचार्येण प्रतिपादिता सा''पि निरस्ता, प्रतिष्ठादिशब्दानां पर्यायवाचित्वेन विपश्चित्प्रयोगादर्शनात्। किन्तु 'अधिकारवशादर्थप्राप्ति'रितिन्यायात् कश्चित्प्रति ष्ठाशब्दः शोभावाची, यथा "प्रतिष्ठां प्रापितः शिष्यो, गुरुणा गुरुविषया" कश्चिदाधाराधेयसंबन्धवाचको यथा–"गुरुरासने प्रतिष्ठाप्य, शिष्यानध्यापयत्यमून्" तथाऽऽगमप्रयोगोऽपि–"तओ पुणो जयकणगलट्ठिपइट्ठिअ"त्ति, तथा णिगन्तप्रयोगेणापि,यथा 'स्थापयन् प्रतिष्ठाप्य, चैत्यमस्तवतिमां सुधीः।" कश्चिच्च प्रतिष्ठाप्यविषयकाभिमन्त्रितवासक्षेपमन्त्रन्यासादिक्रियाविशेषवाचको, यथा "सूरिः प्रतिष्ठां कुर्यादि'त्यादि,एवं प्रतिष्ठानशब्दोऽपि प्रायः स्थित्यर्थाभिधायकः, प्रतिष्ठापनशब्दस्तु णिगन्तप्रयोगात्स्फुट एव निश्चायः, नवरं प्रतिष्ठाप्रतिष्ठानशब्दयोः प्रतिष्ठानमिति निरुक्तेरभेदः, प्रतिष्ठन्तं प्रयुङ्क्ते इति प्रतिष्ठापनमिति निरुक्तेरेव सदस्मात् प्रतिष्ठापनशब्दो णिच्प्रत्ययनिष्पन्नत्वेन प्रतिष्ठाप्रयोजककर्तृक्रियाविशेषवाचकः,एतेन 'ज न परिट्ठविअ' मित्यस्य शब्दस्य पक्ष परिष्ठापनमिति स्थापितो भूमिगता दत्तो न पुनः परित्याजितमिति सम्मति प्रतिष्ठानप्रतिष्ठापनशब्दयोरेकार्थताभिधानाय तिलकाचार्येण प्रदर्शिता सा''पि निरस्ता, धात्वन्तरसामान्य णिगन्तागिगन्तप्रयोगयोस्तुल्यार्थाभिधायकत्वस्य दृष्टत्वात्, यथा संमा

णीतिणिगन्तप्रयोगेणाप्यणिगन्तप्रयोगः शङ्कते इति तुल्यार्थः, न पुनरेकधातुप्रयोगेऽपि णिगन्ताणिगन्तयोरविशेषः, प्रयोजक-
प्रत्ययस्य पर्यायापत्तेः, नन्वेकधातुप्रयोगेऽपि क्वचिद्भिन्नार्थानभिधानं यथा स्थापनशब्दस्य पर्यायः प्रतिष्ठेतिचेत्, मैवं "उपस-
र्गेण धात्वर्थो, बलादन्यत्र नीयते" इति वचनात् प्रतिना सोपसर्गस्य धातोः केवलधात्वपेक्षया भिन्नार्थाभिधायकत्वेन वस्तुगत्या
भिन्नत्वात्, अत एवात्मनेपदिकः परस्मैपदिको वा धातुः प्रयोजनणिगन्तप्रत्ययप्रयोगादुभयपदिको भवति, वस्तुगत्या स्थापनशब्दो
वस्तुनस्त्वाकृतिमात्राभिधायकः, तथाहि "नामजिणा जिणनामा ठवणजिणा पुण जिणिंदपडिमाओ। दव्वजिणा जिणजीवा भाव-
जिणा समवसरणत्था ॥१॥ इति (चैत्यवन्दनभाष्यं) तथा "नामठवणाणं को पइविसेसो?, नामं आवकहिअं, ठवणा इत्तरिआ वा
होज्ज"त्ति तथा "नामं ठवणादविए खित्तदिसातावखित्तपण्णवए। सत्तमिआ भावदिसा होइ अट्ठारसविहा उ ॥१॥" त्ति। क्वचि-
त्प्रतिमादिस्थापनारोपणेऽपि, यथा "उम्मग्गनिवारणयं सम्मग्गट्ठावणं च भव्वाणं। एमाई जं विहिअं अणुमोएऽहं तमप्पहिअं ॥१॥"
(आराधना) इति। ननु क्वचित्स्थापनाशब्दस्य पर्यायः प्रतिष्ठेत्युपलभ्यते तत्र किं कर्तव्यमितिचेच्छृणु, क्वचित्कथञ्चिद्व्युत्पत्त्याऽ-
नेकार्थतां विभाव्य छन्दोऽनुवृत्त्या धर्मधर्मिणोरभेदोपचारमङ्गीकृत्य वा ग्रन्थकाराणां तथा प्रयोगसंभवेऽपि सर्वत्रापि स्थापनाशब्देन
प्रतिष्ठा वाच्येति न पूत्करणीयम्, अनन्तरोक्तयुक्त्या तिलकाचार्यस्य गलपादुकान्यायोत्पत्तेः, क्वचित्कस्यचिच्छब्दस्य कश्चित्पर्यायं
दृष्ट्वा सर्वत्रापि तथा पर्यायकरणे "पतङ्गो द्योतयन् विश्वं, कस्य नानन्दकारणम्?" तथा "प्रदीपरूपमालोक्य, पतङ्गो नाशमाश्रित"
इत्युभयत्रापि पतङ्गशब्दस्य सूर्यपर्यायकरणप्रसक्तेश्च, तस्मात्क्वापि कविप्रयुक्तानां खगपतङ्गादिशब्दानां सूर्यादिशब्दैः पर्यायं दृष्ट्वा
सर्वत्रापि तथा पर्यायकरणाभाववत् स्थापनाशब्देन सर्वत्रापि प्रतिष्ठापर्यायो न युक्तः, प्रयोगानुसारेण पतङ्गादिशब्दवदस्याप्यनेका-

र्यता मान्या, अन्यथा "तदा नदीप्रवाहेण, पाटिताद्रिकटावटात्। युगादिदेवप्रतिमा, प्रकट्याऽभूत् प्रमाणयुक् ॥ १ ॥ तां प्रेक्ष्य र्षपुलकोऽसौ, स्नपयामास वारिणा। पीठे कृत्वा मृदोच्चैर्, स्थापयामास तत्र ताम् ॥ २ ॥" इति श्रीविमलनाथचरित्रे, अत्र विलकाचार्याभिप्रायेण स्थापयामासेति प्रतिष्ठां कृतवानिति वक्तव्यं स्यात्, तथाप्यक्षबाधित, स्वकीयाग्रहे विमुच्यालोचयन्तु, तिल- काचार्य प्रदर्शितासु उपमितौ 'रत्नचूडविद्याधरः कथयती'त्यादि, "याचविद्याधराणामवतारणार्थं महाभवनं विधाय प्रतिष्ठितं तेन भगवता युगादिदेवस्य बिम्बं" ठाणाविवरणे "इअ चिंतिऊण तो सा गंतूण य सरवरं नियपदेसं। पक्खालिअ संठविआ पडिम ता वंदए देव ॥१॥" हरिवंशग्रन्थे इत्यादिरूपासु सम्मतिषु कापि विवादापन्नायाः प्रतिष्ठायाः पृथक्कमभिमन्त्रितवासक्षेपमन्त्रन्या मादिकं किमपि विद्यते न वा ?, प्रथमोऽप्यक्षबाधितः, द्वितीये प्रतिष्ठैव तत्र नामयुज्यते, तदवबोधकलिङ्गाभावात्, तर्हि कुत्र स्नात्राद्यण्कुष्माण्डकल्प' श्रावकस्तित्कथां प्रविष्टः, तथा च संपन्नम् 'असाते तडाके मकरप्रवेश' इति लोकाभाणक इति, अस्माभिस्तु "मुणिकअ पुम हरिमह" इत्यादिचतुर्दशगाथायां प्रागुक्तायां सम्मतितयोपदर्शितासु सर्वास्वपि कपिलकेवलिना श्रीनामधरिप्रभृ तिमिरमभिमन्त्रितवासक्षेपादिकं प्रतिष्ठासूचकं विद्यत एव, तेन तिलकाचार्यप्रदर्शिताः सम्मतयो वेधवायत्तप्रलपितकल्पा बोध्याः इति सामान्यतस्तिलकाचार्यस्तिरस्कृत इति गाथार्थः ॥४९॥ अथ प्रकारान्तरेणापि किञ्चिदाह—

कत्थवि कलंकदाणं कत्थवि सत्थाणमण्णहा लवणं। कत्थवि पयप्पणपरमत्थमावत्तुण्णपि तिलगवयणं ॥५०॥

तिलकाचार्यवचः क्वचित्कलङ्कदानं–प्रवचनस्य कलङ्कदानात्मकं, क्वचिच्छास्त्राणां प्रतिष्ठास्थापनादिलक्षणानामन्यथा लपनम्–अ यथार्थभूतानामपि यथार्थरूपतया प्रलपनं, क्वचित्परमार्थमात्रशून्यं–पूर्वापरसंबन्धपर्यालोचनविकलमपीति, प्रतिष्ठाकल्पाभासे इति

स्वकृतावश्यकवृत्तौ 'भरतः स्वयं प्रतिष्ठितवानि'ति लिखित्वा प्र-
प्रकरणाद् बोध्यमित्यक्षरार्थः। भावार्थः पुनरेवं—कलङ्कदानं त्वेवं—स्वकृतावश्यकवृत्तौ च तद्गन्धस्याप्यभावाद्, एवं च सति
तिष्ठाकल्पे च श्रीआवश्यकवृत्तिं सम्मतितयोद्भावितवान्, श्रीहरिभद्रसूरिकृतावश्यकवृत्तौ च तद्गन्धस्याप्यभावाद्, एवं च सति
''धावत२ भो डिम्भाः! तरंगिणीतीरे गुडशकटं विपर्यस्त''मित्यादि धूर्त्तवाक्यवत्तिलकाचार्यवाक्यमपि बोध्यं, अथ शब्दानाम-
न्यथाभाषणं यथा दमयन्त्यां शक्रावतारे एकविम्बमाश्रित्य शक्रचक्रवर्त्तिवासुदेवादयः प्रतिष्ठां चक्रिरे इत्याद्युक्तं, तत्र कालभेदेन
युगपद्वा ?, उभयथापि प्रतिष्ठाया विवादापन्नाया असंभवाद्, यतः प्रथमे विकल्पे प्रतिष्ठितस्य बिम्बस्य पुनः प्रतिष्ठाकरणेऽन-
वस्थानाद्, यावत्कथितस्थापनाभङ्गापत्त्या स्वरूपहानेश्च, द्वितीयोऽप्यसंभवी, नहि चक्रवर्त्तिवासुदेवौ युगपदेकत्र मिलतः, तयोरेक-
क्षेत्रे युगपदुत्पत्तेरभावात् तस्मात्, शक्रचक्रवर्त्तिवासुदेवादयः प्रतिष्ठां चक्रिरे इति क्वचित् प्रासादे संस्थाप्य तद्बिम्बं पूजितवन्त
इत्यर्थे व्युत्पन्ने प्रतिष्ठाकल्पोक्तविधिना प्रतिष्ठा कृतेत्यन्यथा भणनं तिलकस्येति बोध्यं, अथ पूर्वापरसंबन्धापर्यालोचना—तथा
''चेइअपूआ रायानिमंतणे सन्नि वाइ खवग कही। संकिअ पत्त पभावण पउत्तिकज्जा य उड्डाहो ॥१॥'' इति बृहत्कल्पप्रथमोद्दे-
शकभाष्यस्य द्वारगाथा,तत्र सन्निवाइअपदस्य चूर्णिर्यथा—''इआणिं सन्निं वाई अ एए दोवि दारे एगट्ठे वक्खाणेइ, 'एमेव य सन्नी-
णवि जिणाण पडिमासु पढमपट्ठवणे। मा परवाई विग्घं करिज्ज वाई अ ओविसइ ॥१॥ सावगो कोइ पढमं जिणपडिमाए पइट्ठाणं
करेइ, तत्थ साहुणो आगए दट्ठूण चिंतेइ—जइ ताव इमे भगवंतो अरिहतो पूअं दट्ठुं इंति तदेत्तं ममाउ अलाहि पण्णाहे(एत्ताहे)निच्चमेव
पूअं करेमि,एवं सावगस्स भाववुद्धी भवति,अह न पविसंति संजया,नत्थित्ति विपरिणामो भवति—किं एएसिं पूआ कीरइ से नत्थि,वाइ-
णा य पविट्ठेण इमे गुणा—परवाइनिग्गहं दट्ठुं भवंति—नवधम्माण थिरत्तं,पभावणा सासणे अ बहुमाणो। अभिगच्छंति अ विउसा अवि-

गपूआ य सेभाए ॥ ॥ कम्ह्या, सेयाइत्ति अविग्घपूआए कयाए सपक्खपरपक्खाम इहलोए अ सेअं, इहलोए असिवाइउवद्दवा न य भवंति, परलोए अ तित्थगरपूआए दरिसणसुद्धी निव्वत्तिआ भवति" त्ति कल्पविशेषचूर्णिः, कल्पसामान्यचूर्णौ च–सावगो कोइ जिणपडिमाए पइट्ठवणं करेइ'त्ति पाठ, अथ तिलकाचार्यः प्रवचनपरमार्थानभिज्ञः प्रयोजकप्रत्ययान्तेन प्रतिष्ठापनशब्देन केवलस्य प्रतिष्ठानशब्दस्यैकार्थतां विकल्प्य श्रावकः प्रतिष्ठां करोतीति ब्रूते, परमुभयत्रापि प्रतिष्ठाया अधिकारस्यैवाभावात्, किंतु रथानु यात्रायामेवाधिकारः, यथाहि–अरगमणंति पच्चद्ध, अस्य चूर्णिः–सीसो पुच्छति–अणुजाणेण किं गंतव्व न वत्ति, आयरिओ भणइ–अइ निक्कारण गच्छति सो आणाइणो दोसा, इमेहिं कारणेहिं तत्थ पविसिअव्व, तत्रेति अनुयाने, अनुयानशब्दस्यायमर्थः–अनु–पश्चाद्रथस्य पुरादिस्थानेषु परिभ्रम्यतो यानं–गमनमाचार्यादीनां यत्र पर्वणि तदनुयानं, रथयात्रेत्यर्थः, तत्र कानि कारणानि अ १, 'चेइअ' दारगाहा, सा चेवं–चेइअपूआ रायानिमन्तण सन्नि वाइ धम्मकही। संकिअ पत्त पभावण पवित्तिकज्जा य उच्छाहो ॥१॥त्ति चेइअ-पूआ रायानिमंतणं च दोऽवि दारे एगट्ठे पच्छद्धाएहेइ, पविसतो इमे गुणा भवति–'सद्धा' गाहा, सा चेवं–सद्धा वुड्ढी रण्णो पूआइ थिर णण पभावणया। पडिघाओ अमरयाणं अत्था य कया भवंतित्थ ॥१॥" त्ति कल्प,सन्नित्ति–श्रावको वाइत्ति वादी, एए दोवि दारे एगट्ठे पच्छद्धाएइ, एमेव य सभीणवि जिणपडिमासु पठमपट्ठवणे। मा परवाई विग्घं करिज वाई अओ विसइ ॥१॥त्ति, कंठा,सावओ कोई जिणपडिमाए पइट्ठवणं करेइ'त्ति, कोऽपि, रथयात्राकरणसमर्थो, न सर्वोऽपि,श्रावको–निर्ग्रन्थोपासकः प्रथमम्–आद्यं जिनप्रतिमायाः प्रतिष्ठापनं न्यासमारोपणमितियावत् रथे इति प्रक्रमाद्‌वगम्यं, अन्यथास्यान्यथानुपपत्त्या, नूतने रथे करोति–विधत्ते इति श्रीकल्प चूर्णि', इत्येवमर्थस्तिलकाचार्येण मूलतो नावगतः, अतः परमार्थानभिज्ञ स इति। किंच–निजप्रतिष्ठाकल्पे क्वापि म्लेच्छैः क्वापि

श्राविकया क्वापि देवेनेत्याद्यनियतं वचो भणित्वाऽपि 'न्हायविलित्तु चंदणिणु' इत्यादि दोधिकयोक्तलक्षणः श्रावक एव प्रतिष्ठां करोतीतितिलकाचार्यवचो गर्दभीक्षीरपानकल्पं तच्छ्रोतॄणामिति बोध्यमितिगाथार्थः ॥५०॥ अथ तिलकाचार्यविकल्पितप्रतिष्ठाकल्पस्य मूलमुद्भाव्य दूषयन्नाह—

**दोहगतिगमुवजीविअ पइट्ठकप्पो कुवक्खतिलगेण। रइओ पुव्वायरिएवयणविरोहो महामोहो ॥५१॥**

'दोधकत्रिकं' 'न्हायविलित्तु चंदणिणु गंधसुगंधिअदेहु। परिहाविअ सिअसदसजुअल गुणगणरयणह गेहु ॥ १ ॥ इत्यादि प्रागुक्तं दोधकत्रिकं तिलकाचार्याभिप्रायेण महाशास्त्रं तदुपजीव्य—तच्छरणीकृत्य तिलकाचार्येण प्रतिष्ठाकल्पो रचितः, कीदृशः ?—पूर्वाचार्याणां—श्रीहरिभद्रसूरिप्रभृतीनां वचनानि—तत्कृतप्रतिष्ठाकल्परूपाणि तैः सह विरोधो यत्र स तथा, एकारश्छन्दोऽनुवृत्त्या अलाक्षणिको बोध्यः, यत एवं तस्मात् कीदृशो ?—महामोहो—महान्—अनन्तसंसारहेतुत्वात् गरीयान् मोहो—मिथ्यात्वमोहनीयं यस्माद्, यद्वा महामोहः—अभिनिवेशमिथ्यात्वं,तद्धेतुत्वात् तत्कृतप्रतिष्ठाकल्पोऽपि महामोह एवेतिगाथार्थः ॥५१॥ अथ दोधकत्रिकमधिकृत्यापि कीदृशस्तिलकाचार्य इत्याह—

**दोहगतिगपरमत्थं न मुणइ कह मुणइ गणहराण वयं। रयणायरंगमियरं उस्सग्गववायरयणाए ॥५२॥**

दोधकत्रिकपरमार्थं तिलको न जानाति, तथाहि—प्रतिष्ठाकारस्तावत्कृतस्नानश्चन्दनादिविलेपनेन सुगन्धीकृतदेह इत्यादिविशेषणविशिष्टः श्रावक एव संभवति, न पुनः सूरिः,तस्य स्नानादेर्निषिद्धत्वाद् ,यदागमः—'वयछक्कं कायछक्क' मित्यादि,सिद्धान्तबाधापत्त्या न साधुः प्रतिष्ठाकारः, किंतु श्रावक एवेति तिलकाचार्यस्य कुविकल्पना, सा चैवं तिरस्करणीया—भो तिलकाचार्य ! सामान्यविधिना

विशेषविधेर्बाधितुमशक्यत्वात् बाधक स्याप्यभावात् तत्रैव सम्यक्परिज्ञानाभावः, तथाहि—यद्यपि त्रिविधेन महाव्रतधारिणां महाव्र तिनां शुचित्व स्वभावसिद्धमेवास्ति, तथापि प्रतिष्ठादिप्रयोजनविशेषमुद्दिश्य तावन्मात्रकार्योपयोगि हस्तपादादिधावनलक्षणं लोक- प्रतीतिविषयं शुचित्व त्वापवादिक न सामान्यसाध्वाचारविधिना बाधितु शक्यते, किंतु विशेषविधिना सामान्यविधिर्बाध्यते, 'उत्सर्गादपवादो बलीया'नितिन्यायात्, न चैतदयुक्तं, कार्यविशेषे कारणविशेषस्य सर्वत्राप्युपलम्भात्, अत एव किंचि उस्सग्ग- सुत्त१ किंचि अववायसुत्त२ उस्सग्गववाइअं३ अववाउस्सग्गिअं४ उस्सग्गुस्सग्गिअं५ अववायाववाइअं ६ ति, तत्थ इमं उस्सग्ग सुत्तं-गोअरग्गपविट्ठो अ न, निसीइज्ज कत्थई। कहं च न पबंधिज्जा, चिट्ठित्ताण व संजए॥१॥१, इमं अववाइअं—कप्पइ निग्गंथाण वा निग्गं- थीण वा आमे तालपलंबे भिण्णे पडिगाहित्तएत्ति२, उस्सग्गववाइय—णो कप्पइ निग्गंथाण२ वा राओ विआले वा सिज्जासंथारय पडि ग्गाहित्तए, नन्नत्थ एगेण पुव्वपडिलेहिएणं सिज्जासंथारएणं३, अववायउस्सग्गिअं—कप्पइ निग्गंथाण वा२ पक्के तालपलंबे भिन्ने पडि गाहित्तए, सेऽवि विहिभिण्णे, णो चेव ण अविहिभिण्णे, अववाएण गहणे पत्ते अविहिभिन्नस्स पडिसेह करेइ एस उस्सग्गो४, अति, से आहच्च उवायणाविए सिआ जो त भुंजति भुंजंत वा साइज्जति५, अववायाववाइअ जेसु अववाओ सुत्तेसु निबद्धो तेसु क्षीणपूर्णो उ०१६ इतिपदविषयप्ररूपना, सा च तिलकाचार्यमते व्यर्थैव स्यात्, तस्मात् केवलं किंचिदुत्सर्गपक्षमपवादपक्षं वा दृष्ट्वैव न प्रवर्त्तनीयं निवर्त्तनीयं वा, किंतूत्सर्गापवादघटितं तदर्थमालोच्यैव, यदागमः—"सुत्तस्स मग्गेण चरिज्ज भिक्खू, सुत्तस्स अत्थो

जह आणवेइ'त्ति (५१०*) दशवैकालिके, तद्वृत्तिः—यथा किं बहुना ?, सर्वत्रैव सूत्रस्य मार्गेण चरेद्भिक्षुः, आगमोद्देशेन प्रवर्त्ते-
तेति भावः,तत्रापि नौघत एव यथाश्रुतग्राही स्यात्,अपितु सूत्रस्यार्थः पूर्वापराऽविरोधी तंत्रयुक्तिघटितः पारमार्थिकोत्सर्गापवादगर्भो
यथाऽऽज्ञापयति–नियुङ्क्ते तथा प्रवर्त्तेत, नान्यथे''ति दश० वृ० । तथा ''जं सुअमहिज्जइ बहुं सुत्तत्थं च निउणं न याणेइ । कप्पे वव-
हारंमी न सो पमाणं सुअहराणं ॥१॥ति व्यवहारवृत्तौ,न चान्यत्र स्यादपवादः, परं शुचित्वादावपवादो न भविष्यतीति शङ्कनीयम्,
उत्सर्गमात्रस्याप्यपवादसापेक्षत्वाद्, यदागमः–''जावइआ उस्सग्गा तावइआ चेव हुंति अववाया । जावइआ अववाया उस्सग्गा
तेत्तिआ चेव ॥१॥''त्ति, नवरं मैथुनवर्जः,यदुक्तं–''कामं सव्वपएसुवि उस्सग्गववायधम्मया जुत्ता । मोत्तुं मेहुणधम्मं न विणा सो
रागदोसेहि ॥१॥''ति, यच्चोक्तं–कनककङ्कणमुद्रिकादिपरिधानं न युक्तं तदप्ययुक्तं, यतस्तावन्मात्रकालं परिधीयमानं भूषणं न वि-
भूषणहेतुः न वा परिग्रहः, तथा परिणामाभावात्, परिणामविशेषेण तु नाम्नोऽप्यन्यथाभूतत्वाद्, यथा रथादिकं तीर्थकृद्वन्दन-
निमित्तं प्रगुणीकृत्य प्रवर्त्तितं सत् धर्मयानमुच्यते, साम्प्रतं तु यद्यपि चन्दनरसेन तदाकृतयो यथास्थानं विधीयन्ते तथापि काल-
विशेषे पुरुषविशेषस्य तथा तत्परिधानमप्यस्माकं सम्मतमेव, यच्चोक्तं–'साधूनां न रूपवत्त्वं', तदप्यसारं, रूववत्त्वेन साधुनेपथ्यस्यैव
प्रतिपादनाद्, यदागमः–'चत्तारि पुरिसजाया पं०,तं०–रूवसंपन्ने नाममेगे नो गुणसंपन्ने४' तद्वृत्तौ–रूपं सुविहितसाधुनेपथ्यरूपं
भणितं, तेन तृतीयभङ्गे 'रूवसंपन्नेवि गुणसंपन्नेवि'त्तिलक्षणे सुविहितनेपथ्यसनाथः साधुरुक्तः, चतुर्थे तु 'नो रूवसंपन्ने'त्तिलक्षणे
गृहस्थादिरुक्तः,तेन रूपसंपन्नोऽपि साधुरेव,न गृहस्थ इतिबोध्यं,यत्तु सर्वप्रतिष्ठाकल्पेषु यत्प्रतिष्ठाकारकलक्षणमुक्तं तत् साधुषु न घटते
अतः श्राद्ध एव प्रतिष्ठाकारो युक्त इति तिलकाचार्येणोक्तं तत्र स एव तावदित्थं प्रष्टव्यः,ननु भोः तिलकाचार्य ! यान् प्रतिष्ठाकल्पान् वा-

दृमायपोपवीम्य त्वया प्रतिष्ठाकल्पाभासो विहितस्तेषु प्रतिष्ठाकल्पेषु यथा प्रतिष्ठाकारकलक्षणमुक्त दृष्ट तथा लक्ष्यतया कश्चित्प्रतिष्ठाका-
रोऽपि दृष्टः श्रुतो नवा ?, दृष्टश्चेत् स किं साधुः श्रावको वा ?, नान्त्यः,क्वापि श्रावकेण प्रतिष्ठा कृतप्र्येत्येवंरूपेणानुपलम्भात् , साधुश्चेत्तर्हि
प्रतिष्ठाकल्पोक्तलक्षणोपेतेन साधुना प्रतिष्ठा कर्त्तव्येत्येव ब्रुवाणाः प्रतिष्ठाकल्पकारकाः श्रीहरिभद्रसूरिप्रभृतयोऽशुद्धभाषका इति तु पाश-
पमतलभ्यमानैस्त्वादिपदृभिरपि वक्तुमशक्यत्वात् , शुद्धभाषकैस्तैर्लक्ष्यतयोक्तस्यापि साधो' प्रतिष्ठाकारलक्षणमपहस्याऽलक्ष्यभूते'ऽपि
श्रावके तदारोपयतस्तवैवाऽशुद्धभाषित्वात् स्वास्येनैवात्मनः कृपाणिकातिलकत्वमुपपादितमिति बोध्य, किंच-लक्ष्यानुसारेण लक्षण-
कल्पना ज्यायसीति सर्वप्रामाणिकाभिमतं, परं लक्षणानुसारेण लक्ष्यकल्पनाकारी रङ्कस्त्वयि गृहे एव नृत्यन्ती दृष्टा, तस्माद्यथा
द्वयोरपि लक्ष्यलक्षणयो' प्रतिष्ठाकल्पोक्तयोर्मध्यात् साधुलक्षण धर्मिणं परित्यज्य प्रतिष्ठाकारलक्षणं धर्ममन्यत्र रोपयसि तथा यथा-
रुचि किञ्चिदन्यदेव प्रतिष्ठाकारलक्षणं विकल्प्य प्रतिष्ठाकारे साधावेव किमिति नारोपयसि ?, धर्मिपरित्यागापेक्षया धर्मपरित्यागे
लाघवात्, धर्म्यंशेऽन्यतीर्थिकैरपि सह विप्रतिपत्तेरभावात्, तथाहि—यथा हरिहरादयोऽन्यतीर्थिकैर्देवत्वेनाभ्युपगताः जैनैस्तु न
तथा, परमुभयेषामपि धर्मितया तेऽभिमता एव, एवमृषभादयोऽपि जैनैर्देवत्वेनाभ्युपगताः, शेषैस्त्वन्यथेति, धर्मितया तूभयेषामप्य
भिमता एव, नहि लोकेऽपि कोऽप्यतिमूर्खोऽपि पुरुषो स्वदृशामालोक्य पादच्छेदं विधत्ते, यतः शरीरानुमानेन शय्यापा अन्यथाक-
रण युक्त, न पुन शय्यानुसारेण शरीरावयवानामपि न्यूनताकरणं दृष्टं श्रुतं वा, त्वं तु ततोऽप्यधिको, यदन्यथैव विधायान्यानभ्युप-
दिशसि,किंच-'न्हाणविलित्तउ चंदणिसु' इत्यादिदोधकत्रिकेण व्यक्तया अनुक्तोऽपि भाषकः कल्पितस्तर्हि "कंकणमउडसहरकर सुइ-
भरभजिअदु । मदनमज्झविअवरयजुअल जणवद्धह सह मेहु ॥१॥ सुरनरपहुप्पयपउम छाइनेवत्थसणाहु । सुहपयंत पसत्थमणु, कन्नर

पइट्ठं साहु ॥२॥ इति दोधकद्विकेन साक्षादुक्त एव साधुः कथं न स्वीक्रियते ?,किंच-श्रावकोऽपि त्वया द्वादशव्रतधारी तद्दिनब्र-
ह्मचारी कृतोपवास इत्यादिविशेषणैर्गुणरत्नालङ्कृतो भणितः, सोऽपि यदि विशेषतः संवरवान् परिगृह्यते तर्हि कृतस्नानचन्दनविले-
पनकनककङ्कणमुद्रालङ्कृतशरीराद्यपेक्षया अकृतस्नानादिकोऽभूषितश्च वरीयान्, अथ प्रतिष्ठानिमित्तं स्नानविलेपनादिकं न संवर-
मालिन्यहेतुः,किंतु तत्कार्यप्रसाधकत्वेन गुण एवेति चेत् तर्हि साधुना किमपराद्धं ?,तावत्कार्यमात्रोपयोगि शौचादिकर्म कुर्वाणोऽपि
साधुः साधुरेव, तत्कृतचारित्रमालिन्याद्यसंभवाद्, एतेन दमयन्त्यादिनिदर्शनमपि निरस्तं, श्राविकायामुक्तलक्षणलक्षणस्याप्यसं-
भवात्, नहि श्राविका सदशवस्त्रयुगलवत्येव स्यात्, कञ्चुकाद्यभावे तीर्थकृदाशातनापत्तेः, किंच-भोः तिलकाचार्य ! शास्त्रं तु
दोधकत्रिकं तदप्यज्ञातकर्तृकं, तच्छरणीकृत्य श्रीहरिभद्रसूरिप्रमुखवचांस्यप्रमाणीकुर्वाणस्य तव दाक्ष्यं त्वय्येव विश्रान्तं भवतु,
मान्यत्रेत्यस्मदाशीः । एवं दोधकत्रिकाभिप्रायमप्यजानानस्तिलकाचार्य उत्सर्गापवादरचनया रत्नाकरवत् समुद्रवद्गम्भीरमलब्ध-
मध्यं गणधरवचोऽर्थात्तदभिप्रायं कथं जानाति ?, न कथमपीत्यर्थः, तस्मादलमालजालेन त्वत्प्रतिष्ठाकल्पेनेति । एतेन शतपदी-
कारोक्तमपि निरस्तं बोध्यं, तत्रापि तिलकाचार्यकृतप्रतिष्ठाकल्पसमानकल्पनाया विद्यमानत्वाद्, अत्रैवंविधकिञ्चिद्विस्तरकथनेन
राकासार्द्धराकाञ्चलिकागमिककटुकवन्ध्यपाशलक्षणाः षडपि कुपाक्षिकास्तिरस्कृताः,तेषां प्रायस्तीर्थप्रद्वेषेण साधुप्रतिष्ठानिषेधपरत्वेन
तिलकाचार्यकृतप्रतिष्ठाकल्पाभास एव शरणमभूत्, स चागमयुक्त्या तिरस्कृत इति गाथार्थः ॥५२॥ अथ गृहिप्रतिष्ठायां प्रसङ्गतो
लोकप्रसिद्धमपि दोषमाह—

**न मुणइ मूढो पडिमा पइट्ठिआ सावएण तप्पुरओ। इरिआपमुहं किरिअं कुणंति कह साहुणो निउणा ? ॥५३॥**

मूढ'-पूर्वापरविचारणाशून्यश्चन्द्रप्रभाचार्यो न जानाति, यदितिगम्य, यदि भावेन प्रतिष्ठिता प्रतिमा जगत्पूज्या स्याचर्हि तत्पुरत -तस्या'-श्रावकप्रतिष्ठिताया' प्रतिमाया अग्रे, तां निश्रीकृत्येत्यर्थः, निपुणा-दक्षाः साधव ईर्याप्रतिक्रान्तिपूर्वकविधिवद् देववन्दनादिकां क्रियां कथं कुर्वन्ति ?, श्रावकप्रतिष्ठितस्थापनाचार्यस्य पुरत इव तस्या अपि पुरतो न कुर्वन्तीत्यर्थः,अन्यथा सूरिपदस्थापनादरपि श्रावककर्त्तव्यताऽऽपत्तेरितिगाथार्थः ॥५३॥ इति चन्द्रप्रभाचार्यस्य प्रथमप्ररूपणाविषयीभूतश्राद्धस्यप्रतिष्ठा निराकृता, अथ मूलप्ररूपणादोषमुपसंहरन्नेवापरदोषोत्पत्तये हेतुमाह—

एप आगमजुत्तिं अवधीलिअ अण्णहा कहितस्स। नय लोओ अणुरत्तो अण्णपिअ सो विचिंतिज्जा ॥५४॥

एव-प्रागुक्तप्रकारेणागमयुक्तिं-सिद्धान्तयुक्तिमवहील्य-अविगणय्यान्यथा-श्रावकप्रतिष्ठालक्षणं विपरीतमार्गं कथयति चन्द्रप्रभाचार्ये लोको नानुरक्तो, तद्वचसि सविश्वासन रागवान् जातः,न चन्द्रप्रभाचार्यवचो जात इत्यर्थः, पश्चादितिगम्यं, पश्चाच्छ्रावकप्रतिष्ठाव्यवस्थापनेन कोऽपि जनस्तीर्थात् पृथग्भूत्वा मदायत्तो न संपन्न इति विचिन्त्य 'अन्नंपि'त्ति अपिरेवार्थे, अन्यदेव, च पुनरर्थे, स चन्द्रप्रभाचार्यो विचिन्तयेत्, स्वायत्तपृथक्समुदायकरणार्थं मयाऽन्यत्किमपि कल्प्यमितिगाथार्थः॥ ५४ ॥ अथ तथा विचिन्त्य यत्कृत तदाह—

पच्छा पुण्णिमपक्खिअमयममिनिवेसओ अ सठविअ। संघे निवारयते सघेण तओ कओ बाहिं ॥५५॥

पश्चात्-प्रागुक्तपर्यालोचनतोऽनु-पश्चादन्यदाऽवसरविशेषे विक्रमत एकोनषष्ट्यधिकैकादशशतसंवत्सरातिक्रमे ११५९ पूर्णिमापाक्षिकमभिनिवेशत'-अभिनिवेशमिथ्यात्ववशात्संस्थापित, मूढानां पुरस्तात्प्ररूपितमित्यर्थ', कस्मिन् सति ?-अविच्छिन्नपरम्परायाते

सङ्घे—तीर्थे निवारयति, भो इत्थं मा प्ररूपयेत्यादिवचोभिराक्रोशं ददति, ततः—तस्मात् सङ्घेन बाह्यः कृतः, सङ्घोक्तमनङ्गीकुर्वन् तिरस्कृत इति गाथार्थः ॥५॥ अथ पूर्णिमापक्षव्यवस्थापने कुयुक्तिमाह—

**पक्खस्स मज्झमट्ठमि मासस्स य मज्झ पुण्णिमं भणिअं। तेणं पुण्णिमपक्खिअमेवं जुत्तिंपि जंपेइ ॥५५॥**

अष्टमी पक्षस्य मध्यं मासस्य च मध्यं पाक्षिकं भणितं, तेन कारणेन पूर्णिमापाक्षिकम्, एवं युक्तिं—युक्त्याभासं कुयुक्तिमिति यावत्, जल्पतीति गाथार्थः ॥५६॥ अथ चन्द्रप्रभाचार्योक्तां कुयुक्तिं प्रतिबन्ध्या दूषयितुमाह—

**जइ एवं चउमासं चउहिं मासेहिं तेहिं तिगुणेहिं। बारसमासा वच्छरपत्तीऽविअ पुण्णिमासु हवे ॥५७॥**

यद्येवं त्वदुक्तप्रकारेण पूर्णिमायां पाक्षिकं तर्हि चतुर्भिर्मासैश्चतुर्मासकं, तैश्चतुर्भिर्मासैस्त्रिगुणैर्द्वादश मासाः स्युः,तथा च पूर्णिमासु, अपिः एवार्थे, पूर्णिमास्वेव वत्सरप्राप्तिः—संवत्सरप्राप्तिर्भवेदिति गाथार्थः ॥५७॥ अथानन्तरोक्तप्रतिबन्ध्या यज्जातं तदाह—

**आसाढपुण्णिमाए कत्तिअमासे व अहव फग्गुणए। पज्जोसवणा जुत्ता तुम्भ मए न उण भद्दवए ॥५८॥**

तथा च पर्युषणापि आषाढपूर्णिमायां युक्ता स्याद्, अथवा 'मार्गशीर्षो वत्सरादि'रिति नाममालावचनात् कार्त्तिकपूर्णिमायाम्, अथवा लौकिकटिप्पनकं चैत्रादिमासकं भवति तदपेक्षया फाल्गुनपूर्णिमायां वा पर्युषणा युक्ता, हे चन्द्रप्रभाचार्य तव मते, न पुनर्भाद्रपदमासे, तत्रापि चतुर्थ्यां पर्युषणाऽयुक्तेतिगाथार्थः ॥५८॥ अथ प्रतिबन्ध्या उपसंहारमाह—

**तम्हा जह वच्छरिअं भद्दवए पक्खिअंपि चउदसिए। इअ सासणसंकेओ अणाइसिद्धो मुणेअव्वो ॥५९॥**

*तस्मात्कारणाद्यथा* वत्सरिकं—सांवत्सरिकं पर्युषणापर्व भाद्रपदे तथा पाक्षिकमपि चतुर्दश्याम् इति—अमुना प्रकारेण

'प्रसनसंकेतः' ज्ञापिकादिभावसङ्केतवचनप्रवचनसङ्केतोऽनादिसिद्धो ज्ञातव्य', न पुनश्चतुर्थ्यां पर्युषणानयनवत् केनचिदाचार्येण प्रवृत्त्या नियमितः, क्वापि प्रवचने तथानुपलम्भात्, यच्चाचार्येणापि प्रवर्तितं तीर्थसम्मतं च तत्क्वापि प्रकरणादिप्रवचने प्रतीतमेव लभ्यते, यथा निशीथचूर्णिठाणावृत्तिकालकाचार्यकथाप्रभृतिषु श्रीकालकसूरिणा पञ्चमीतश्चतुर्थ्यां पर्युषणापर्व प्रवर्तित। तथा "तवसेण य चउम्मासिआणि चउद्दसीए आयरिआणि, अण्णह आगमुत्ताणि पुण्णिमाए"त्ति इत्यादिवचसा चातुर्मासिकं चतु र्दश्यामाचरितमित्युपलभ्यते, न पुनः क्वापि तवसेण य पक्खिअमाणीत्यादि, यत्तु क्वापि ठाणावृत्तौ 'तवसेण पक्खियाऽपि चउद्दसीए' इत्यादि लिखितं दृश्यते, तत्र राकापक्षेन केनचित्पाठः परावृत्य लिखितो, जीर्णादर्शेषु तथानुपलम्भादित्याद्यस्मदीयचिरन्तनाचा- र्यैरपि कुपक्षकौशिकसहस्रकिरणे ज्ञापितमस्ति, तत्साक्षिकास्तु धर्मोपदेशमालावृत्ति श्रीकालकाचार्यकथाः सर्वा अपि, यतस्तासु वादीयपुस्तकलिखितासु चिरन्तनासु पत्तनीयपुस्तकभाण्डागारसंबन्धिनीषु बह्वीषु "तवसेण य चउम्मासिआणि चउद्दसीए आय- रिआणी'ति लिखितमस्ति, किंच पाठपरावृत्त्यैकज्ञतमपि "अण्णह आगमुत्ताणि पुण्णिमाए"त्ति चरमेव, यतो यदागमे पूर्णि मायामुपलभ्यते तस्यैव चतुर्दश्यामानयनं युक्तं, यथा पञ्चमीतश्चतुर्थ्यां पर्युषणानयनम्, आगमे च पूर्णिमायां चतुमासकस्यैवोप लम्भो, न पुनः पाक्षिकस्य, यतः 'से ण लेवए गाहावई' इत्यादिद्वितीयाङ्गसूत्रस्य वृत्त्येकदेशे "तथा पौर्णमासीषु च तिसृष्वपि चतुर्मासकतिथिष्वित्यर्थः" इत्यप्रतनगाथायां सम्मतितया धृतो वक्ष्यतेऽत्र,यदि पूर्णिमायां पाक्षिकमभविष्यत्तर्हि] पूर्णिमात्रिकं इत्यकारो नाप्रदीप्यत्, सकलेऽप्यागमे चतुर्मासकपूर्णिमाव्यतिरिक्तपूर्णिमासु चतुर्थतपोऽपि व्यवस्थया नास्तीति प्रस्तुताभिप्रायो पर्या- लोच्यमितिगाथार्थ ॥५९॥ अथ चतुर्दश्यां पाक्षिकमित्यत्र चतुर्दशीपाक्षिकयोः परस्परं पर्यायतायां हेतुमाह—

जत्थ य पक्खिअसद्दो चउद्दसिसद्दो न तत्थ निद्दिट्ठो। निअयतवायभिहाणे अण्णुण्णं तेण पज्जाओ ॥६०॥

जत्थ य पक्खिअसद्दो चउद्दसिसद्दो न तत्थ निद्दिट्ठो। निअयतवायभिहाणे अण्णुण्णं तेण पज्जाओ ॥६०॥

यत्र च व्यवहारावश्यकचूर्ण्यादौ पाक्षिकशब्दस्तत्र चतुर्दशीशब्दो नास्ति, चकाराद्यत्र चतुर्दशीशब्दो न तत्र पाक्षिकशब्दः, कुत्र इत्याह–'निअय'त्ति नियततपआद्यभिधाने, चतुर्थादिनियततपोवक्तव्यतायामित्यर्थः, तेन कारणेन 'अण्णुण्णं'ति पाक्षिकचतुर्दशीशब्दयोरन्योऽन्यं–परस्परं भावनिर्देशात् पर्यायः–पर्यायता इति गाथार्थः ॥६०॥ अथ पूर्णिमा पाक्षिकं न भवतीत्यत्र युक्तिमाह—

चउमासपुण्णिमातिगमुवइट्ठं बीअअंगि लेवस्स। एवं चेव विवेगो चउदसिसद्दंमि नो दिट्ठो ॥६१॥

द्वितीयाङ्गे–सूत्रकृदङ्गनाम्न्यङ्गेऽर्थात्तद्वृत्तौ लेपस्य–लेपनाम्नः श्रावकस्यार्थात्तदधिकारे चतुर्मासिकपूर्णिमात्रिकमुपदिष्टं–कथितम्, 'एवं चेव'त्ति एवं प्रकारेण चतुर्दशीशब्दे विवेकः–पृथक्करणं न दृष्टः क्वाप्यागमे, एताश्चतुर्दश्यश्चतुर्थादितपोनियता इत्यादिरूपेण न दृक्पथमागताः, तस्मात्पूर्णिमायां पाक्षिककृत्यं–चतुर्थतपःपाक्षिकातिचारालोचनादिकं न भवतीत्यर्थ इति गाथार्थः ॥६१॥

अथ येषु ग्रन्थेषु पाक्षिकशब्दस्तेषु च न चतुर्दशीशब्दस्तन्नामग्राहमुपदर्शयन्नाह—

ववहारवित्तिचुण्णीपीढि तह निसीहभासमाईसुं। जिणबिंबसाहुवंदणुवलिक्खिअं पक्खिअं भणिअं ॥६२॥

व्यवहारवृत्तिचूर्ण्योः पीठे तथा निशीथभाष्यादिषु 'जिनबिम्बसाधुवन्दनं' चैत्यपरिपाटी साधुवन्दनं च, उपलक्षणाच्च चतुर्थतपः पाक्षिकप्रतिक्रमणं च, तैरुपलक्षितं–चिह्नीकृतं पाक्षिकनाम्ना पर्वदिनं भणितं–तीर्थकृदुपदिष्टं, तथाहि–"किइकम्मस्स अकरणे काउस्सग्गे तहा अपडिलेहा। पोसहिअतवो अ तहा अवंदणे चेइसाहूणं॥१॥" तत्र पोसहिअतवोत्ति पदं व्याख्यानयति-चउत्थछट्ठमकरणे अट्ठमि

पक्खसउमासिवरिसे आ उह गुरु लहुगा गुरुगा अपवदणे चेइसाहूणं ॥२॥ अत्र यथासङ्ख्यं पदयोजना, सा चैवम्—अष्टम्यां चतुर्थस्याकरणे 'पखे' पाक्षिके चतुर्थस्याकरणे चतुर्मासे षष्ठस्याकरणे सांवत्सरिके अष्टमस्याकरणे प्रायश्चित्त, तथा एतेष्वष्टम्यादिषु दिवसेषु चैत्यानामन्यान्यवसतिगतसुसाधूनां चावन्दने प्रत्येक प्रायश्चित्त, चक्षम्वेन, "एएसु चेव चेइआ साहुणो वा जे अण्णाए वसहीए ठिआ ते न वंदति पच्छित्त"मिति, व्यवहारपीठचूर्णौ,तथा 'जो पज्जोसवणाए इत्तरिअंपाहारं आहारेइ आहारितं वा साइज्जति'त्ति श्रीनिशीथसूत्रे उद्दे० १०"इत्तरिअंपाहारं पज्जोसवणाए जो उ आहारे। तयभूइपिंदुमादी सो पावति आणमादीणि ॥१॥ उत्तरकरणं एगग्गया य आलोअ चेइवन्दणया। मगल धम्मकहाविअ पवेसु अ तवगुणा हुंति ॥२॥ अट्ठमछट्ठचउत्थं संवच्छरि चाउमासि पक्खे अ। पोसहिअतवे भणिए बितिअ असहू गिलाणे अ ॥३॥ इतिश्रीनिशीथभाष्ये, तत्र "इत्तरिअ" गाहा, इत्तरिअ नाम थोवं एगसित्थमवि अदलवणादि वा,अहवा आहारे 'तयामित्तं' खादिमे मिरीमचुण्णगादि 'भूतिमित्त' भूतिरिति यत्प्रमाणमङ्गुष्ठप्रदेशनीसंदशकेन गृह्यते, पानके बिन्दुमात्रमपि, आदिग्रहणतो सादिमंपि थोवं जो आहारेति पज्जोसवणाए आणादिदोसे पावेति,पवेसु वि एवं करितस्स इमो गुणो भवति—"अट्ठम"गाहा,पज्जोसवणाए जो अट्ठम न करेति चाउम्मासिए छट्ठ न करेति पक्खिए चउत्थ न करेति तो पच्छित्त, तम्हा एते दोसा तम्हा जहाभणिओ तवो कायव्वो, 'बितिअ'ति न करेज्जावि अववायस्स, असहू न करेज्जा,गिलाणो वा न करेज्जा गिलाणपडिआरगो वा, सो उववासं वेयावच्च च काउं असमत्था, एवमादिएहिं कारणेहिं पज्जोसवणाए आहारेंतोऽवि सुद्धो"त्ति श्रीनिशीथचूर्णौ उ० १०, आदिशब्दादावश्यकचूर्णिरपि, यथा—पडिक्कमणं दसिअं राइअं च, दिवसओ देवसिअस्स राओ राइअस्स पक्खिअं पक्खिअस्स चाउम्मासिए चाउम्मासिअस्स संवच्छरिए संवच्छरिअस्स"त्ति, एवमन्यत्रापि यत्र क्वापि पाक्षिककृत्ये

पाक्षिकप्रतिक्रमणादि तद्विशिष्टः पाक्षिकशब्दनिर्देशो न तत्र चतुर्दशीशब्द इतिगाथार्थः॥६२॥ अथ पाक्षिककृत्योपलक्षितचतुर्दशीश-
ब्दप्रतिपादकग्रन्थसम्मतिप्रदर्शनाय गाथामाह—

आवस्सयचुण्णीए महानिसीहे अ पक्खचुण्णीए। पक्खिअतवपमुहेहिं जुत्तावि चउद्दसी वुत्ता ॥६३॥

श्रीआवश्यकचूर्णौ श्रीमहानिशीथे पाक्षिकचूर्णौ च पाक्षिकतपःप्रमुखैर्युक्ता,अपिरेवार्थे युक्तैव,चतुर्दशी 'वुत्त'त्ति उक्ता,
तथाहि—"अट्ठमिचउद्दसीसु अरहंता साहुणो अ वंदेअवा" श्रीआवश्यककायोत्सर्गनियुक्तिचूर्णौ, तथा 'संते बलवीरि-
अपुरिसक्कारपरकमे अट्ठमिचाउद्दसीणाणपंचमीपज्जोसवणाचाउम्मासिए चउत्थछट्ठछट्ठे न करिज्जा पच्छित्तं''ति श्रीमहानिशीथेऽध्य-
यने७,तथा "इच्छामि खमासमणो! पिअं च मे' इत्यादि,गुरू भणइ—एअं पोसहिअत्ति अट्ठमिचउसद्दसिउववासकरणं इति पाक्षि-
कचूर्णौ, तथा विक्रमतः सप्तसप्तत्यधिकचतुःशतसंवत्सर४७७संजातेन श्रीधनेश्वरसूरिणा श्रीशत्रुञ्जयमाहात्म्ये तृतीयसर्गे चतु-
र्दश्यामेव पाक्षिकमनादिसिद्धमुक्तं,तथाहि—"यावज्जीवं विशेषेण, सोऽष्टमीं च चतुर्दशीं। प्रत्याख्यानपौषधादितपसाऽऽराधयत्यलम्
॥१॥ तथा—"स चाष्टमीचतुर्दश्योः,पर्वणोस्तपसः क्वचित्। चाल्यते निश्चयान्नैष, कृतयत्नैः सुरैरपि ॥१॥ तथा—'जगौ नृपतिरप्येवं,
शृणु रम्भे! महाव्रतम्। चतुर्दश्यष्टमीपर्व,तातेनोक्तं समस्ति नः॥१॥' तथा 'त्रयोदश्यां च सप्तम्यां, लोकबोधाय भामिनि!। अयं
हि पटहोद्घोषो, मदादेशात्प्रजायते ॥१॥ चतुर्दश्यष्टमीपर्व, त्रैलोक्ये देवि! दुर्लभम्। करोति यो जनो भक्त्या, स याति परमं
पदं ॥२॥ तथा—अष्टम्यां पाक्षिके पक्षिमृगसिंहादिशावकाः। अप्याहारं न गृह्णन्ति, येऽर्हद्धर्मेण वासिताः ॥ १ ॥ तथा—चतु-
र्दश्यष्टमीपर्व,दृढधर्मः स धर्मवान्। नित्यमाराधयामास, श्रीयुगादिजिनाङ्घ्रिवत् ॥१॥ इत्यादयोऽनेके श्लोका भिन्नाधिकारप्रतिबद्धाः,

तेष्वपि यत्र पाक्षिकशब्दो न तत्र चतुर्दशीशब्दो, यत्र च चतुर्दशीशब्दो न तत्र पाक्षिकशब्द', अतोऽनयो' परस्परपर्यायतैवेति चतुर्दश्यां पाक्षिकशब्दस्य सङ्केतोऽनादिसिद्ध एव। तथा 'सागरचंदो कमला सागरचंदो अट्ठमिचउद्दसीसु सुण्णघरेसु मसाणेसु एग-राइं पडिमं ठाति" श्रीआव० चूर्णौ, तथा "चपाए सुदंसणो सिट्ठिपुत्तो अट्ठमिचउद्दसीसु चच्चरेसु उवासगपडिमपडिवज्जति, सो महादेवीए पत्थिज्जमाणो निच्छइ"त्ति श्रीआव० कायोत्सर्गनिर्युक्तिचूर्णौ, तथा "सव्वेसु कालपव्वेसु सुपसत्थो जिणमए जहा जोगो। अट्ठमिचउद्दसीसु अ नियमेण हविज्ज पोसहिओ ॥१॥ श्रीआव० चूर्णौ, क्वचिच्च अट्ठमिपन्नरसीसु अपि पाठस्तत्रापि ठाणाङ्गवृत्तिग तपाठवत् कृष्णपाक्षिकविधान संभाव्यत, यद्वा पन्नरसीति पद चतुर्दश्या उपलक्षकम्, अन्यथा 'से णं चाउद्दसिअट्ठमिपुण्णमासिणीसु परिपुण्णं पोसहं सम्मं अणुपालित्ता भवती"ति श्राआवश्यकचूर्णौ श्राद्धप्रतिमाधिकारे भणितं तेन सहास्या गाथाया विसंवाद स्यात्, यद्वा भाद्रसितपञ्चमीतोऽपरभाद्रसितपञ्चम्यां संवत्सरवत् पूर्वचतुर्दशीतो द्वितीयचतुर्दश्यां पञ्चदशदिनसंभवात् पञ्चदशीश ब्दन चतुर्दश्येव वाच्या, अन्यथा निनदासश्रावकस्यातिव्यतिकरालापकेन सह संवादो न स्यात्, तथाहि—फग्गुरक्खिती किणिऊण दिज्जति, एग पोसिअति, सो अ सावओ अट्ठमिचउद्दसीसु उववासं करेइ, पुत्थय च वायइ, तेऽवि त सोऊण भद्दया जाया उवसंता सण्णि जो, जदिवसं सावओ न जिमेइ तद्दिवसं तेवि न चरंति"त्ति श्रीआवश्यकपरीषहनिर्युक्तेः चूर्णौ, श्रीहारिभद्रीयवृत्तौ च, एतेन "तवसेण चउमासिआणि चउदसीए आयरिआणि, अण्णहा आगमुत्ताणि पुण्णिमाए"त्ति सम्यक्पाठे विद्यमानेऽपि कश्चित् 'तवसेण य पारिसआइं चउद्दसीए आयरिआणि'त्ति पाठ इत्थं पूर्णिमापाक्षिकवक्ताऽपि व्युत्सत्ता, प्रवचने पूर्वापरसंबन्धेन पर्यालोच्यैव विचा-रणाया धोदयमत्वात्, यदुक्तम्—"पुव्वावरेण परिभाविऊण सुत्तं पयासिअव्वत्ति। ज पयणपारतंतं एअं धम्मत्थिणो लिंगं ॥१॥"ति॥

सा पर्यालोचना त्वेवम्–"अण्णह आगमुत्ताणि पुण्णिमाए"त्ति पदं प्रवचनेन सङ्गतीक्रियमाणं यदेत्रागमे पूर्णिमायामुपलभ्यते इत्यादि प्रागुक्तं बोध्यं, किंच–चतुर्थतपश्चैत्यपरिपाटीप्रमुखपाक्षिककृत्यविशिष्टायाः पूर्णिमायाः क्वाप्यागमेऽनुपलम्भेन तवसेण पक्खिआइणि चउद्दसीए आयरिआणि'त्ति वाक्यं, "अण्णह आगमुत्ताणि पुण्णिमाए"त्ति पदेन सह अग्निना सिञ्चेत्यादिवाक्यवदसङ्गतमेव स्यात्, तस्मात् 'तवसेण य चउम्मासिआणि चउद्दसीए आयरिआणि'त्ति जीर्णपाठ एव स्वभावसिद्धः, क्षोदक्षमत्वात्, पूर्णिमायां चतुर्मासिकस्यैव सिद्धान्तसिद्धत्वात्, तथासिद्धत्वं च 'तम्हा दोसदेहिं'त्ति वक्ष्यमाणगाथाव्याख्यायां द्वितीयाङ्गसंमत्या दर्शयिष्यते, किंच–'आगमुत्ताणि पुण्णिमाए'त्ति पदं पूर्णिमापाक्षिकाभिप्रायेण प्रमाणीक्रियते तर्हि पूर्णिमातः पूर्णिमायां मासेन संभवात् मासिकं वक्तव्यं स्यात्, न पुनः पाक्षिकमित्यलं प्रपञ्चेनेतिगाथार्थः ॥६३॥ अथानन्तरोक्तगाथायामुत्तरार्द्धेन यदुक्तं तस्य तात्पर्यमाह, अथवाऽनन्तरोक्तगाथाद्वयस्य तात्पर्यमाह—

तेणं चउद्दसीए पक्खिअसद्देण होइ पज्जाओ। न पुणो पुण्णिमदिवसे तवपमुहं पक्खिअं कज्जं ॥६४॥

येन कारणेन पाक्षिककृत्यविशिष्टा चतुर्दश्यागमे भणिता, अथवा येन गाथाद्वयोक्तसम्मतिप्रकारेण पाक्षिकचतुर्दशीशब्दयोः पर्यायवाचितोक्ता, तेन कारणेन चतुर्दश्याः पाक्षिकशब्देन पर्यायो भवति,न पुनः पूर्णिमादिवसे तपःप्रमुखं पाक्षिककृत्यं, भणितमागम इति गम्यं, तेन कारणेन पूर्णिमादिवसे पाक्षिकशब्देन पर्यायो न भवतीत्यत्रापि संबध्यते इति परमार्थ इतिगाथार्थः॥६४॥ अथ राकारक्तः शङ्कते—

अह सावयअहिगारे चउपव्वीमज्झगत्तिकाऊणं। कप्पिज्जइ निअमेणं तवपमुहो पक्खिओऽवि विही ॥६५॥

अथ भावकमधिकारे च चतुष्पर्व्यन्तर्वर्तिनी पूर्णिमासीतिकृत्वा अनुक्तोऽपि तपःप्रमुखः पाक्षिको विधिर्नियमेन कल्प्यते इति पूर्वपक्ष", अत्र 'उदरस्थपुत्राशया कटिस्थ पुत्रं कूपे क्षिपती'ति न्यायमापन्नेन राकारक्तेनाशङ्क्य,यतश्चतुर्दशी पाक्षिकत्वस्यविशिष्टां सिद्धान्तोक्तां च परित्यज्य तादृशी पूर्णिमा भविष्यतीतिकल्पनात्तत्त्व इतिगाथार्थः॥६५॥ अथ पूर्वपक्षिवस्यातिप्रसंगेन दूषयितुमाह–

ता चउदसितवजुत्तो छट्ठो वुत्तोऽपि किं न पक्खतवो। अह चउदसितवजुत्तो चउमासखिणमि छट्ठतवो॥६६॥

यद्येवं प्रागुक्त 'ता' तर्हि चतुर्दशीचतुर्थतपोयुक्त पाक्षिकतपोऽपीत्युपवासद्वयलक्षणः षष्ठः कथ नोक्तः ?, दृष्टान्तमाह–'अहे' त्यादि, यथा चतुर्दशीतपोयुक्तं चतुर्मासिकदिने षष्ठतप उक्तं, किं चतुष्पर्वी तावच्छ्रावकधर्ममाश्रित्योक्ता ?, साधुधर्ममाश्रित्य तु अष्टमीचतुर्दश्यावेव, पाक्षिकपव तु भावकसाध्वोः साधारणमित्यपि विचार्यमाणे चतुर्दश्येव पाक्षिकत्वेन सिद्ध्यति, चतुष्पर्वीमध्य वर्तिनी पूर्णिमत्यादिविचारणा स्वगलपाशुकल्पति गाथार्थः ॥६६॥ अथ पुनरपि राकाशङ्कामाह–

अह चउमासगदियसा पनरसदियसेहिं पक्खिपडिक्कमणं। तेणवि पुण्णिमदियसे पक्खियमकज्जवि जुत्तिजुत्तं॥६७॥

अथ चतुर्मासिकदिनात्–चतुर्मासिकप्रतिक्रमणात् पञ्चदशभिर्दिनैः पाक्षिकप्रतिक्रमणं भवति, तेनापि कारणेन पूर्णिमादिने पाक्षिकप्रतिक्रमणादिक युक्तियुक्तमितिगाथार्थः ॥६७॥ अथ परोक्तमतिप्रसङ्गेन दूषयति–

जइ एवं संवच्छरिअपडिक्कमणाउ पक्खपडिक्कमणं। पन्नरसदिणेहिं जुत्तं पत्त ता पंचमी पक्खो ॥६८॥

यद्येवं स्वकृतयुक्तिस्तर्हि सांवत्सरिकप्रतिक्रमणात्पाक्षिकप्रतिक्रमणं पञ्चदशभिर्दिनैरेवेति युक्त 'ता' तस्मात् 'पञ्चमीपक्षः' पञ्चम्यां पाक्षिक प्राप्तम्, उभयत्रापि युक्तत्वात्स्यादितिगाथार्थः ॥६८॥ अथ युक्त्यन्तरमाह–

**जइ पक्खिअंपि पुण्णिम अमावसा यत्ति तिहिदुगं हुज्जा। ता तुह नामंपि इमं पक्खे पक्खे हवइ भिन्नं ॥६९॥**

यदि पाक्षिकं पूर्णिमा अमावास्या चेति तिथिद्वयं स्यात् तर्हि तव नामापि पक्षे पक्षे भिन्नं स्यादितिगाथार्थः ॥ ६९ ॥ अथ पक्षे२ नाम्नोर्भिन्नत्वं कथमित्याह—

**सिअपक्खे पुण्णिमिओ कण्हेऽमावासिओत्तऽवरनामा। अण्णह तुह नामंमि अ अलिअं तह पक्खिअभिहाणे ॥७०॥**

'सितपक्षे' शुक्लपक्षे पौर्णिमीयकः,पूर्णिमायां पाक्षिकपर्वणः करिष्यमाणत्वात्,कृष्णे पक्षे आमावास्यिक इत्यपरनामा वक्तव्यस्त्वं, तस्मिन् पक्षे अमावास्यायामेव पाक्षिकस्य करिष्यमाणत्वाद्,अन्यथा यदि नामद्विकं न स्यात्तर्हि तव नाम्न्यलीकं—मृषाभाषणं भवेत्, पाक्षिकपर्वपारतन्त्र्येणैव तवाभिधानस्य सम्मतत्वाद्, अन्यथा पौर्णिमीयकोऽहमित्यपि नोद्घोपणीयं,तथा पाक्षिकाभिधानेऽपि मृषा स्याद्, अयं भावः—कृष्णे पक्षेऽमावास्यायां पाक्षिकं कुर्वाणः अहं पूर्णिमायां पाक्षिकं करोमीत्यतोऽहं पौर्णिमीयक इति ब्रुवाणः स्फुट एव स्वनाम्नि पाक्षिकपर्वनाम्नि चेत्युभयथाऽपि मृषाभापी स्यादिति गाथार्थः ॥७०॥ अत्र सूत्रव्याख्यानेऽपि पाक्षिकशब्देन चतुर्दशी व्याख्यातेति दर्शयति—

**जह पक्खिअपज्जाओ चउदसिसद्देण देसिओऽवि तहा। न य पुण्णिमसद्देण दसाइचुण्णिपमुहसमए ॥७१॥**

यथा पाक्षिकपर्यायश्चतुर्दशीशब्देन देशितो, दृश्यते इति गम्यं, न तथा पूर्णिमाशब्देन पाक्षिकपर्यायः कृतः, क्वेत्याह—'दशाचूर्णिप्रमुखसमये'दशाश्रुतस्कन्धचूर्णिप्रमुखसिद्धान्ते,तथाहि-"पक्खिअपोसहिएसुं समाहिपत्ताणं"ति श्रीदशाश्रु० सूत्रं,एतच्चूर्णिरेवं-पक्खियं पक्खिअमेव,पक्खिए पोसहो पक्खिअपोसहो,चाउद्दसिअट्ठमीसु वा,समाहिपत्ताणं"ति श्रीदशा०,अत्र प्रथमव्याख्याने पक्खिअं

पाक्खिअमवेति सारधारणाचाप्यत्र केवलचतुर्दश्या एव ग्रहणं कृतं, द्वितीयव्याख्याने च पाक्षिकपदमष्टम्या अप्युपलक्षकमित्यभि-
प्रायेण अट्ठमिचउद्दसीसु चेत्यष्टमीसंयुक्ताया एव चतुर्दश्या ग्रहणं कृतमिति बोध्यम्, अन्यथा द्वितीयव्याख्यानं निरन्वयं स्यात्,
तद्व्याख्यानस्य व्याख्येयपदस्य सूत्रेऽनुपलम्भात्, त्वदभिप्रायेण पाक्षिकशब्दस्य व्याख्याने नाष्टमी न वा चतुर्दशी संभवति,
तस्मात्प्रथमव्याख्यानं केवलचतुर्दश्यभिप्रायकम्, अन्यथा पर्यायान्तरमकृत्वा एवकारग्रहणासंभवाद्व्याख्यानासंभवाच्च, नहि कोऽपि
पूर्वव्याख्याता पक्खशब्दस्य पक्ख इति प्राकृतो व्याख्याकृत्त्व भजते, द्वितीयव्याख्याने चाष्टम्युपलक्षिता चतुर्दशी गृहीतेतिवस्यमा
णपत्रछेदश्चूर्णिप्रदीपिकादाय दशा चूर्णिश्चावलोकनीया, त्वदभिप्रायेण तु द्वितीयव्याख्यान अट्ठमिचउद्दसीसु चेति घटते, तच्च नोक्त
मिति तत्र निमील्य विचारणीयम्, आदिशब्दाच्चरूपपदादरवृत्तिरपि, यथा—विआणे परिवाडी पव्वे पव्वे य दिंति आयरिआ। मासद्ध
मासिण्णं पव्व पुण होइ मज्झं तु॥१॥ आचार्याः पर्वणि पर्वणि विद्यानां परिपाटीर्ददति, विद्याः परावर्त्तन्त इति भावः, अथ पर्व
किमुच्यते, तत्र आह—मासार्धमासयोर्मध्यं पर्व पुनर्भवति, एतदेवाह—"पक्खस्स अट्ठमी खलु मासस्स य पक्खियं मुणेयव्वं। अण्णपि
होइ पव्व उवरागो चंदसूराण॥१॥ अर्द्धमासस्य—पक्षात्मकस्य मध्यमष्टमी, मासस्य मध्य पाक्षिकं—पक्षेण निर्वृत्त, तच्च कृष्णचतुर्द
शीरूपमवसातव्यं, तत्र प्रायो विद्यासाधनोपचारसद्भावादिति व्यव० पृ० उ०६, अत्र इत्थिकृत्वा कृष्णचतुर्दशी विविच्य व्याख्याता
गत्रिपामाधनाभिप्रायात्, अन्यथा सामान्येन चतुर्दश्येव व्याख्याता स्यात्, पान्तरसम्मतेस्तथैव दृश्यमानत्वादित्यपि नेत्रे निमील्य
परोक्ष्या विधायमितिगाथार्थः॥७१॥ अथ पुनरपि युक्त्यन्तरमाह—

पाउरमट्ठमुद्दिट्ठपुण्णमासिणिसुपमुहजिणपगण। न य कत्थवि पाउरसिअट्ठमिपक्खिअपमुहवयण॥७२॥

“बहूहिं सीलव्वयगुणवेरमणपच्चक्खाणपोसहोववासेहिं चाउद्दसट्ठमुद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसहं सम्मं अणुपालेमाणा” इत्यादिकं श्रीभगवत्यादिगतं जिनप्रवचनं, विद्यत इति क्रियाऽध्याहार्या, अत्र गाथायां 'पुण्णमासिणिसु'त्ति ह्रस्वत्वं गाथानुलोम्यादवसातव्यं, तद्वत्क्वापि “चाउद्दसट्ठमिपक्खिएसु'त्ति प्रमुखवचनं न च दृष्टमितिगाथार्थः ॥७२॥ अथैवंपाठात्किं संपन्नमित्याह—

**जम्हा दोसद्देहिं दुन्नि तिहीओ जिणिंदभणिआओ। तम्हा चउदसिपक्खिअसक्खी लेवोऽवि सूअगडे ॥७३॥**

यस्मात् द्वाभ्यां शब्दाभ्यां द्वे तिथी जिनेन्द्रभणिते, उद्दिष्टपूर्णिमाशब्दाभ्याममावास्यापूर्णिमालक्षणं तिथिद्वयं भणितं, तत्र पाक्षिकं न भवति, तस्माच्चतुर्दश्येव पाक्षिकम्, अत्रार्थे साक्षी तावत्सूत्रकृदङ्गे 'लेवोवि' लेपनामा श्रावकोऽपि, यतस्तत्र द्वाभ्यां शब्दाभ्यां पाक्षिकव्यतिरिक्तास्तिथयो गृहीताः, तथाहि—“से णं लेवए गाहावई समणोवासए अहिगयजीवाजीवे'त्ति” द्वितीयाङ्गसूत्रदेशस्य वृत्तिरियं, तथा—चतुर्दश्यष्टम्यादिषु तिथिषूद्दिष्टासु—महाकल्याणकसंबन्धितया पुण्यतिथित्वेन प्रख्यातासु तथा पौर्णमासीषु च तिसृष्वपि चतुर्मासकतिथिष्वित्यर्थः एवंभूतेषु धर्मदिवसेषु सुष्ठु—अतिशयेन प्रतिपूर्णो यः पौषधो—व्रताभिग्रहस्तं प्रतिपूर्णम्—आहारशरीरब्रह्मचर्याव्यापाररूपं पौषधमनुपालयन् संपूर्णश्रावकधर्ममनुचरति ॥ इति श्रीसूत्रकृदङ्गे द्वितीयश्रुतस्कन्धेऽध्ययने७ लेपश्रावकवर्णनाधिकारे इति गाथार्थः ॥७३॥ अथ द्वाभ्यामपि शब्दाभ्यां पाक्षिकत्वेनाभिमतयोस्तिथ्योर्ग्रहणे को दोष इत्याकाङ्क्षायां सूत्रगतिभङ्गलक्षणं दोषमाह—

**सुत्तंमि एगअत्थो णो जुत्तो णेगसद्दवयणिज्जो। अप्पग्गंथमहत्थं सुत्तं जंपंति जेण जिणा ॥७४॥**

सूत्रे एकोऽर्थः—पाक्षिकादिलक्षणोऽनेकशब्दवाचनीयः—नेकैरुद्दिष्टपूर्णिमादिलक्षणैः शब्दैर्वक्तव्यो न युक्तः, यतः सूत्रं तावद-

ल्पग्रन्थं महार्थं च जिना ब्रुवन्ति, शब्दैरल्पमर्थेन च महदित्यर्थः, यदागमः-"अप्पग्गंथमहत्थं बत्तीसादोसविरहिअं जं च। लक्खणजुत्त सुत्तं अट्ठहि अ गुणेहि उववेअं ॥१॥" (३-८८०) तत्र द्वात्रिंशद्दोषा अमी-"अलिअमुवघायजणयं निरत्थयमवत्थयं छलं दुहिलं। निस्सारमहिअमूणं पुणरुत्तं वाहयमजुत्तं ॥१॥ कमभिण्णं वयणभिन्नं विभत्तिभिन्नं च लिंगभिन्नं च। अणभिहिअमपयमेव य सहावहीणं ववहिअं च ॥२॥ कालजइच्छविदोसो समयविरुद्धं च वयणमित्तं च। अत्थावत्तीदोसो नेओ असमासदोसो अ ॥३॥ उवमारूवगदोसो निद्देसपयत्थसंधिदोसो अ। एए अ सुत्तदोसा बत्तीसं हुंति नायव्वा ॥४॥ (३।८८१-२-३-४) इति श्रीमनुयोगद्वारसूत्रे,तथा "निद्दोसं सारवंतं च,हेउजुत्तमलंकिअं। उवणीअं सोवयारं च,मिअं महुरमेव य ॥१॥ (२-५१०३-८८५) इति कल्पभाष्यपीठेऽपि प्रज्ञप्तम्,पत्ताइक्रमलक्षणपूर्वकं यदुक्तं नानेकशब्दैरेकमिमर्थं वाच्ये सति संभवति, प्रत्युताल्पार्थमहाग्रन्थत्वेन वैपरीत्यात्, तस्मात्पूर्णिमामावास्याभ्यां यथा पाक्षिकं वाच्यतया निर्दिष्टं तदपेक्षया एकेनैव पाक्षिकशब्देन पाक्षिकं पर्युक्तम्,अयं भावः-पूर्णिमाऽमावास्ये यदि पाक्षिकतिथी अभविष्यतां तर्हि सूत्रकारो गणधरः सर्वत्र भवतु मा वा क्वचित् पाक्षिकशब्दप्रयोगमदास्यत्,तथाच "चाउद्दसट्ठमीपक्खिपसु पडिपुण्णं पोसहं" मित्याद्यभणिष्यत् तच्च क्वापि नोक्तम्, अतो न पूर्णिमामावास्ये पाक्षिकं,ननु तर्हि चतुर्दशीशब्दस्थाने पाक्षिकमित्येव कथं नोक्तमितिचेदुच्यते,पाक्षिकचतुर्दशीशब्दयोः पर्यायरूपत्वेनैकस्वरूपत्वादेकशब्दवाच्यत्वाव्यभिचारादितिगाथार्थः ॥७४॥ अथ गाथा सुखावबोधार्थं युक्तिमाह—

चउदसिपक्खिअतित्थं भण्णिअ अज्ज जाव वट्टेइ। जं तस्स मूलमपणं पवरओ भत्थि तित्थयरा ॥७५॥

चतुर्दश्यां पाक्षिकम् अर्थात् पाक्षिकस्य तत्र तीर्थं,तदाश्रितं तीर्थमित्यर्थः, कथम्?,अद्य यावदच्छिन्नमिति, अच्छिन्नं,न पुनस्त्रुटि

तं मत् केनापि संहितं, यत्तदोर्नित्याभिसंबन्धात्, तस्मात्तन्मूलं—चतुर्दशीपाक्षिकमूलं, तीर्थकराद् अन्यः प्रवर्त्तको नास्ति, चतुर्दशी-पाक्षिकप्रवर्त्तकस्तीर्थकृदेव, अनादिसिद्धमित्युपदेशद्वारेतिगाथार्थः ॥७५॥ अथ पूर्णिमापाक्षिकस्यापि मूलं तीर्थकृद्भविष्यतीति पराशङ्कापराकृतये गाथामाह—

पुण्णिमपक्खिअमूलं चंदप्पहसन्निओ तुहंपि मओ। लिंगं पक्खिअसत्तरि मुणिचंदकया तयट्ठाए ॥७६॥

पूर्णिमापाक्षिकमूलं चन्द्रप्रभसंज्ञितः—चन्द्रप्रभाचार्यनामा तवापि सम्मतः—प्रतीतः, यतः—"दुर्वादिद्विरदाङ्कुशः समयविच्छ्रेणी-शिरोमण्डनं श्रीचन्द्रप्रभसूरिराद् स भगवान् प्राचीकशत्पूर्णिमा"मित्यादिपौर्णिमीयककृतसंस्कृतक्षेत्रसमासवृत्तौ, तथा राकारक्त-कृताममतीर्थकृच्चरित्रेऽपि, तथा शतपदीकारेणापि बृहद्गच्छात्पूर्णिमापक्षश्चन्द्रप्रभाचार्यादेवोक्तः ततश्चात्मन उत्पत्तिरिति, तत्र लिङ्गं—चिह्नं 'तयट्ठाए'त्ति तदर्थं—तस्मै इदं तस्य प्रतिबोधनिमित्तं श्रीमुनिचन्द्रसूरिः—तद्गुरुभ्राता तेन कृता पाक्षिकसप्ततिरेव, यदि पूर्णिमामूलं चन्द्रप्रभो नाभविष्यत्तर्हि कथं तत्प्रतिबोधनिमित्तं पाक्षिकसप्ततिकामकरिष्यदितिगाथार्थः ॥ ७६ ॥ अथ पूर्णिमा-मूले युक्त्यन्तरमाह—

चउदसिपक्खा पुण्णिमपक्खो इह निग्गओत्ति विक्खायं।

पुण्णिमपक्खा चउदसिपक्खोऽवि न वयणगंधोऽवि ॥७७॥

यथातथाशब्दयोरध्याहाराद् यथा चतुर्दशीपक्षात्पूर्णिमापक्षो निर्गत इति विख्यातं, "वडगच्छाओ पुण्णिम पुण्णिमओ सड्ढ-पुण्णिमंचलया। दोहिवि आगमनामा कुच्चयरा खरयरो जाउ ॥१॥ त्ति वृद्धसंप्रदायात्सर्वजनप्रतीतं, न तथा पूर्णिमापक्षाच्चतुर्दशी-

पक्षोऽपीति युक्तिः सुज्ञानयोवेतिगाथार्थः ॥७७॥ अथैव सति पूर्णिमापक्षे किं संपन्नमित्याह—

तम्हा पुण्णिमपक्खे छिन्नं तित्थं हविज्ज निअमेणं। एवं सेसमएसुवि भाविज्जा सुहुमबुद्धीए ॥७८॥

यस्माच्चतुर्दशीपक्षात्पूर्णिमापक्षो निर्गतस्तस्मात्पूर्णिमापक्षे नियमेन तीर्थं छिन्नं भवेत्,अयं भावः—श्रीवीराच्चतुष्कल्पितकालक-सूरिप्रभृतेर्वा चन्द्रप्रभाचार्य यावच्चतुर्दश्यां तीर्थमासीत्, तच्च पूर्णिमापक्षे तीर्थं न भवत्येवातस्तन्मते तीर्थस्य व्युच्छेदः संपन्नः, अथ तदानीं तत्तीर्थमेव, तर्हि तस्मिन् चारकस्वरूपेण विद्यमाने पूर्णिमापक्षस्य तीर्थबाह्यताऽनायाससिद्धा,यस्मिन्से तीर्थे तदनभि-मतप्ररूपणातस्ततः पृथग्भवनात्, एवम्—अमुना प्रकारेण शेषमतेष्वपि—औष्ट्रिकादिपाशपर्यन्तेष्वपि छिन्नं तीर्थं ज्ञातव्यं,तेषामभि-नवपतोऽपराधिनस्तुणाचरणकल्पां कुयुक्तिमपाकर्तुमाह—

जोइसकरंडपमुहे पडिवाइकमा तिहीण णामाइं। तत्तो पसिद्धपक्खिअपव्वनिमित्तं चिणुत्ताइं ॥७९॥

ज्योतिष्करण्डप्रमुखे—ज्योतिष्करण्डचन्द्रप्रज्ञप्तिसूर्यप्रज्ञप्त्यादौ 'प्रतिपदादिक्रमात्' प्रतिपदमादौ कृत्वा क्रमेण पञ्च-दशीनां नामानि 'तत्तो' ततो जैनप्रवचने प्रसिद्धपाक्षिकपर्वनिमित्तं—चतुर्दशपोविमानसिद्धिप्रवचनप्रसिद्धपाक्षिकपर्वपरिज्ञानार्थं जिने-नोक्तानीत्यक्षरार्थो,भावार्थस्त्वयं—पाडिवय बिइय तइआ चउत्थि तह पंचमी अ छट्ठी अ। सत्तमिअट्ठमि नवमीदसमी इक्कारसी चेव॥१॥ बारसि तेरसि चाउद्दसी अ निट्ठवमिआ उ पन्नरसी। किण्हमि अ जुण्हंमि अ एमाओ तिही मुणेअव्वा॥२॥ इति ज्योतिष्करण्डे (१०१–१०२) तथा दशमचतुर्दशे प्राभृतके "ता कह ते दिवसाणं णामधेज्जा आहितत्ति वएज्जा १, ता एगमेगस्स णं पक्खस्स

पन्नरस दिवसा पण्णत्ता, तंजहा–पडिवयदिवसे जाव पन्नरसीदिवसे, ता एतेसि णं पन्नरस नामधेज्जा पण्णत्ता, तंजहा–पुव्वंगसिद्धे१
मणोरमे२ मणोहरे३ जसभद्दे४ जसोधरे५ सव्वकामसमिद्धे६ इंदे७ मुद्धाभिसित्ते८ सोमणसे९ धणंजए१० अत्थसिद्धे११ अभिजाते१२
अच्चासणे१३ सतंजए१४ अग्गिवेसोवसमे१५ दिवसाणं नामधिज्जाइं। ता कहं ते राईओ आहिज्जत्ति वदेज्जा १, ता एगमेगस्स णं पक्खस्स पण्णरस राई पण्णत्ता, तंजहा–पडिवाराई१ बिइआराई२ जाव पण्णसीराई१५, ता एएसिं णं पन्नरसण्हं राईणं पण्णरस नामधेज्जा
पं०, तं०–उत्तमा१ सुणक्खत्ता२ एलावच्चा३ जसोधरा४ सोमणसा५ सिरिसंभूता५ विजता७ वेजयंती८ जयंती९ अपराजिता१०
इच्छा११ समाहारा१२ तेआ१३ अभिनेआ१४ देवाणंदा निरता१५, रयणीनामधेज्जाइं''ति श्रीचन्द्रप्रज्ञप्तौ, एवं सूर्यप्रज्ञप्तावपि
(२४-४८) एवंविधेष्वागमेषु क्रमेणोक्तानि यानि नामानि तानि सम्मतितयोद्धाय्य पक्षान्ते भवं पाक्षिकमितिव्युत्पत्त्या पञ्चदश्यां
पाक्षिकमिति चन्द्रप्रभाचार्यस्य वाग्विलासः, स च स्तन्यपानार्थिनो मातरं परित्यज्य पितरं परिधावमानस्य चेष्टेव विपश्चितामु-
पहास्यहेतुः, यतो मातृस्तनकल्पं चतुर्थतपःप्रभृतिपाक्षिककृत्यविशिष्टचतुर्दशीज्ञापकं प्रागुक्तमागमकदम्बकं तदाश्रयभूतं तीर्थं च
परित्यज्य तदाशापूरणेऽजागलस्तनकल्पं ज्योतिःशास्त्रानुगततिथिक्रममात्रज्ञापकं ज्योतिष्करण्डादिकं प्रति धावति, तस्माद्धे चन्द्रप्र-
भाचार्य ! ज्योतिष्करण्डादौ तिथिक्रममवलम्ब्य पञ्चदश्यां पाक्षिकमिति शृगालकदाशा परिहर्त्तव्येतिगाथार्थः ॥७९॥ अथ ज्योति-
ष्करण्डादौ तिथिक्रमः किमर्थमित्याह—

**किंतिह जोइससत्थे अणाइसिद्धो तिहिक्कमो एवं। तेणिव नंदे१ भद्दे२ जए अ३ तुच्छे अ४ पुण्णत्ति५ ॥८०॥**

किंत्विह जगति ज्योतिःशास्त्रे लौकिके रत्नमालादौ लोकोत्तरे च चन्द्रप्रज्ञप्त्यादौ एवं–प्रागुक्तप्रकारेण प्रतिपदादिरचना-

रूपेण क्रम'—परिपाटिरनादिसिद्धः, यत एव ततः किमित्याह—'तेणिय'त्ति प्राकृतत्वात् ह्रस्वत्वे तेनैव कारणेन नन्दा१ भद्रा२ जया३ रिक्ता४ पूर्णा५ इत्यादि, एवंक्रम इति डालघण्टान्यायेनेहापि संबध्यते, एव क्रमो भवति, तत्र लौकिके—"नन्दा१ भद्रा२ जया३ रिक्ता४, पूर्णा५ चेति तिथयः क्रमात्। हीना५ मध्यो१० त्तमा१५ शुक्ला, कृष्णासु व्यत्ययात्तिथि ॥१॥"रित्यादि,लोकोत्तरे "ता कह ते तिही आहितेति वदेज्जा ?, तत्थ खलु इमा दुविहा तिही पण्णत्ता, तंजहा—दिवसतिही राइतिही य, ता कह ते दिवसतिही आहितेत्ति वदेज्जा ?, ता एगमेगस्स पक्खस्स पण्णरस दिवसतिही पण्णत्ता, तंजहा—णंदे१ भद्दे२ जए३ तुच्छे४ पुण्णे५ पक्खस्स पंचमी, पुणरवि णंदे६ भद्दे७ जए८ तुच्छे९ पुण्णे१० पक्खस्स दसमी,पुणरवि णंदे११ भद्दे१२ जए१३ तुच्छे१४ पुण्णे१५ पक्खस्स पण्णरसी, एवं तिगुणा तिही सव्वेसिं दिवसाणं। कह ते राईतिही आहितात्ति वदेज्जा ?,ता एगमेगस्स णं पक्खस्स पण्णरस राईतिही प०,तं०—उग्गवती१ भोगवती२ जसवती३ सव्वसिद्धा४ सुहणामा५ पुणरवि उग्गवती६ भोगवती७ जसवती८ सव्वसिद्धा९ सुहणामा१०, पुणरवि उग्गवती११ भोगवती१२ जसवती१३ सव्वसिद्धा१४ सुहणामा१५, एवं तिगुणा एआ तिहीउ सव्वासिं राईण"त्ति (२४-४९) श्रीचन्द्रप्रज्ञप्तौ दशमे पञ्चदशे प्राभृतप्राभृतके पत्र४५, एवं सूर्यप्रज्ञप्तावपि, दशमस्य पञ्चदशे प्राभृतप्राभृतके४३ पत्रे अयमेव पाठोऽवगन्तव्य , अत एव लौकिके लोकोत्तरे च टिप्पनकव्यवहारप्रवृत्तिरपि प्रतिपदादितिथिक्रमेणैव, व्युच्छिन्नेऽपि जैनटिप्पनके संप्रति टिप्पनकव्यवहृतिरेव तत्साक्षिणी, तस्मात्प्रतिपदादितिथिक्रम' पाक्षिकविचारे अकिञ्चित्कर एवेतिगाथार्थः ॥८०॥ अथोक्तयुक्त्या किं संपन्नमित्याह—

तेण पक्खस्संतो पण्णरसी तस्स पक्खपडिकमणं। जुत्तंसि भहविगप्पो मिउव्व सिहाउ संतसिओ ॥८१॥

येन कारणेन ज्योतिष्करण्डादौ तिथिक्रमो न पाक्षिकविचारोपयोगी तेन कारणेन पक्षस्यान्तः पञ्चदशी भवति तत्रैव च पाक्षि-
कप्रतिक्रमणं युक्तमिति चन्द्रप्रभाचार्यस्य कुविकल्पः सिंहान्मृग इव संत्रासितः-त्रासं नीत इति । यत्तु 'अंतो पक्खस्से'ति पाक्षिक-
सूत्रपदमवलम्ब्य पक्षस्यान्ते पूर्णिमायां पाक्षिकप्रतिक्रमणं युक्तमिति तन्महदज्ञानं बोध्यं,यतस्तत्रान्तशब्दो मध्यार्थवाची, तेन पक्ष-
स्यान्तः-मध्ये वाचनादिविषयं यदवद्यं विहितं तदालोचनीयमितिभणितम्, अन्यथा पूर्णिमाप्रतिपदोर्मध्ये यत्पातकं तदेवालोचितं
स्यात्, न पुनः पञ्चदशदिनसंबन्ध्यपीति गाथार्थः ॥८१॥ अथ चन्द्रप्रज्ञप्त्याद्यनुसारेण पाक्षिककल्पने दूषणान्तरमाह—

किंचिह पक्खस्संतो देवसिओ राइओ व तुम्भ मए। दुहओ तुह गलपासो दुण्हंपंतो विआलेऽवि ॥८२॥

'किं चे'ति दूषणाभ्युच्चये, चन्द्रप्रज्ञप्त्याद्यनुसारेण पक्षस्यान्तो दैवसिको रात्रिको वा तव मतः-अभिमतः?, द्विधापि-उभयथापि
तव गलपाशः, यतः कारणाद् द्वयोरपि दैवसिकरात्रिकयोरप्यन्तो विकालेऽपि-मध्याह्लादावपि भवेदित्यक्षरार्थः,भावार्थस्त्वयं-भोश्च-
न्द्रप्रभाचार्य ! जैनप्रवचने पक्षस्तावद्विविधः कथितः,पुव्वंगसिद्धे१ मणोरमे२ इत्यादिप्रागुक्तो दैवसिकः पक्षः,उत्तमा१ सुणक्खत्ता२
इत्यादिप्रागुक्तो रात्रिकः पक्षश्चेति द्वैविध्यं, तत्र तव दैवसिकोऽभिमतो रात्रिको वा उभावपि वा ?, आद्ये रात्रिकपक्षेण किमपराद्धं ?,
यत आगमे द्वयोरप्यविशेषेणोक्तयो रात्रिकं पक्षं परित्यज्य दैवसिकोऽभ्युपगम्यते,एवं रात्रिकाभ्युपगमेऽपि दैवसिकेन पक्षेण किम-
पराद्धमित्यादि बोध्यम्, अथोभावप्यभिमताविति चेत्तर्हि पाक्षिकप्रतिक्रमणे अप्युभे एवाभ्युपगन्तव्ये स्यातां,तथा चैकस्मिन्नेव दिवसे
पक्षद्वयापत्त्या तदन्ते पाक्षिकप्रतिक्रमणकरणे पाक्षिकप्रतिक्रमणद्वयापत्त्या प्रवचनमर्यादाभङ्ग एव, किंच-चन्द्रप्रज्ञप्त्याद्यनुसारेण
पाक्षिकत्वाभ्युपगमे टिप्पनकाद्यवलोकनेन कदाचित्प्रातः कदाचिन्मध्याह्लेऽपराह्ले वा दैवसिकस्य रात्रिकस्य वा पक्षस्य पर्यवसानात्

पाक्षिकप्रतिक्रमणमपि कालानियमेन कर्त्तव्यमापद्येत, एवं रात्रावपि भाव्यम्,एवं युक्त्या चन्द्रप्रभाचार्यस्य सर्वत्रापि गळपाश इति गाथार्थः ॥८२॥ अथैवमुक्तेऽप्यभिनिवेशमत्यजन्तमतिप्रसङ्गेन दूषयितुमाह—

अपणाइ सावणपमुहा मासा भणिआ बणाइणामेहिं । भणिआ सेणासाढे पुण्णिम पज्जोसवणपव्व ॥८३॥

अन्यथा यदि चन्द्रप्रज्ञप्त्याद्यनुसारेणैव पक्षस्यान्ते पाक्षिकप्रतिक्रमणमभ्युपगम्यते तर्हि चन्द्रप्रज्ञप्त्याद्यनुसारेणैव सांवत्सरिकपर्वापि आषाढपूर्णिमास्यामेव कर्त्तव्यमापद्येत, तथाहि-"ता कह मासा आहियाति वदेज्जा ?, ता एगमेगस्स णं संवच्छरस्स दुवालस मासा प०, तेसिं दो नामधेज्जा भवंति-लोइआ लोउत्तरिआ य, तत्थ लोइआ णामा सावणे१ भद्दवए२ अस्सोए३ कत्तिए४ मग्गसिरे५ पोसे६ माहे७ फग्गुणे८ चित्ते९ वइसाहे१० जेट्ठामूले११ आसाढे१२। लोउत्तरिआ णामा अभिणंदणे१ पइट्ठे२ विजए३ पीतिवद्धणे४ सिज्जंसे५ सिवे६ सिसिरे७ हेमवंते८ वसंतमासे९ कुसुमसंभवे१० णिदाहे११ वणविरोही१२ति, श्रीचन्द्रप्रज्ञप्तौ द्वादशस्यैकोनविंशतितमे प्राभृतप्राभृतके,एवं सूर्यप्रज्ञप्तावपि बोध्यम्,(२८-५३) एवं च सति संवत्सरान्ते भवं सांवत्सरिकमितिव्युत्पत्त्या आषाढे मासे पूर्णिमायां पर्युषणापर्व सांवत्सरिकातिचारालोचनादिक्रियाविशिष्टं कर्त्तव्यं स्यादितिगम्यम्, अयं भावः—यदि चन्द्रप्रज्ञप्त्यादिकं शरणीकृत्य पञ्चदश्यां पाक्षिकमभ्युपगम्यते, अभ्युपगम्यतां तर्हि तदेव शरणीकृत्याषाढसितपूर्णिमायां पर्युषणापर्वापि, अथ पर्युषणा न तथेतियेत्तर्हि पाक्षिकमप्यास्तां, अथ पर्युषणापर्व भाद्रपदे पञ्चम्यामित्यागमे दृश्यते तथा परम्परापीति चेत्तर्हि पाक्षिकमपि चतुर्दश्यामागमे पूर्वनिर्दिष्टे दृश्यते,तथा परम्पराऽपीति स्वीक्रियतामिति प्रतिबन्दीनदी दुस्तरेतिगाथार्थः॥८३॥

अथ प्रकारान्तरेणाप्यतिप्रसङ्गमाह—

अहवा कक्कडसंकंतिदिणे य संवच्छरी अ पडिक्कमणं । तुम्भ मए संसिद्धं चंदप्पणत्तिपमुहेहिं ॥८४॥

'अथवे'ति प्रागुक्तापेक्षया प्रकारान्तरद्योतकः, कर्कसंक्रान्तिदिने सांवत्सरिकप्रतिक्रमणं तव मते चन्द्रप्रज्ञप्त्याद्यागमैः सिद्धं, 'तुम्भ मए'त्तिपदेन नास्माकं मते सिद्ध्यतीत्यक्षरार्थः, भावार्थस्त्वयं—चन्द्रप्रज्ञप्त्यादौ कर्कसंक्रान्तौ संवत्सरपर्यवसानं कथितं, तथाहि "जया णं ते दुवे सूरिआ सव्वबाहिरमंडलं उवसंकमित्ता चारं चारंति तया णं एगं जोअणमयसहस्सं छच्च सट्ठे जोअणसए अण्णमण्णस्स अंतरं कट्टु चारं चरति, तया णं उत्तमकट्ठपत्ता जाव राती भवति, जहण्णेणं दुवालस जाव दिवसे भवति, एस णं पढमे छम्मासस्स पज्जवसाणे, ते पविसमाणा सूरिआ दोच्चं छम्मासं अयमाणे पढमंसि अहोरत्तंसि बाहिराणंतरं मंडलं उवसंकमित्ता चारं चरंती'त्यादि यावत् 'तया णं उत्तमकट्ठपत्ते जाव दिवसे भवति, जहण्णिआ दुवालमुहुत्ता राई भवति, एस णं दोच्चे छम्मासे, एअस्स णं दोच्चस्स छम्मासस्स पज्जवसाणे, एस णं आइच्चे संवच्छरे, एस णं आइच्चस्स संवच्छरस्स पज्जवसाणे।" इतिश्रीचन्द्रप्रज्ञप्तौ चतुर्थप्राभृतकप्रान्ते पत्र १०, एवं सूर्यप्रज्ञप्तावपि (२८-१५) अथ यदि तत्र सांवत्सरिकं नाभिमतमस्माकमितिचेत् तर्हि पाक्षिकमपि पञ्चदश्यां कथमभिमतमिति, युक्तेस्तौल्यादितिगाथार्थः ॥८४॥ अथोक्तयुक्तेरुपसंहारेण तात्पर्यमाह—

तेणिव पज्जोसवणा भद्दवयपंचमीइ रूढत्ति । तह चउदसिदिणि पक्खिअपव्वं सव्वण्णुसंवुत्तं ॥८५॥

येन कारणेन ज्योतिष्करण्डचन्द्रप्रज्ञप्त्यादिषु यत्तिथिमासादीनां क्रमः प्रतिपादितः स चोक्तयुक्तिभिः पाक्षिकादिपर्वविचारेऽनु-

---

१ एवं खलु एतेणुवाएणं णिक्खममाणा एते दुवे सूरिया ततोणंतराओ तदाणंतरं मंडलाओ मंडलं संकमेमाणा२ पञ्च२ जोयणाइं पणतीसं च एगट्ठिभाए जोयणस्स एगमेगे मडले अन्नमन्नस्स अंतर अभिवड्ढेमाणा २सव्वबाहिरं इति च पाठः संप्रति लभ्यमाने पुस्तके

प्रयोगित्वेनाकिञ्चित्कर एव तेन कारणेनैव यथा भाद्रपदपञ्चम्यां पर्युषणा कृता-प्रवचने सर्वजनप्रतीता इत्यमुना प्रकारेण तथा चतुर्दशीदिने पाक्षिकं पव सकळे समुक्त, सम्यक् प्रकारेण भणितमित्यर्थः, एतेन मालचेष्टितकाचपिण्यकल्पं सानिकशातपदीकारो कमपि तिरस्कृतमिति बोध्यमितिगाथार्थः ॥८५॥ अथ चतुर्दशीं परित्यज्य पुनरपि चन्द्रप्रभाचार्यस्तत्प्रतिपद् किं त्यक्तवानित्याह—

चउदसिपक्खिपमीओ परिहरइ महानिसीहसुत्तंपि । तेण उवहाणविही चत्तो उस्सुत्तरत्तेण ॥८६॥

चतुर्दशीपाक्षिकभीत' श्रीमहानिशीथसूत्रमपि परिहरति स्मेति गम्य, परिहरति स्म—त्यक्तवानित्यर्थः, श्रीमहानिशीथस्वीकारे यावत्स पाक्षिकं चतुर्दश्यामभ्युपगन्तव्यं भवेत्, तत्र स्पष्टमेव पाक्षिकं चतुर्दश्यामुपलभ्यते, तच्च प्रागुक्तमिति बोध्य, येन कारणेन श्रीमहानिशीथ त्यक्त तेन कारणेनोत्सूत्ररक्तेन-तीर्थकरुक्तापलापपातकासक्तेन चन्द्रप्रभाचार्येणोपधानविधिः-श्रावकानां नमस्कारादिश्रुताराधनतपोविशेषविधिः, अपिर्गम्य', सोऽपि त्यक्त इतिगाथार्थः ॥८६॥ अथ श्रीमहानिशीथव्यवस्थापनाय युक्तेर्वक्ष्यमाणत्वा दुपधानविषये चन्द्रप्रभाचार्यः कथ प्रष्टव्य इत्याह—

णणु उवहाणाभावो पडिसेहा अहव भणियभावाओ ? ।
पढमो असिद्धिरक्खसिगसिओ अवरो अ दुब्बिगप्पो ॥८७॥

ननु भोश्चन्द्रप्रभाचार्य ! त्वया श्रावकानामुपधानाभावः प्ररूप्यते तत्किं प्रतिषेधात्-सिद्धान्ते प्रतिषेधोपलम्भात् अथो भणितभा-वात्-सिद्धान्ते उपधानोक्तेरभावादिति विकल्पद्वयी प्रष्टव्या, तत्र प्रथमो विकल्पोऽसिद्धिराक्षसीग्रस्तः, तत्र प्रयोगो यथा-उपधानो वहनं श्रावकानां नोचित, प्रवचने प्रतिषिद्धत्वात्, आलोचनायां पाण्मासाधिकतपोवत् ... प्रतिषिद्धत्वमसिद्धं, कल्पागमे

निषेधानुपलब्धेः, अपरः चः पुनरर्थे सिद्धान्ते भणित्यभावलक्षणो द्वितीयो विकल्पः, किंलक्षणः ?—द्विविकल्पः, वक्ष्यमाणौ द्वौ
विकल्पौ यस्य स तथा, द्विविध इत्यर्थः इतिगाथार्थः ॥८७॥ अथ द्वितीयविकल्पस्य द्वैविध्यमाह—
**नामंपि नत्थि किं वा करिज्जमाणो विही न सिद्धंते । पढमुब होइ पढमो जं उवहाणंति समवाए ॥८८॥**
अथ सिद्धान्ते उपधाननामापि नास्ति उत क्रियमाणविधिर्नास्ति?, तत्र प्रथमो विकल्पः प्रागुक्तप्रथमविकल्पवदसिद्धिराक्षसी-
ग्रस्तः, यतः समवाये—समवायाङ्गे उपधाननामास्ति, समवायाङ्गे उपासकदशाङ्गस्वरूपप्ररूपणाधिकारे साक्षादेव श्रावकाणामुपधा-
नान्युक्तानि, तथाहि—उवासगाणं च सीलव्वयवेरमणगुणपच्चक्खाणपोसहोववासपडिवज्जणयाओ सुअपरिगहो तवोवहाणाइं पडि-
माओ" इति समवायाङ्गसूत्रे पत्रे ३७ सर्वपत्र ५० (११–१४२) अत्र वृत्त्येकदेशो यथा—श्रुतपरिग्रहास्तपउपधानानि—प्रतीतानि,
उपलक्षणाद्व्यवहारवृत्तावपि यथा 'श्रुतग्रहणमभीप्सता उपधानं कार्य'मिति,तथा "वसे गुरुकुले निच्चं, जोगवं उवहाणवं । पिअं-
करे पिअंवाई, से सिक्खं लद्धुमरिहति (७–३४०*) श्रीउत्तराध्याये ११, तद्वृत्त्येकदेशो यथा योजनं योगः—व्यापारः, स
चेह प्रक्रमाद्धर्मगत एव तद्वान् , अतिशयने मतुप्, यद्वा योगः—समाधिः सोऽस्यास्तीति योगवान् ,प्रशंसायां मतुप्, उपधानम्—अङ्गा-
नङ्गाध्ययनादौ यथायोगमाचामाम्लतपोविशेषस्तद्वानिति श्रीउत्त० बृहद्वृत्तौ, तथा 'तवोवहाणमादाय, पडिमं पडिवज्जओ ।
एवंपि विहरओ मे, छउमं न नियट्टइ ॥१॥ (७–८१*)त्ति ॥ श्रीउत्तरा०२,एतद्वृत्त्येकदेशो यथा—तपो भद्रमहाभद्रादि उपधानम्—
आगमोपचाररूपमाचामाम्लादि आदाय—स्वीकृत्य चरित्वेतियावदित्यादि श्रीउ० बृ०, तथा—काले विणए बहुमाणे उवहाणे
तहा अनिण्हवणे । वंजण अत्थ तदुभए अट्ठविहो णाणमायारो ॥ १ ॥ (द० नि० १८६) इति द्वारगाथायां चतुर्थद्वारगाथा यथा-

दुग्गतिपडणधरणा उवहाणं जत्थ जत्थ जं सुत्त। आगाढमणागाढे गुरु लहु आणादसगपडिया ॥१॥ इति श्रीनिशीथभाष्यम्–एत च्चूर्णिर्यथा–इआणिं उवहाणेत्ति दारं, तं दव्वा भावा य, दव्वे उवहाणगादि, भावे इमं–दुग्गति गाहा ॥ दुट्ठा गती दुग्गती दुक्खं या जसि विजति गतीए एसा दुग्गती, विषमेत्यर्थः, कुत्सिता वा गतिर्दुर्गती', पतणं पात, तीए दुग्गतीए पततमप्पाणं जे धरेति त उवहाणं भण्णति, त च जत्थ जत्थत्ति–एम सुत्तवीप्सा जत्थ उद्देसगे जत्थ अज्झयणे जत्थ सुअक्खंधे जत्थ अंगे कालुक्कालिअअंगाणगेसु नेआ, जमिति जं उवहाणं निव्वीतितादितं तत्थ तत्थ सुत्ते–सुते कायव्वमिति वक्कसेसं भवति 'आगाढणागाढ'त्ति तं च उद्देसगादिसुत्तं भणित तं सव्वं समासओ दुविह भण्णति, आगाढमणागाढं वा, त च आगाढसुअं भगव तिसुआइ, अणागाढमायारमाती" इत्यादि श्रीनिशीथचूर्णौ, तथा–"उवहाण पुण आयंबिलाई जं जस्स वण्णिअं सुत्ते। स तेणेव उ देअं इहरा आणाइआ दोसा ॥१॥ (५७९) इतिपञ्चवस्तुकसूत्रे, अस्या वृत्तिः–उपधानं पुनराचामाम्लादि यद्यस्याध्ययनादेर्वर्णितं सूत्र एव–आगमे तदध्ययनादि तेनैव तु देयमितरथा–अन्यथादाने आज्ञादयो दोषाभवन्ति इतिगाथार्थः ॥ इतिश्रीहरिभद्रसूरिकृतपञ्चवस्तु सर्वपत्र १५२ पुस्तके पत्रे ५१, एवं दशवैकालिकनिर्युक्तावपि "काले विणए बहुमाणे उवहाणे" इत्यादि,न चैतत्साधूनामेवोक्तमि ति वाच्यं, श्रुताराधनतपोविशेषस्य यथासंभव यथार्हं श्रावकयोरपि सम्मतत्वात्, नहि सामायिकादिषडध्ययनात्मकस्य श्रीआवश्य कश्रुतस्कन्धस्य अध्ययनमधिकृत्य द्वयोरप्यधिकारादेकस्य श्रुताराधनतपोविशेषो युक्तो नेतरस्येति वक्तु शक्यते,तस्माच्छ्रुतस्कन्धस्य तदध्ययनानां चाराधन निशीथचूर्ण्यादिषु साधुनुद्दिश्योक्तमप्युपलक्षणाच्छ्रुताराधनवदुपायिनः श्रावकस्यापि यथार्ह युक्तमेव, यथा "कालेण निक्खमे भिक्खू" इत्याद्यनुक्ताऽपि साध्वी साध्वनुपातित्वात् परिगृह्यते, अन्यथा कालादिरूपो ज्ञानाचारः साधूनामेव संपद्यते,

न पुनः श्रावकाणामपि, न चेद मेवास्तामितिवाच्यं, साधूनामष्टविधो ज्ञानाचारः श्रावकाणां चोपधानवर्जः सप्तधेति क्वाप्यागमे विविच्य
व्यक्तेरनुपलम्भात्, परं देशविरतिसर्वविरत्योराराधनतपोविधौ भेदो यथा 'सामाइअंमि उ कए समणो इव सावओ हवइ जम्हा'
इत्यत्र साधुसाम्येऽपि न सर्वथा साम्यं, किंतु देशेन, तद्वशाच्च तमुद्दिश्य कृतमप्यन्नादिकं भुङ्क्ते श्रावको, न पुनः साधुः, एवमन्यो-
ऽपि भूयान् भेदः,एवं साधूनां श्रीआवश्यकश्रुतस्कन्धस्याष्टदिनात्मको योगः श्रावकाणां च वक्ष्यमाणः श्रीमहानिशीथोक्तो विधिरु-
पधानसंज्ञितः, यद्यप्युपधानशब्देन सामान्यतः श्रुताराधनतपोविशेषो भण्यते तथापि विविच्यमानो मुनीनां योगापरपर्यायमुप-
धानं श्रावकाणां तु पर्यायवियुतमेवोपधानमिति बोध्यं, नन्वेवमाराधनविधिभेदः कथमितिचेज्जिनाज्ञाया अर्चनीयत्वात्, किंच—
उद्दिष्टभोजित्वेनारम्भपरिग्रहवतां कश्चिद्भेदो वक्तव्यः, स च पर्यालोच्यमानोऽयमेव, दृश्यते च लोकेऽपि समानरोगोपशान्तावपि
कालपुरुषवयःप्रत्युपेक्षणया औषधादिपथ्यविधौ भेदः, परं पथ्यं तूभयोरपि देयमेव, किंच—एक एवाराध्यो भिन्नभिन्नाराधकापेक्षया
भिन्नस्वभावेनैव परिणमति, यतो विद्यमानोऽर्हन् साध्वानीतमेवाहारं भुञ्जानः साधुमपेक्ष्याहारभोक्तृतया परिणतः पूजास्वादकत-
या तु देवादिकमपेक्ष्यैव एवं बोध्यः, नहि येनैव विधिना साधुना प्रतिमा आराध्यते तेनैव विधिना श्रावकेणापीति, प्रवचनम-
र्यादाभङ्गापत्तेरित्यलं प्रपञ्चेनेति द्वितीयविकल्पे उपधानमिति नामापि सिद्धान्ते नोपलभ्यते इति प्रथमो विकल्पोऽसिद्धताग्रस्तो
दर्शित इति गाथार्थः ॥८८॥ अथ द्वितीयविकल्पसंबन्धिनं द्वितीयविकल्पं दूषयितुमाह—

**नहि कत्थवि सिद्धंते सव्वंसविही लभिज्ज कीएवि । बिइए महानिसीहे सूआ उवहाणकिरिआए ॥८९॥**

नहि क्वाप्यागमे कस्या क्रियमाणोऽपि विधिः किं सकलः सूचारूपो वेति चेतसि विकल्प्य प्रथममसंभवेन दूषयति—'नही'ति नहि क्वाप्यागमे कस्या

अकुभणिअअघडमाणअसेसहेउदिट्ठंतजुत्तीविद्धंसणिक्कपच्चलपोट्ठस्स पंचमंगलमहासुअक्खंधस्स पंचज्झयणेगचूलापरिक्खित्तस्स पवरपवयणदेवताहिट्ठिअस्स तिपदपरिच्छिन्नेगालावगसत्तक्खरपरिमाणं अणंतगमपज्जवत्थपसाहगं सबमहामंतपवरविज्ञाणं पवरबीअभूअं 'णमो अरिहंताणं'ति पढममज्झयणं अहिज्जेअबं, तद्दिअहे अ आयंबिलेणं पारेअबं, तहेव बीअदिणे अणेगाइसयगुणसंपओववेअं अणंतरभणिअत्थपसाहगं अणंतरुत्तेणेव कमेण दुपयपरिच्छिन्नेगालावगपंचक्खरपरिमाणं 'नमो सिद्धाणं'ति बीअमज्झयणं अहिज्जेअबं,तद्दिअहे आयंबिलेण पारेअबं, एवं अणंतरभणिएणेव कमेणं अणंतरुत्तत्थपसाहगं तिपदपरिच्छिन्नेगालावगसत्तक्खरपरिमाणं 'नमो आयरियाणं'ति तइअमज्झयणं आयंबिलेण अज्झेयबं, तहा य अणंतरुत्तत्थपसाहगं तिपयपरिच्छिन्नेगालावगसत्तक्खरपरिमाणं 'नमो उवज्झायाणं'ति चउत्थमज्झयणं अहिज्जियबं,तद्दिअहे य आयंबिलेण पारेअबं,एवं 'णमो लोए सबसाहूणं'ति पंचममज्झयणं पंचमदिणे आयंबिलेण,तहेव तयत्थाणुगामिअं इक्कारसपयपरिच्छिन्नं तिपआलावगतित्तीसक्खरपरिमाणं 'एसो पंचनमुक्कारो,सवपावप्पणासणो। मंगलाणं च सवेसिं, पढमं हवइ मंगलं ॥१॥'मिति चूलंति,छट्ठसत्तट्ठमदिणे तेणेव कमविभागेण आयंबिलेहिं अहिज्जिअबं,एवमेव पंचमंगलमहासुअक्खंधं सरवण्णयसहिअं पयक्खरबिंदुमत्ताविसुद्धं गुरुगुणोववेअगुरुवइट्ठं कसिणमहिज्जित्ताणं तहा कायबं जहा पुवाणुपुवीए पच्छाणुपुवीए अणाणुपुवीए जीहग्गे तरेज्जा, तओ तेणेवाणंतरभणिअतिहिकरणमुहुत्तनक्खत्तजोगलग्गससीबलजंतुविरहिए ओगासे चेइआलगाइकमेण अट्ठमभत्तेण समणुजाणावेऊण गोअमा! महया पबंधेण सुपरिफुडं निउणं असंदिद्धं सुत्तत्थं अणेगहा सोऊण अवधारेअबमित्यादि यावत् एअं तु जं पंचमंगलमहासुअक्खंधस्स वक्खाणं तं महया पबंधेणं अणंतगमपज्जवेहिं सुत्तस्स य पिहब्भूआहिं निज्जुत्तिभासचुण्णीहिं जहेव अणंतणाणदंसणधरेहि तित्थगरेहिं वक्खाणिअं तहेव समासओ वक्खाणिज्जंतं आसि,

वांतरमच्छड्डिअं अट्टदुहट्टज्झवसिए कंचि कालं खणं विरत्तेज्जा, ता तस्स फलेण विसंवएज्जा, जया णं कहिंचि अण्णाणमोहपमायदोसेण सहसा एगिंदिआदीणं संघट्टणपरिआवणं वा कयं हवेज्जा, तया य पच्छा हा हा हा दुट्टु कयमम्हेहिंति घणरागदोसमोहमिच्छत्तअण्णाणं-धेहिं अदिट्टपरलोगवाएहिं कूरकम्मनिग्घिणेहिंति परमसंवेगमावण्णे सुपरिप्फुडं आलोइत्ताणं निंदित्ताणं गरहित्ताणं पायच्छित्तमणु-चरित्ताणं निस्सल्ले अणाउलचित्ते असुहकम्मक्खयट्ठा किंचि आयहिअं चिइवंदणाइ अणुट्ठेज्जा, तया तयट्ठे चेव उवउत्ते से भवेज्जा, जया णं से तयट्ठे उवउत्ते भवेज्जा तया तस्स णं परमेगग्गचित्तसमाही हवेज्जा, तया चेव सव्वजगजीवपाणभूअसत्ताणं जहिट्ठफलसंपत्ती भवेज्जा, ता गोअमा! अपडिक्कंताए इरिआवहिआए न कप्पइ चेव काउं किंचिवि चिइवंदणसज्झायज्झाणाइअं फलासायणमभिकं-खुगाणं, एएणं अट्ठेणं गोअम! एवं वुच्चइ, जहा णं गोयमा! ससुत्तोभयपंचमंगलं थिरपरिचिअं काऊणं तो इरिआवहिअं अज्झाए (१९) से भयवं! कयराए विहिए तमिरिआवहिअं अहीए?, गोअम! जहा पंचमंगलमहासुअक्खंधं (२०) से भयवमिरियावहिअ-महिज्जित्ताणं तओ किमहिज्जा?, गोअम! सक्कत्थयाइअं चेइवंदणविहाणं, णवरं सक्कत्थयं एगट्ठमबत्तीसाए आयंबिलेहिं अरिहंत-त्थयं एगेणं चउत्थेणं पंचहिं आयंबिलेहिं, चउवीसत्थयं एगेणं छट्ठेणं एगेणं चउत्थेणं पणवीसाए आयंबिलेहिं, णाणत्थयं एगेणं चउत्थेणं पंचहिं आयंबिलेहिं, एवं सरवंजणमत्तबिंदुपयच्छेयपयक्खरविसुद्धं अविच्चामेलिअं अहिज्जित्ताणं गो॰तओ कसिणं सुत्तत्थं विण्णेयं, जत्थ य संदेहं हवेज्जा तं पुणो२ वीमंसिअ नीसंकमवधारिऊण णीसंदेहं करेज्जा (२१) एवं सुत्तत्थोभयचिइवंदणविहाणं अ-हिज्जित्ताणं तओ सुपसत्थे सोहणे तिहिकरणमुहुत्तनक्खत्तजोगलग्गससीबले जहासत्तीए जगगुरूणं संपाइअपूओवयारेण पडिलाहि-असाहुवग्गेण य भत्तिभरनिब्भरेणं रोमंचकंचुअपुलइज्जमाणतणू सहरिसविसिट्टवयणारविंदेणं सद्धासंवेगविवेगपरमवेरग्गमूलं विणिह-

अइण्णया कालपरिहाणिदोसेण ताओ निज्जुत्तिभासचुण्णिओ वोच्छिन्नाओ(१६) इओ य वच्चंतेण कालसमएणं महिड्ढीपत्ते पयाणुसारी वइरसामी नाम दुवालसंगसुअहरे समुप्पण्णे, तेणेअं पंचमंगलमहासुअक्खंधस्स उद्धारो मूलसुत्तमज्झे लिहिओ, मूलसुत्तं पुण सुत्तत्ताए गणहरेहिं अत्थत्ताए पुण अरहंतेहिं भगवंतेहिं तित्थगरेहिं तिलोगपूइएहिं वीरजिणिंदेहिं पण्णविअंति, एस वुड्ढसंपयाओ (१७) एत्थ य जत्थ जत्थ पयं पएणाणुलग्गं सुत्तालावगं न संपज्जइ तत्थ तत्थ सुअहरेहिं कुलिहिअदोसो न दायव्वोत्ति, किंतु जो सो एयस्स अचिंतचिंतामणिकप्पभूयस्स महानिसीहसुअक्खंधस्स पुव्वायरिसो आसि तहिं चेव खंडाखंडीए उद्देहिआइएहिं हेऊहिं बहवे पत्तगा परिसडिआ तहावि अच्चंतसुमहत्थाइसयंति इमं महानिसीहसुअक्खंधं कसिणपवयणस्स परमसारभूअं परं तत्तं महत्थंति कलिऊण पवयणवच्छल्लत्तेण बहुभव्वसत्तोवयारिअं च काउं तहा य आयहिअट्ठाए आयरियहरिभद्देण जं तत्थायरिसे दिट्ठं तं सव्वं समतीए सोहिऊण लिहिअंति, अण्णेहिंपि सिद्धसेणदिवायरवुड्ढवाईजक्खसेणदेवगुत्तजसवद्धणखमासमणसीसरविगुत्तनेमिचंदजिणदासगणि-खमगसच्चसिरिपमुहेहिं जुगप्पहाणसुअहरेहिं बहु मण्णिअमिणंति (१८) से भयवं ! सुत्तुत्तविणओवहाणेणं पंचमंगलमहासुअक्खंधमहिज्जित्ताणं पुव्वाणुपुव्वीए पच्छाणुपुव्वीए अणाणुपुव्वीए सरवंजणमत्ताबिंदुअक्खरविसुद्धथिरपरिचिअं काऊण महया पबंधेण सुत्तत्थं च विण्णाय तओ णं किमहिज्जिज्जा ?, गोअमा ! इरिआवहिअं, से भयवं ! केणं अट्ठेणं एवं वुच्चइ ? जहा णं पंचमंगलमहासुअक्खंधमहिज्जित्ताणं पुणो इरिआवहिअं अहीए, गोअमा ! जे एस आया से णं जया गमणागमणाइपरिणए अणेगजीवपाणभूअसत्ताणं अणु-वउत्तपमत्ते संघट्टणअवद्दावणकिलामणं काऊण अणालोइअपडिक्कंते चेव असेसकम्मक्खयट्ठाए किंचि चिइवंदणसज्झायज्झाणाइएसु अभिरमेज्जा तया से एगग्गचित्तसमाही हवेज्जा नवा, जओ णं गमणाइअणेगअन्नवावारपरिणामासत्तचित्तयाए केई पाणी तमेव भा-

वांतरमच्छड्डिअं अट्टदुहट्टज्झवंसिए कंचि कालं खणं विरत्तेज्जा, ता तस्स फलेण विसंवएज्जा,जया णं कहिंचि अण्णाणमोहपमायदोसेण सहसा एगिंदिआदीणं संघट्टणपरिआवणं वा कयं हवेज्जा,तया य पच्छा हा हा हा दुट्ठु कयमम्हेहिंति घणरागदोसमोहमिच्छत्तअण्णाणंधेहिं अदिट्ठपरलोगवाएहिं कूरकम्मनिग्घिणेहिंति परमसंवेगमावण्णो सुपरिप्फुडं आलोइत्ताणं निंदित्ताणं गरहित्ताणं पायच्छित्तमणुचरित्ताणं निस्सल्ले अणाउलचित्ते असुहकम्मक्खयट्ठा किंचि आयहिअं चिइवंदणाइ अणुट्ठेज्जा, तया तयट्ठे चेव उवउत्ते से भवेज्जा, जया णं से तयट्ठे उवउत्ते भवेज्जा तया तस्स णं परमेगग्गचित्तसमाही हवेज्जा,तया चेव सव्वजगज्जीवपाणभूअसत्ताणं जहिट्ठफलसंपत्ती भवेज्जा, ता गोअमा ! अपडिक्कंताए इरिआवहिआए न कप्पइ चेव काउं किंचिवि चिइवंदणसज्झायज्झाणाइअं फलासायणमभिकंखुगाणं, एएणं अट्ठेणं गोअम ! एवं वुच्चइ, जहा णं गोयमा ! ससुत्तोभयपंचमंगलं थिरपरिचिअं काऊणं तो इरिआवहिअं अज्झए (१९) से भयवं ! कयराए विहिए तमिरिआवहिअं अहीए ?, गोअम ! जहा पंचमंगलमहासुअक्खंधं (२०) से भयवमिरियावहिअमहिज्जित्ताणं तओ किमहिज्जा ?, गोअम ! सक्कत्थयाइअं चेइवंदणविहाणं, णवरं सक्कत्थयं एगट्ठमबत्तीसाए आयंबिलेहिं अरिहंतत्थयं एगेणं चउत्थेणं पंचहिं आयंबिलेहिं, चउवीसत्थयं एगेणं छट्ठेणं एगेणं चउत्थेणं पणवीसाए आयंबिलेहिं, णाणत्थवं एगेणं चउत्थेणं पंचहिं आयंबिलेहिं, एवं सरवंजणमत्तबिंदुपयच्छेयपयक्खरविसुद्धं अविच्चामेलिअं अहिज्जित्ताणं गो०तओ कसिणं सुत्तत्थं विण्णेयं, जत्थ य संदेहं हवेज्जा तं पुणो२ वीमंसिअ नीसंकमवधारिऊण णीसंदेहं करेज्जा (२१) एवं सुत्तथोभयचिइवंदणविहाणं अहिज्जित्ताणं तओ सुपसत्थे सोहणे तिहिकरणमुहुत्तनक्खत्तजोगलग्गससीबले जहासत्तीए जगगुरूणं संपाइअपूओवयारेण पडिलाहिअसाहुवग्गेण य भत्तिभरनिब्भरेणं रोमंचकंचुअपुलइज्जमाणतणू सहरिसविसिट्ठवयणारविंदेणं सद्धासंवेगविवेगपरममेरग्गमूलं विणिह-

ट्ठावणाए वा गणिस्स वा अणुण्णाए वा सत्त वारा परिजवेअव्वा;नित्थारगपारगो होइ, उत्तमट्ठपडिवण्णो वा अभिमंतिज्जइ, आराहगो भवति, विग्घविणायगा उवसमंति, सूरो संगामे पविसंतो अपराजित्तो भवति, कप्पसम्मत्तीए मंगलवहणी खेमवहणी हवइ, तहा साहुसाहुणिसमणोवासगसड्ढिगा सेसा सम्मत्तसाहम्मिअजणचउविहेणंपि समणसंघेण नित्थारगपारगो भवेज्जा, धन्नो संपुण्णलक्खणोसि तुमंतिउच्चारेमाणेणं गंधमुट्ठीओ घेत्तव्वाओ, तओ जगगुरूणं जिणिंदाणं पूएगदेसाओ गंधड्ढामिलाणसियमल्लदामं गहाय सहत्थेणं उभयखंधेसुमारोवयमाणेणं गुरुणा णीसंदेहमेवं भाणिअव्वं, जहा भो भो जम्मंतरसंचिअगुरुगुरुयपुण्णपब्भारसुलद्धसुविढत्तसुसहलमणुअजम्म देवाणुप्पिआ! ठइअं च निरयतिरिअगइदारं तुब्भंति, अबंधगो अ अयसअकित्तिनीआगोत्तकम्मविसेसाणं तुमंति, भवंतरगयस्सावि न दुल्लहो तुब्भं पंचनमुक्कारो भाविजम्मंतरेसु, पंचनमुक्कारप्पभावओ अ जत्थ२ उववज्जेज्जा तत्थ तत्थ उत्तमा जाई उत्तमं च कुलरूवारोग्गासंपयंति, एअं निच्छइओ भवेज्जा, अण्णं च पंचनमुक्कारपभावओ ण भवइ दासत्तणं न दारिद्ददुहगहीणजोणिअत्तं ण विगलिंदिअत्तंति, किं बहुएणं?, गोअमा! जे केइ एआए विहीए पंचनमुक्कारादिसुअण्णाणमहिज्जित्ताणं तदत्थाणुसारेण पयओ सव्वावस्सगाइणिच्चाणुट्ठणिज्जेसु अट्ठारसीलंगसहस्सेसु अभिरमेज्जा से णं सरागत्ताए जइ न निव्वुडे तओ गेविज्जणुत्तरादीसुं चिरमभिरमिऊणेह उत्तमकुलप्पसूई उक्किट्ठलट्ठसव्वंगसुंदरत्तं सव्वकलापत्तट्ठजणमणाणंदयारित्तणं च पाविऊण सुरिंदोवमरिद्धीए एगंतेणं च दयाणुकंपापरे निव्विन्नकामभोगो सद्धम्ममणुट्ठेऊणं विहुअरयमलो सिज्झिज्जा (२५) से भयवं! किं जहा पंचमंगलं तहा सामाइअमाइअमसेसंपि सुअणाणमहिज्जिणेअव्वं?, गोअमा! तहा चेव विणओवहाणेणमहीअव्वं, नवरमहिज्जिणित्तुकामेहिं अट्ठविहं चेव णाणायारं सव्वपयत्तेणं कालाई रक्खेज्जा,अण्णहा महासायणंति इत्यादि यावत्

(२६) से मयप ! सुगुरूरं पचमंगलमहासुअक्खंधस्स विणओवहाणं पण्णत्तं, महती अ एसा निजंतणा कहं बालेहिं कज्जति ?, गोअमा ! जे ण केइ ण इच्छेज्जा एअं निजंतण अविणओवहाणेण चेव पचमंगलाइसुअणाणमहीअंति अज्झावेइ वा अज्झावयमाणस्स वा अणुण्ण वा पयाइ से ण भवेज्जा पिअधम्मे ण हवेज्जा दढधम्मे ण भवेज्जा भत्तिजुए हीलिज्जा सुत्तं हीलिज्जा अत्थं हीलिज्जा सुत्तत्थोभए हीलिज्जा गुरु, जे णं हीलिज्जा सुत्तं हीलिज्जा अत्थं हीलिज्जा सुत्तत्थोभए जाव णं गुरु से णं आसाएज्जा अतीताणागयवट्टमाणे तित्थयरे, आसाएज्जा आयरिअउवज्झायसाहुणो, जे णं आसाएज्जा सुअणाणमरिहंतसिद्धसाहू से तस्स णं सुदीहआलमणंतसंसारसागरमाहिंडेमाणस्स तासु तासु संवुडविअडासु चुलसीइलक्खपरिसंखाणासु सीओसिणमिस्सजोणीसु तिमिरंधयार दुग्गंधामिज्झविलीणखारमुत्तोज्झसंमपडिहत्थ वसजलपूअदुद्दिणविलिविच्छकरिरविच्छसच्छपित्तखिलबुंसमजंबालपंकबीभच्छघोरगब्भवासेसु कढकढंतचलचलसम टलन्टलस रसंतसंधिविअंगमंगस्स सुइरं निअंतणा, जे उणं एअ विहिं फासेज्जा। णो णं मणयंपि अइअरेज्जा जहुत्तविहाणेणं चेव पचमंगलपभिइसुअणाणस्स विणओवहाणं करेज्जा से ण गोअमा ! णो हीलिज्जा सुत्तं णो हीलिज्जा अत्थं णो हीलिज्जा सुत्तत्थोभए, से णं णो आसाएज्जा तिकालभाविवित्थयरे, णो आसाएज्जा तिलोगसिहरवासी विहूअरयमले सिद्धे, णो आसाएज्जा आयरिअउवज्झायसाहुणो, सुट्ठुयरं चेव भवेज्जा पिअधम्मे दढधम्मे भत्तीजुत्ते एगंतेणं भवेज्जा सुत्तत्थाणुरंजिअमाणसस्सद्धासंविगमावण्णो, से एम ण ण लभेज्जा पुणो२ भवचारगे गब्भवासाइअं अणेगहा जतणवि (२७) णवरं गोअमा ! जेणं बाले जाव अविण्णायपुण्णपावाणं विसेसो ताव णं से पंचमंगलस्स णं गोअमा ! एगंतेणं अजोगे, ण तस्स पंचमंगलस्स णं महासुयक्खंधस्स एगमवि आलावगं दायव्वं, जओ अणाइभवंतरसमज्जिआसुहकम्मरासिदहणट्ठमिणं लभिऊणं न बाले सम्ममाराहेइ

हेज्जा, लहुअत्तं च आणेति, ता तस्स केवलं धम्मकहाए गोअमा! भत्ती समुप्पाइज्जइ, तओ णाऊण पिअधम्मं दढधम्मं भत्तिजुत्तं
ताहे जावइअं पच्चक्खाणं निव्वाहेउं समत्थो भवति तावइअं कारवेज्जइ, राइभोअणं च दुविहं तिविहं चउव्विहेण वा जहासत्तीए पच्च-
क्खाविज्जइ (२८) इमा गोअमा पनयालाए नमुकारसहिआणं चउत्थं, चउवीसाए पोरिसीहिं बारसहिं पुरिमड्ढेहिं दसहिं अवड्ढेहिं छहिं
निव्वीइएहिं चउहिं एगट्ठाणेहिं दोहिं आयंबिलेहिं एगेणं सुद्धच्छायंबिलेणं अव्वावारत्ताए रोदज्झाणविगहाविरहिअस्स सज्झाएगग्गचि-
त्तस्स एगमेव आयंबिलं मासक्खमणं विसेसिज्जा, तओ अ जावइअं तवोवहाणगं वीसमंतो करिज्जा तावइअं अणुगुणेऊण जाहे
जाणेज्जा जहा णं एत्तिअमित्तेणं तवोवहाणेणं पंचमंगलस्स जोगीभूओ ताहे आउत्तो पाढिज्जा, ण अण्णहत्ति (२९) से भयवं! पभू-
अकालातिकमं एअं जइ कयाइ अवंतराले पंचत्तमुवगच्छे तओ नमुकारविरहिए कहमुत्तमट्ठं साहेज्जा ?, गोअमा! जंसमयं चेव सुत्त-
त्थोवयारनिमित्तेण असढभावत्ताए जहासत्तीए किंचि तवमारभेज्जा तंसमयमेव अहिअसुत्तत्थोभयं दट्ठव्वं, जओ णं सो तं पंचनमुक्कारं
सुत्तत्थोभयं ण अविहीए गिण्हे, किंतु तहा गिण्हे जहा भवंतरेसुंपि ण विप्पणस्से, एअज्झवसायत्ता आराहगो भवेज्जा (३०) से भ-
यवं! जेण उण अण्णेसिमहीयमाणाणं सुआवरणक्खओवसमेण कण्णहाडित्तणेण पंचमंगलमहीअं भवेज्जा सेऽवि अ किं तवोवहाणं
करेज्जा ?, गोअमा! करिज्जा, से भयवं! केणं अट्ठेणं ?, गोअमा! सुलहबोहिलाभनिमित्तेणं, एवं चेआइं अकुव्वमाणे णाणकु-
सीले" (३१) त्ति। इतिश्रीमहानिशीथे तृतीयाध्ययने व्यक्तमेव श्रावकाणां कालादिष्वष्टस्वप्याचारेषु महाचारत्वेनोपधानं,
तद्विधिश्च सूत्ररूपेणोक्त इति गाथार्थः॥८९॥ अथैवमुपधानविधौ सिद्धे राकारक्तादीनां दुर्वचनमुद्भाव्य दूषयितुमाह—

अह महानिसीह तुम्हं न पमाणं तंपि किं सबुद्धीए। पुव्वायरिअवएण व ? वुच्चिज्जइ आइमो अहमो ॥९०॥

अथ महानिशीथश्रुतमेव नास्माकं प्रमाणमिति यत्तदाग्रहाद्दुर्भणनं, तत्रैव प्रष्टव्य—ननु भो राकारक्त! तदपि—अप्रामाण्यमपि किं स्वबुद्ध्या उत पूर्वाचार्यवचनेन वा?, श्रीहरिभद्रसूरिप्रभृतिप्रसिद्धपूर्वाचार्यवचसा वा उच्यते, तत्रादिमः—स्वबुद्ध्येति प्रथमो विकल्पोऽधमो—नीच , अल्पप्रज्ञस्याप्यनुपादेय इत्यर्थ , नहि निजमतिविकल्पना कस्यापि प्रमाणं स्यात्, सर्वज्ञवचसामेवास्येयत्वादितिगाथार्थ ॥९०॥ अथ पूर्वाचार्यवचसेति द्वितीयविकल्पे दोषमाह—

बीए आयरियस्स जइ भणिअं त भणसि भणिअं। ऊणमहिअं व भणणं तित्थासायण महादोसो ॥९१॥

द्वितीयविकल्पे यावन्मात्रं यथा भणितं,पूर्वाचार्यैरिति शेष्यं,तावन्मात्रं त्वयाऽपि भणितव्यम् ,ऊनमधिकं वा भणनं तीर्थाशातनालक्षणो महादोष, तीर्थेन यथयाऽभ्युपगतं तदन्यथाभणने तस्याशातना महती, अनन्तसंसारहेतुत्वादिति गाथार्थः ॥९१॥ अथ श्रीमहानिशीथमधिकृत्य पूर्वाचार्यभणितमाह—

हरिभद्दवयणमेअं सुआपरिआण चउत्थमज्झयणे। कतिपयपयाण सम्मं सद्धा नो तेणमम्हपि ॥९२॥

हरिभद्रवचन श्रीहरिभद्रसूरिवचनमेतद्—वक्ष्यमाण, किं?—श्रीमहानिशीथे चतुर्थाध्ययने कतिपयपदानां श्रीसिद्धसेनदिवाकरप्रभृतीनां सम्यक्श्रद्धानाभाव केषांचित्तु सम्यक् श्रद्धानं नासीत् तेनास्माकमपि सम्यक्श्रद्धानाभाव , केषांचित्तु सम्यक्श्रद्धानमित्यर्थ, यदुक्तं “अत्र चतुर्थाध्ययने बहवः सैद्धान्तिकाः कांश्चिदालापकान् न सम्यग् श्रद्दधति, एवं तैरश्रद्धानैरस्माकमपि न सम्यक्श्रद्धानमित्याह श्रीहरिभद्रसूरिः, न पुन सर्वमेव चतुर्थाध्ययनमन्यानि वाऽध्ययनानि, चतुर्थाध्ययनस्यैव कतिपयै परिमितैरालापकैरश्रद्धानमित्यर्थ , यतः स्थानसमवायजीवाभिगमप्रज्ञापनादिषु न कथञ्चिदिदमाचख्ये यथा प्रतिसंतापस्थलमस्ति

तत्र गुहावासिनसु मनुजास्तेषु च परमाधार्मिकाणां पुनः२ सप्ताष्टवारान् यथायदुपपातः, तेषां तैर्दारुणैर्वज्रशूलारघरट्टसंपुटैर्दलितानां परिपीड्यमानामपि संवत्सरं यावत्प्राणव्यापत्तिर्न भवति, वृद्धवादस्तु पुनर्यथा तावदिदमार्षं सूत्रं, विकृतिर्न तावदत्र प्रविष्टा, प्रभूताश्चात्र श्रुतस्कन्धे अर्थाः, सुष्ठ्वतिशयेन सातिशयानि गणधरोक्तानि चेह वचनानि, तदेवं स्थिते न किञ्चिदाशङ्कनीयं" इति श्रीमहानिशीथे चतुर्थाध्ययनसमाप्त्यनन्तरं पूर्वाचार्यैर्लिखितमिति बोध्यमिति गाथार्थः ॥९२॥ अथ महानिशीथं सूत्रं कीदृशं श्रीहरिभद्रेणाप्युक्तमित्याह—

**तेणेव महानिसीहं महप्पभावंति वण्णिअं तत्थ । तेणं हरिभद्दवया भद्दं सेसं असेसं वा ॥९३॥**

तेनैव—श्रीहरिभद्रसूरिणैव महान् प्रभावो यस्य तत्तथा वर्णितं, कुत्र ?—यत्राश्रद्धानं भणितं तत्रैव, यद्यपि श्रीहरिभद्राश्रद्धानं पूर्वाचार्यैरेव लिखितं, न पुनः स्वयं तेनैव, तथापि पूर्वाचार्योक्तमपि तदुक्तमेवेति चेतस्यवधृत्य विचार्यमाणं न दोषावहमिति, कथं वर्णितमित्याह—"एत्थ जं पयं पएणाणुलग्ग सुत्तालावगं न संपज्जइ तत्थ तत्थ सुअहरेहिं कुलिहिअदोसो न दायव्वोत्ति, किंतु जो सो एअस्स अचिंतचिंतामणिकप्पभूअस्स महानिसीहसुअक्खंधस्स पुव्वायरिसो आसि तहिं चेव खंडाखंडीए उद्देहिआइएहि हेऊहि बहवे पत्तगा परिसडिआ, तहवि अच्चंतसुमहत्थाइसयंति इमं महानिसीहसुअक्खंधं कसिणपवयणस्स परमाहार(मसार)भूअं परं तत्तं महत्थंति कलिऊण पवयणवच्छल्लत्तणेण बहुभवसत्तोवयारिअंतिकाउं तहा य आयहियट्ठयाए आयरिअहरिभद्देणं जं तत्थ आयरिसे दिट्ठं तं सव्वं समतिए साहिऊण लिहिअंति, अण्णेहिंपि सिद्धसेणदिवायरवुड्ढवाईजक्खसेणदेवगुत्तजसवद्धणखमासमणसीसरविगुत्तनेमिचंदजिणदासगणिखमगसच्चसिरिप्पमुहेहि जुगप्पहाणसुअहरेहिं बहुमण्णिअमिणंति। इति श्रीमहानिशीथे तृतीयाध्ययने, यत

एवं श्रीहरिभद्राचार्येणैव वर्णितं तेन कारणेन श्रीहरिभद्रवचनः—श्रीहरिभद्रसूरिवचनानुसारं—भद्रहेतुत्वाच्छेष चतुर्थाध्ययनगतकति-
पयालापकव्यतिरिक्त चतुर्थमध्ययनं शेषाणि च महाध्ययनानि वा, अथवा अशेषमपि—संपूर्णमपि भद्रमेव, यतः श्रीहरिभद्रसू
रिणैव वृद्धसंप्रदायगतानामाचार्याणां विवादापन्नानामपि कतिपयपदानां अश्रद्धानमेव भणितं,परं न ते दूषिता, अतः स्वकीयश्रद्धा-
नस्यापि न सम्यग् श्रद्धानमितिपदेन संशयास्पदत्वमेव ज्ञापितं,परं न श्रीमहानिशीथचतुर्थाध्ययनगतकतिपयालापकानामप्रामाण्यमेव
ज्ञापितं, प्रत्युतान्येषां श्रद्धाने गणधरकृतमेतत्सर्वमित्यादिवचोभिर्हेतुर्ज्ञापितः, किंच—कर्म्मणां क्षयोपशमवैचित्र्यात्कस्यचिन्महतोऽ
प्यश्रद्धानेऽन्येषामप्यश्रद्धानमेव युक्तमिति वक्तुमप्ययुक्तं,गुरुनियोगादपि मिथ्याश्रद्धानस्याप्यागमे भणितत्वात्, यदागमः—"सम्म
द्दिट्ठी जीवो उवइट्ठं पवयणं तु सद्दहइ। सद्दहइ अ असब्भावं अणभोगा गुरुनियोगा वा॥१॥" इतिश्रीउत्त०नि०(१६३)अत एव चतुर्थाध्य
यने यद्वा सैद्धान्तिकाः कांश्चिदालापकान् न श्रद्दधति,एवं तैरश्रद्धानैरस्माकमपि न सम्यग्श्रद्धानमित्येवोक्तं,न पुनरन्यैरपि न श्रद्धेय
मिति भणितं, न वा ते तथा श्रद्धालवो दूषिता इति सूक्ष्मधिया पर्यालोच्यमितिगाथार्थः॥९३॥ अथ राकारक्तवचनपद्धतावाक्षर्यमाह—

खित्तं हरिभद्दवयं गणहरवयणाउ सुंदरमिहुत्तं। चंदप्पहेण सेसं गणहरवयणेहिं सह चत्तं ॥९४॥

'इहे'ति नास्माकं राकारक्तानां श्रीमहानिशीथविषयकं सम्यक्श्रद्धानमित्याद्यधिकारे गणधरवचनात् अपिर्गम्यस्ततोऽपि सुन्दरं—
प्रशस्तं श्रीहरिभद्रसूरेर्वचो—वचनमुक्तं—भणितं, केन?—चन्द्रप्रभाचार्येण,एवं भणित्वाऽपि शेषम्—अश्रद्धानातिरिक्तस्यलोक्तं श्रीमहा
निशीथवर्णनात्मकम् अर्थात् श्रीहरिभद्रसूरेरपि त्यक्तं, न केवलं, किन्तु?—गणधरवचनैः सहेति, अयं भावः—इहेति—चतुर्दशीपा
क्षिकमीत्या श्रीमहानिशीथग्रन्थं नास्माकं प्रमाणमित्याद्यसत्प्रलापावसरे गणधरवचनादपि—श्रीमहानिशीथवचनादपि श्रीहरिभद्रसूरि

वचः सुन्दरं चन्द्रप्रभाचार्येणोक्तम्, अन्यथा कतिपयालापकानां सम्यग् श्रद्धानं नास्माकमित्येतावन्मात्रमन्यथाभिप्रायेणोक्तमप्युच्च-
कर्णबलवादिनेवान्यथाभिप्रायमुद्भाव्य तत्त्यागासंभवात् शेषं तैरश्रद्धानैरस्माकमपि न सम्यग्श्रद्धानमित्येतावन्मात्रं यत्सूरिणोक्तं तदति-
रिक्तं यत् श्रीमहानिशीथगुणवर्णनादिकं तदपि त्यक्तं, नह्युक्तमाहात्म्यं श्रीमहानिशीथं यथा सूरेः प्रमाणं तथाऽस्माकमपीति भणि-
तवान्, न पुनः केवलं सूरिवचस्त्यक्तं, किंतु गणधरवचनैः सहेति, गणधरवचनानि श्रीहरिभद्रसूरिवचश्चेति सर्वमपि चन्द्रप्रभाचा-
र्येण त्यक्तमिति चित्रम्—आश्चर्यमित्यर्थः इतिगाथार्थः ॥९४॥ अथ कुपाक्षिकाणां गणधरवचने आस्ता नास्तीतिदर्शयति—

**जइ खलु कुवक्खिआणं गणहरवयणाउ हुज्ज सद्दहणं। हरिभद्दासद्दहणं भणिअव्वमकिंचि ता तेहिं ॥९५॥**

अथ कुपाक्षिकाणां गणधरवचनानां श्रद्धानं भवेत् ता—तर्हि हरिभद्राश्रद्धानं—हरिभद्रसूरेर्यत्कतिपयाश्रद्धानं तत्तैः—कुपाक्षिकैरकिं-
चिद् असारमिति भणितव्यं भवेत्, गणधरवचनापेक्षया अकिञ्चित्करत्वादितिगाथार्थः ॥९५॥ अथाकिंचिद्भणने हेतुमाह—

**हरिभद्देणवि भणिअं गणहरवयणं महानिसीहं तं। कहमित्थमसद्दहणं अम्हाणं सम्मयं समए ॥९६॥**

यद्—यस्मात्कारणान्महानिशीथं गणधरवचनं हरिभद्रेणापि—श्रीहरिभद्रसूरिणाऽपि भणितं, 'वृद्धवादस्तु पुनर्यथा तावदिदमार्षं
सूत्रं, विकृतिर्न तावदत्र प्रविष्टा, प्रभूताश्चात्र श्रुतस्कन्धे अर्थाः सुष्ठु अतिशयेन सातिशयानि गणधरोक्तानि चेह वचनानि, तदेवं स्थिते न
किंचिदाशङ्कनीय'मितिस्वरूपेण तत्रैव निगदितं, तदित्यध्याहार्यं, तस्मात्कारणाद् 'इत्थं'ति अत्र कतिपयालापकेष्वप्यश्रद्धानं श्रीहरि-
भद्रसूरेरितिगम्यम्, अस्माकं सम्मतं समये—प्रवचने कथं स्यात् ?, न कथमपीत्यर्थः, यतो हरिभद्रेणापि श्रीमहानिशीथं गणधरोक्तं भणितं,
न पुनः तत्रापि किंचिदन्यकृतमित्यादि भणितं, तत्र यदि श्रीहरिभद्रस्यान्येषामपि तदनुयायिनामश्रद्धानं तर्ह्यस्माकं किम् ?, इत्येव

हेतुः कुपाक्षिकैर्वक्तव्यो भवेत् यदि गणधरवचनात्सा स्यादितिगाथार्थः ॥९६॥ अथ तत्परस्क प्रति हितोपदेशमाह—

हरिभद्दस्सवि देसे न सम्मसद्दहणवयणसवणेण । जइ सयल परिचत्त महानिसीह महासुत्त ॥९७॥
तह अम्हाणवि वयणं तस्सवि तित्थस्स सम्मय सुणिउ । पडिवज्जसु त सुत्त सेसमसेसंव जहइच्छ ॥९८॥

हरिभद्रस्यापि दृष्टे—श्रीमहानिशीथश्रुतस्कन्धस्य चतुर्थाध्ययनेऽपि कतिपयालापकलक्षणे न सम्यक्श्रद्धानमितिलक्षण यद्वचनं तस्य श्रवणेन सर्वमपि—निखिलमपि महासूत्र—सर्वसूत्रातिशायि श्रीमहानिशीथं परित्यक्तं यथा तथा—तेन प्रकारेणास्माकमपि तस्यापि श्रीहरिभद्रसूरेरपि तीर्थसंमतमपि वचनं श्रीमहानिशीथं परमसूत्रं प्रवचनसारभूतमित्यादिरूपेणोद्घोष्यमाण श्रुत्वा—निशम्य तत्सूत्र श्रीमहानिशीथाख्यं प्रतिपद्यस्व—प्रमाणत्वेन स्वीकुरुष्व, कीदृश !—'शेषं' चतुर्थाध्ययनगतकतिपयालापकव्यतिरिक्तम्, अशेषं वा संपूर्ण वा 'यथेच्छम्' इच्छामनतिक्रम्य, एव च सति गणधरवचन श्रीहरिभद्रवचन अस्मदीयवचनं च सर्वमपि स्वीकृत भवेत्, अन्यथा यथा कतिपयपदाश्रद्धानमिति परोक्तं श्रुत्वा सकलमपि श्रीमहानिशीथं त्यक्तं तथा श्रीमहानिशीथं नास्माकं प्रमाणमिति परोक्तं श्रुत्वा शेषसूत्राण्यप्यङ्गोपाङ्गादिलक्षणानि परिहर्तव्यानि स्युः, गणधरकृतसूत्रत्वेन सर्वत्राप्यविशेषात्, देशाश्रद्धाने सर्वाश्रद्धानस्य युक्तितौल्यादिति हितोपदेश इतिगाथायुग्मार्थः ॥९७॥९८॥ अथ यः कश्चिदोकेशपालप्रभृतिः श्रीहरिभद्रं प्रमाणयन्नपि महानिशीथ न प्रमाणयति तत्स्वरूपमाह—

हरिभद्दपि पमाण भणिऊण महानिसीहमपमाण । जो भासइ सो भापामेवमानापमावण्णो ॥१००॥

ननु चतुर्दशीपक्षैरपि कैश्चित् श्रीमहानिशीथं न प्रमाणीक्रियते, तत्र किं निदानमिति चेदुच्यते चतुर्दशीपाक्षिकाभ्युपगममीत्यित्

चैत्यस्थितिपरित्यागभीतेर्विद्यमानत्वात्, प्रायः स्वाभ्युपगतमार्गं दूषयच्छास्त्रं न कस्यापि प्रमाणीस्याद्, अत एव प्रतिमाभ्युपगमभयेन लुम्पाकेनाप्येतन्नाभ्युपगम्यते, यत्तु चैत्यवासाभावेऽपि साम्प्रतीनानां केषांचिन्महानिशीथानङ्गीकारभापणं तच्चैत्यवासिवचनानुवाद एव बोध्यः, न पुनः परमार्थमवगम्याप्येतद्भाषणमिति गाथार्थः॥९९॥ अथ श्रीमहानिशीथपरित्यागाभिप्रायेण पुनरपि राकारक्तः शङ्कते—

**नणु उवहाणाभावे मगलमाईण जं च अज्झयणं। जिणवरपमुहासायण अणंतसंसारयाहेऊ ॥१००॥**

'उपधानाभावे' उपधानोद्वहनमन्तरेण 'मंगलाईणं'ति पञ्चमङ्गलमहाश्रुतस्कन्धादीनामध्ययनं यत् तत् जिनवरप्रमुखाणाम्—अर्हत्सिद्धाचार्योपाध्यायसाधूनामाशातना अनन्तसंसारहेतुर्भवेद्, यदुक्तं—"से भयवं! महती एसा निअंतणा कहं बालेहिं कज्जति?, गोअमा! जे णं केइ न इच्छेज्जा एअं निअंतणं, अविणओवहाणेणं चेव पंचमंगलाइसुअणाणमहिज्जेइ अज्झावेइ वा अज्झावयमाणस्स वा अणुण्णं पयाइ, से णं न हवेज्जा पिअधम्मे न भवेज्जा दढधम्मे न भवेज्जा भत्तिजुए, हीलिज्जा सुत्तं हीलिज्जा अत्थं हीलिज्जा सुत्तत्थोभए हीलिज्जा गुरुं जाव णं से गुरुं आसाएज्जा अतीताणागयतित्थयरे आसाएज्जा आयरिउवज्झायसाहुणो, जे णं आसाएज्जा सुअणाणमरिहंतसिद्धसाहू से तस्स णं सुदीहयालमणंतसंसारसागरं आहिंडमाणस्स" इत्यादि प्रागुक्तम्, अस्यालापकस्य संक्षेपार्थस्त्वेवं—यः कश्चित्प्राणी पञ्चमङ्गलादीनि सूत्राण्युपधानोद्वहनमन्तरेणाधीतेऽध्यापयति अध्यापयन्तमन्यमनुजानीते स आशातयति सूत्रार्थोभयरूपमागमं गुरुं त्रिकालभावितीर्थकरसिद्धाचार्योपाध्यायसाधूंश्च, तत्राशातनाप्रत्ययं तत्कर्म बध्नाति येन चतुरशीतियोनिलक्षसंभवानि नानादुःखान्यनुभवन्ननन्तसंसारं परिभ्रमति, यस्तूपधानोद्वहनपूर्वकमेतान्यधीते स आशातनाजन्यकर्मबन्धरहितः सुलभबोधिको भूत्वा संसारोच्छेदं विधत्ते, तथा यावत्प्राणी पुण्यपापयोर्विशेषं न जानीते तावत्तस्य पञ्चमङ्गलं न

देयमित्यत्रानुपधानिनो नमस्काराध्ययनेऽनन्तसंसारितोक्तेति गाथार्थः ॥१००॥ अथ पूर्वपक्षिणोऽभिप्रायमाह—

जइ एअमिअ वयण सम्म ता निअमणंतससारी । सव्वो सावयवग्गो घउपधाणविवज्जिओ हुज्जा ॥१०१॥

यदेतत्प्रागुक्तं वचनं सम्यग्भवेत् ता—र्हि नियमाच्चतुरुपधानविवर्जित सर्वोऽपि श्रावकश्राविकावर्गोऽनन्तसंसारी भवेदित्यक्ष रार्थः, भावार्थस्त्वयं—प्रायः श्रावककुलोत्पन्नानामुपधानवहनमन्तरेणैव नमस्काराध्ययनादि दृश्यते, तेषां तदध्यापकानां चानन्त संसारिता कथं युक्तेति गाथार्थः ॥१०॥ अथ पूर्वपक्षमुपसंहरन्नेव सिद्धान्तमाह—

तेण च्चिअ त मुत्त अपमाणं अम्हमेस संकप्पो । इअ चे पवयणपरमत्थमुणणाविरसस्स चिट्ठेअ ॥१०२॥

तेन कारणेन प्रागुक्तलक्षणेन तत्सूत्र—श्रीमहानिशीथमप्रमाणमेषोऽस्माक—राकारक्तानां संकल्प इति पूर्वपक्षोपसंहारः, सिद्धा न्तमाह—'इअ चे'ति इति चेदुच्यते त्वयं प्रागुक्त प्रवचनपरमार्थज्ञानशून्यचित्तस्य चेष्टा, यथा देवतायक्षस्य यथा तथाऽविमृश्य जल्प नचेष्टा—व्यापारयोः क्रियाविशेषो परपामुपहास्यहेतुस्तथाऽस्यापीति गाथार्थः ॥१०२॥ अथ प्रागुक्तं कथमित्यत्र हेतुमाह—

जमिण दुवालसंग गणिपिडग पाणिणो अणाणाए । पुढयाइविराहित्ता भमतऽणंते भवे घोरे ॥१०३॥

यद्—यस्मात्कारणादिदं द्वादशाङ्ग—सामायिकादिदृष्टिवादपर्यन्त गणिपिटकं अनाज्ञया—जिनाज्ञामन्तरेण विराध्य 'प्राणिनो' नीया' साध्वादयोऽनन्तान् भवान् नारकादिरूपान् घोरान्—दुःखगहना भवान् भ्रमन्ति—पर्यटन्ति, यदागमः—"इमं (इच्चेइयमि) दुवालसंगं अणाणाए विराहेत्ता अतीते काले अणता जीवा चाउरंतसंसारकंतारं परिअट्टिंसु, अणागए काले परिअट्टिस्संति, पडु प्पन्ने काल संखेज्जा जीवा जाव परिअट्टंति"त्ति नन्दीसूत्रे (५८) इति गाथार्थः ॥ १०३ ॥ अथाज्ञाया अभावेऽनाशेतिकस्या

का आज्ञेत्याह—

**आयारो खलु आणा तत्थवि उवहाणमिह महायारो। तयभावे जाऽणाणा महई आसायणा समए ॥१०४॥**

आचारः—कालाद्यष्टप्रकारो ज्ञानाचारः, यदुक्तं—"काले विणए बहुमाणे उवहाणे तहा अनिण्हवणे। वंजणमत्थतदुभए अट्ठविहो णाणमायारो ॥१॥" श्रीदश० नि०। खलुरवधारणे, तत्रापि—कालादिष्वष्टस्वप्याचारेष्विह—प्रवचने उपधानं महाचारः, सम्यग्वर्णाद्युच्चारापेक्षया महानाचारः, तदभावे—उपर्युक्तकारणेन उपधानाभावे अनाज्ञा या सा महती आशातना समये इति गाथार्थः ॥१०४॥

अथ हेतुहेतुमद्भावेन उक्तं समर्थयति—

**तेणं तीए जुत्तं अणंतभवभमणमेव जीवाणं। जं दीसइ अज्झयणं विणावि तं तत्थिमं वुच्छं ॥१०५॥**

उपधानाभावोऽनाज्ञा, सा च महती आशातना, तेन कारणेन तया—आशातनया जीवानामनन्तभवभ्रमणमेव युक्तम्, आशातनायास्तद्धेतुत्वाद्, यदागमः—"आसायण मिच्छत्तं आसायणवज्जणा उ सम्मत्तं। आसायणानिमित्तं कुवइ दीहं च संसारं १॥" इत्युपदेशमालायां (४१०) तद्विनापि—उपधानोद्वहनं विनापि यदध्ययनं सामायिकादिसूत्राणां दृश्यते तत्रेदं वक्ष्ये—अनन्तरगाथायां भणिष्यामीतिगाथार्थः ॥४॥ अथ वक्ष्ये इति यदुक्तं तदाह—

**उवहाणवहणआसाजुत्ताणं जुत्तमेव अज्झयणं। जह जा छज्जीवणिअं अहिज्ज पव्वज्जआसाए ॥१०६॥**

उपधानवहनाशा—सति सामर्थ्ये सति च प्रस्तावे उपधानोद्वहनं करिष्यामीतिरूपा तया युक्तानामुपधानश्रद्धानपूर्वकतद्वहनाशाकलितचेतसामध्ययनं—सामायिकादिसूत्राणां पठनं युक्तमेव, दृष्टान्तमाह—यथा प्रव्रज्याशया—दीक्षाग्रहणेच्छया यावत् षड्जीवनिकं-

नमस्कारादिषड्जीवनिकायपर्यन्तमध्यापयेच्छ्रुतमितिगम्य यदुक्त [ निशीथचूर्णौ ]—सावगस्स जहन्नेणं अट्ठ पया, उक्कोसेणं छज्जीव णिया सुत्तओवि अत्थओवि, पिंडेसणज्झयणं न सुत्तओ, अत्थओ पुण उल्लावेण सुणाइ' आवश्यकचूर्णौ (२ १९० पूर्णौ) ॥१०६॥ अथोपधानवहनावस्थायामपि उपधानविधिमन्तरेण कियच्छ्रुतमध्येतव्यमित्याह—

ज जीए किरिआए उवओगी त तयट्ठमाणन्ति। तेणमुवहाणजोग्गं अहिज्ज अब्भासवुद्धीए ॥१०७॥

यद् यस्या क्रियाया उपयोगि—तद्धेतुभूत तदर्थं—तस्याः क्रियाया निमित्त तद्—तावन्मात्रमध्येतव्यमित्याज्ञा, नाधिकं, तेन कारणेनाभ्यासबुद्ध्या, तद्धेतुभूतक्रियाभ्यासायेत्यर्थः, उपधानयोग्य—यावदुपधानोपयोगि तदधीयेतेति गाथार्थः ॥१०७॥ अथो पधानोपयोगि श्रुतमुपधानमन्तरेणाप्यधीयेतेत्यतः किं संपन्नमित्याह—

तेण उवहाणकिरिआ पोसहपमुहावि जुज्जए तेसिं। एवं सेसेऽवि सुअं आवस्सअजोगकिरिअट्ठा ॥१०८॥

येन कारणेनोपधानोद्वहनाख्यया नमस्कारादि श्रुतमभ्यस्यते तेन कारणेन पौषधप्रमुखाऽप्युपधानक्रियाऽपि युज्यते तेषां श्राव काणां, तथाविधश्रुताभ्यासं विना पौषधादिक्रियाया एवासंभवात्, ननु श्रीमहानिशीथे तपोमात्रमेवोपधानमुक्तं, कथं तर्हि पौषधादि क्रियानिमित्तमभ्यास इति चेदुच्यते, यद्यपि श्रीमहानिशीथे पौषधादिक्रिया साक्षान्नोक्ता, तथापि यथा साधोर्योगेष्वतिशायिक्रिया- यत्र सर्वदर्शिन तथा श्राद्धानामप्युपधानेषु विलोक्यते, तच्च निरारम्भत्वादिगुणैरेव, ते च सम्यक् पौषधस्वीकार एव स्युर्नान्यथा, अत एव पूर्वाचार्यप्रणीतेषु सामाचार्यादिग्रन्थेषूपधानविधौ च साक्षादेव पौषधादिर्दृश्यते,न च सामाचारीग्रन्थो नास्माकं प्रमाण मिति वाच्य, यतो योगविधिरपि सामाचारीग्रन्थेष्वेवोपलभ्यते, न पुनः क्वापि सिद्धान्ते, तथा च योगविधिरपि परिहर्तव्य आ-

पद्येत, तस्माच्छ्राद्धानामुपधानेषु पौषधग्रहणादि विधिर्योगविधिवत् प्रमाणयितव्य इति सिद्धं नमस्काराद्यभ्यामः पोषधक्रियाहेतुत्वेन
नमस्कारादिश्रुताराधनहेतुरेव, एवं श्राद्धवच्छैक्षेऽपि-नवदीक्षितशिष्येऽपि श्रीआवश्यकयोगक्रियार्थे-श्रीआवश्यकश्रुतस्कन्धाराधन-
क्रियानिमित्तमेव सामायिकादिषड्जीवनिकापर्यन्तं श्रुतं मतं-सम्मतं, ज्ञेयमिति गम्यमिति गाथार्थः ॥१०८॥ अथोपधानोद्वहना-
काङ्क्षया सामायिकाद्यध्ययनमभ्युपगम्यते तर्हि कथं नाचाराङ्गादिष्वपीत्यतिप्रसङ्गं निवारयन्नाह—

**जं आवस्सयखंधो उवजुज्जइ निअपरेसि किरिआसु। दीवुव तेण पढमं अहिकिज्जइ न उण सेससुअं ॥१०९॥**

यद्-यस्मादावश्यकश्रुतस्कन्धो निजपरयोः क्रियासु-श्रीआवश्यकश्रुतस्कन्धतदतिरिक्तश्रुताराधनक्रियासूपयुज्यते-उपयोगी
स्यात् तेन कारणेन दीपवत्प्रथममधिक्रियते, उपधानयोगोद्वहनात् तत् पूर्वमेवाभ्यस्यते, न पुनः शेषश्रुतम्-आचाराङ्गादिश्रुतमि-
त्यक्षरार्थः, भावार्थस्त्वयम्-आवश्यकश्रुतस्कन्धो ह्यभ्यस्तः आवश्यकश्रुतस्कन्धस्यैवाराधनहेतवे यान्युपधानानि तत्संबन्धिनीषु
क्रियासूपयोगी स्याद्, अन्यथा तद्विधेरेवासंभवात्, तथा परक्रियासु श्रीआचाराङ्गप्रमुखाखिलश्रुताराधनहेतुयोगक्रियास्वपि, तत्र
दृष्टान्तमाह-यथा प्रदीपः, स हि स्वपरविषयकप्रकाशनक्रियोपयोगी अहं प्रदीपं घटादिकं च पश्यामीति प्रदीपघटादिदिदृक्षुणा
संतमसे प्रथमं प्रदीप एवाधिक्रियते,प्रथमं प्रगुणीक्रियते(च),प्रदीपमन्तरेणोभयोरपि प्रकाशासंभवात्,न पुनस्तद्वच्छेषमाचाराङ्गादिश्रुत-
मुपधानयोगाभ्यां पूर्वमभ्यसनीयं, यतो नाचाराङ्गादिश्रुतं स्वोपधानक्रियोपयोगि नवा परोपधानक्रियोपयोगि,किंच-आचाराङ्गाद्य-
ध्ययनं प्रव्रजितस्यापि वर्षत्रयपर्यायाद्यतिक्रमेऽनुज्ञातं, यदुक्तं-"तिवरिसपरिआगस्स समणस्स निग्गंथस्स कप्पति आयारपकप्पना-
ममज्झयणं उद्दिसित्तए, चउवरिसपरिआगस्स० नि० सुत्तगडे नाममंगे उ० पंचवासपरिआगस्स सम० नि० दसाकप्पववहारा-

नामज्झयणा उद्दिसित्तए, अट्ठवासपरिआगस्स० नि० ठाणसमवायए नामं अंगे उ०, दसवास० परि० सम० नि० कप्पइ वियाह पण्ण० अंगे उ० इत्यादियावत् वीसतिवासपरि० सम० निग्गंथे सव्वसुआणुवाई भवति" त्ति। श्रीव्यवहारसूत्रे (३–१०उ० २२–३६) एवं च सति कथं तथाविधं श्रुतमुपधानाद्युपयोगीति, सामायिकादिसूत्राणां तथास्वभावात्, अत एवाधीतसामायिकादिसूत्राणामेव साधूनां योगोद्वहनविधिरनादिप्रवाहपतितो दृश्यते, अनादित्वं चतुर्दशीप्रवचनकषायाभिधानाभाववदेतस्य वर्णकस्याप्याचार्यस्याभिधानाभावादिति नातिप्रसङ्ग इति गाथार्थः ॥१०९॥ अथोपधानरूपश्रुतोपचारक्रिया सर्वेषां नियता उत नेत्याशङ्कायामाह—

सुत्तोवयारकिरिआ सुअववहारीण तित्थयरकहिआ। आगमववहारीणं चलिआण नेवमवि निअमो ॥११०॥

श्रुतोपचारक्रिया–उपधानरूपा 'श्रुतव्यवहारिणां' आगमादिव्यवहारपञ्चकमध्ये द्वितीयव्यवहारमाश्रितानाम्, एवकारोऽध्याहार्यः, तेषामेव, 'तीर्थङ्करकथिता' जिनेन्द्रैरुपदिष्टा, आगमव्यवहारिणाम्–अवधिमनःपर्यायकेवलज्ञानचतुर्दशदशनवपूर्वश्रुतामेवमुपधान क्रिया कर्त्तव्येत्येवं न नियमः, अपितु कदाचित्कुलविशेषं प्रतीत्य भवत्यपि, नियमाभावे हेतुमाह–'चलिआण'त्ति यतस्तेषां किल धर्मानाम्–चलितानाम्–आगमव्यवहारिणो चलिता–शेषव्यवहारापेक्षया चलवन्तः, यदागमः–"आगमबलिआ समणा निग्गंथा" त्ति (१०–४२१) श्रीस्थानाङ्गे इति गाथार्थः ॥११०॥ अथागमव्यवहारिणः स्वरूपमाह—

जं आगमववहारी सुअनिरविक्खो पडुच्च कंपि नरं। अज्झाविज्जसुवहाणं विणेव जह धण्णमणगारं ॥१११॥

यत्–यस्मादागमव्यवहारी 'श्रुतनिरपेक्षः' श्रुतस्य–आचाराङ्गादेर्निर्गताऽपेक्षा–तदनुसृत्य प्रवृत्तिर्यस्य स तथा, कमपि–कञ्चि नरं–साध्वादिलक्षणं प्रतीत्य–आश्रित्योपधानं विनैवाध्यापयेत् यथा धन्यमनगारं–धन्यर्षिनामानं योगोद्वहनमन्तरेण श्रुतोक्तविध्यपे

क्षया प्रकारान्तरविधिना वा एकादशाङ्गीमध्यापितवन्तः स्थविराः, यदागमः—"तए णं धण्णे अणगारे समणस्स भगवओ महावीरस्स
तहारूवाणं थेराणं अंतिए सामाइअमाइआइं इक्कारस अंगाइं अहिज्जति२ संजमेणं तवसा अप्पाणं भावेमाणे विहरति' इत्यादि यावत्
'मासिआए संलेहणाए नवमासपरिआओ जाव कालमासे कालं किच्चा उड्ढंचंदिमजावनवगेविज्जविमाणपत्थडे उड्ढं दूरं वीतीवतित्ता
सव्वट्ठसिद्धे विमाणे देवत्ताए उववण्णे"त्ति श्रीअनुत्तरोपपातिके (१६उ०३-४-५) अत्र नवमासपर्यायेऽपि धन्नर्षिरेकादशाङ्गधरः कथितः,
स च श्रुतव्यवहारानुगतयोगानुष्ठानवान्न संभवति, तावता कालेन योगानुष्ठानासंभवात्, तथा "तिवरिसपरिआगस्स समणस्स
निग्गंथस्स कप्पति आयारपकप्पनाममज्झयणमुद्दिसित्तए" इत्यादिपर्यायप्राप्तेरप्यसंभवात्, तेन यथाऽत्र पर्यायप्राप्त्यभावेऽपि तद-
ध्ययनं तथा योगाद्यभावेऽपि, यद्वा आगमव्यवहारिणा अन्यः कोऽपि योगविधिः कारितो भविष्यति, परं न स श्रुतव्यवहारि-
णाऽनुष्ठेय इति तात्पर्यमितिगाथार्थः ॥१११॥ अथागमव्यवहारापेक्षा श्रुतव्यवहारिणो न युक्ता, तदपेक्षायां च दोषमाह—

न तहा सुअववहारी तयविक्खे अण्णहोवएसिज्जा। वेसाघरचउमासं सीसं संभूअविजउव्व ॥११२॥

यथा आगमव्यवहारिणा श्रुतमध्यापितं तथा तदपेक्षः—आगमव्यवहारापेक्षः श्रुतव्यवहारी न स्याद्, अन्यथा—तदपेक्षायां
संभूतविजयवच्छिष्यं प्रति वेश्यागृहे चतुर्मासिकमुपदिशेत्, यथा आगमव्यवहारिणा श्रीसंभूतविजयस्वामिनोपकोशागृहे चतुर्मासं
श्रीस्थूलभद्रस्योपदिष्टं तथा श्रुतव्यवहारिणाऽप्युपदेष्टव्यमापद्येतेत्यर्थः, तच्च सर्वेषामप्यसम्मतमितिगाथार्थः ॥११२॥ अथ पुनरपि
श्रीमहानिशीथेऽप्रामाण्यं व्यवस्थापयितुं शङ्कते—

नणु जह महानिसीहे उवहाणविही तहा न अण्णत्थ। कत्थवि दीसइ तेणं हविज्ज अपमाणमक्खाणं ॥११३॥

ननु भो यथा श्रीमहानिशीथे उपधानविधिस्तथा अन्यत्र क्वापि दृश्यते तेन कारणेनास्माकमप्रमाणम्, अर्थान्महानिशीथमिति गाथार्थः ॥११३॥ अथोत्तरमाह—

जइ एवं ता सव्वं परिहरिअव्वं सुअंपि तुज्झ मए। लेवोवासगपमुहा पायमिक्किक्कसुत्तत्था ॥११४॥

यद्येवं प्रागुक्तं तर्हि तव मते सर्वमपि श्रुतं परिहर्तव्यं भवेत्, तत्कथमित्याह—लेपोपासकप्रमुखाः—श्रीसूत्रकृदङ्गद्वितीयश्रुतस्कन्धोक्तलेपश्रावकप्रमुखाः प्रायो—बाहुल्येनैकैकसूत्रोक्ताः—एकैकस्मिन् सूत्रे पठिताः सन्ति, नहि लेपश्रावकवर्णनमन्यत्र तथोपलभ्यते, तथा च द्वितीयाङ्गमपि परिहर्तव्यम्, एवमाचाराङ्गादयोऽपि, न ह्याचाराङ्गोक्तः सर्वोऽपि विचारः सर्वत्रोपलभ्यते, तथोपलम्भे च सर्वेषामप्यैक्यापत्तेरित्यादि स्वयमेव पर्यालोच्यमिति गाथार्थः ॥११४॥ अथ प्रवचनस्वरूपमाह—

तम्हा जिणिंदसासणमायरिअपरंपराणुचरिअं । तंपि य सूआपमुहा कत्थ य ऽसूआवि सूरिपहा ॥११५॥

तस्मात्कारणाज्जिने प्रवचनमाचार्यपरम्परानुचरणीयं, आचार्यपरम्परामन्तरेण न किमप्यनुष्ठानं श्रुतं वा भवेत्, किन्तु तदापयमपि, तेन कारणेन सूचा—आलेपूपधानादिक्रियाणां नामोच्चारादिना सूचनं 'बहुधा' अनेकप्रकारा स्यात्, कस्यचित् क्रियाविशेषस्यागमे—प्रवचनामात्रा, आपि 'सूरिपथा' सूरिरेव पन्था यस्या सा तथा, यद्यप्यागमे नोपलभ्यते तथापि सूरिपरम्परया समागता, अथ भाव—कश्चित् किञ्चिन्नाममात्रेणोपलभ्यते तथैव कश्चित्किञ्चिद्विस्तरेणेत्यादि, किञ्चिच्च नाम्नाऽपि नोपलभ्यते, तस्य केवलं सविस्तरक्रियाक्रमस्यैव परम्परैव मूलं, नान्यदिति गाथार्थः ॥११५॥ अथ प्रकृतमाह—

आयारो उवहाणं सूआमित्तेण णगसुत्तेसु । किंचिवि वित्थरवयणं महानिसीहमि को दोसो ? ॥११६॥

उपधानमाचारो–ज्ञानाचारः, मच्च सूचामात्रेणानेकेषु सूत्रेषु “वसे गुरुकुले निच्चं, जोगवं उवहाणवं” इत्यादिरूपेषु, किंचिद्वि-
स्तरवचनं महानिशीथे, तत्र को दोषो ?, न कोऽपीतिगाथार्थः ॥११६॥ अथ योगोपधानविषये उदाहरणान्याह—

**जोगे आसाढारिअसीसपमुहावि हुंतुदाहरणं। उवहाणि उसभदत्तो जिणदत्तो भायरा दोऽवि ॥११७॥**

योगे आषाढाचार्यशिष्यप्रमुखाः उदाहरणं भवन्ति, तद्व्यतिकरस्तूत्तराध्ययनटीकातोऽवसेयः, आदिशब्दादाचामाम्लतपो-
ऽभिग्रहेणासंख्येयाध्ययनाध्येतृसाधुरपि, उपधाने च ऋषभदत्तजिनदत्तौ द्वावपि भ्रातरौ आचारप्रदीपाद्युक्तौ बोध्याविति गाथार्थः
॥११८॥ अथ प्रकारान्तरेणैव पूर्वपक्षी प्राह—

**सुअखंधे अज्झयणा इच्चाई आगमे कमो दिट्ठो। अज्झयणे सुअखंधो महानिसीहित्ति तं न मयं ॥११८॥**

श्रुतस्कन्धे अध्ययनानि इत्यादिः क्रमः आगमे–अङ्गादौ दृष्टः, श्रीमहानिशीथेऽध्ययने सामायिकलक्षणः श्रुतस्कन्धः नमस्का-
रलक्षणः सामायिकाध्ययनैकदेशो नमस्कारः सोऽपि महाश्रुतस्कन्धतया तत्र भणित इति तत् श्रीमहानिशीथं न मतं–सम्मतं
नास्माकमिति पूर्वपक्षाशय इतिगाथार्थः ॥११८॥ अथोत्तरमाह—

**इअ चे पण्णवणाए पयंमि उद्देसया पया तेसु। लेसापयंमि साविअ कहं पमाणं तुहं होइ ? ॥११९॥**

‘इअ’ इतिचेत्तर्हि प्रज्ञापनायां लेश्यापदे उद्देशका भणिताः, तेषूद्देशेषु च पदा इति प्राकृतत्वात् पुंस्त्वं पदानि विभक्त्यन्तानि
प्रतीतान्येवेति कथं सापि च–प्रज्ञापनाऽपि च तव प्रमाणं भवेत् ?, न कथमपि, क्रमभङ्गादितिगाथार्थः ॥११९॥ अथ नमस्कारस्ता-
वत्सर्वश्रुताभ्यन्तरभूतः, यतः सर्वस्यापि श्रुतस्याद्यं सामायिकसूत्रं, ‘सामाइअमाइआइं इक्कारस अंगाइ’न्ति वचनात्, सामायिकसूत्रं

नारद्ध्ययनरूपं तम्यास्यादिभूत नमस्कारसूत्र, तथाध्ययनैकदेशरूप कथं श्रुतस्कन्धाः, श्रुतमात्रे प्रथमतयाऽध्ययनीयार्हत्वाद्वेति एगानप चेतसि कृत्वा गाथामाह—

मथम्मतरमूओ पञ्चनमुक्कार तेण तव्भूओ। भण्णइ महसुअक्खघो कक्खे साहाण जह मूलं ॥१२०॥

यन कारणेन मताभ्यन्तरभूतस्तेनैव कारणेन पञ्चनमस्कारस्तथाभूतः सन्–सर्वाभ्यन्तरभूतः सन् महाश्रुतस्कन्धो भण्यते, मत्रश्रुतमूलभूतत्वात्, दृष्टान्तमाह–वृक्षे शाखानां मूलं स्कन्धो यथा भण्यते "खंधाउ पच्छा समुवंति साहा" (५–४१६०) इत्या गमवचनाल्लोकप्रतीतत्वाच्चेति सिद्धं श्रुतस्कन्धत्वं नमस्कारस्येतिगाथार्थः ॥१२०॥ अथ सामायिकाध्ययनस्यैकदेशत्वेऽपि श्रुतस्क न्धव्यपदेशे दृष्टान्तमाह—

पउमदहजलदेसो पिहब्भूओ भण्णसिंधुकुंभमभो। तित्थयरोऽवि अ देवो नरजाइजुओ न तप्पभिओ ॥१२१॥

'पद्मद्रहजलदेश' हिमवच्छिखरिस्थितस्य पद्मोपलक्षितो ह्रद 'एतस्य जलदेशस्तदंशभूत' सन् तत्पृथक्भूत' स्कन्धसिंधुकुम्भाम्भो भव ति, समासारहृ इ ,अयं भाव –तत पृथग्भूत' स्कन्धोऽयं सिंधुनदीप कुम्भाम्भ इत्यादिव्यपदेश लभते, अत्र दृष्टोऽपि स्कन्धा- पनव्यपदेशमार्ग प्रदर्शित', तथा तीर्थकराऽपि नरजातेः पृथक्भूत –भूत्वा ततः पृथग्विवक्षितो देवो भवति–देवत्व भजते, न पुनर्नरपतित', तत्र–मनुष्येषु पतितस्तत्पतित',मनुजोऽयमिति सामान्यनाम्ना पतितोऽपीति, व्यपदेशभेद' पार्थक्ये दर्शित इति गाथार्थः ॥१२१॥ अथ विवादापन्ने नमस्कार योजनामाह—

एय पिअ सामाइअपिहब्भूओ पञ्चमगलो भणो। अण्णइ नदिकदेसो णमो विउसाण उवएसो ॥१२२॥

एवम्–अमुना प्रागुक्तप्रकारेण 'चिअ'त्ति निश्चितं सामायिकात् पृथग्भूतः पञ्चमङ्गलः–'नमो अरिहंताण' मित्यादि 'पढमं मंगल'-मितिपर्यन्तनमस्कारलक्षणः स्कन्धो भण्यते अन्यथेति–सामायिकादपृथक्भूतविवक्षायां सामायिकाध्ययनसंबन्धविवक्षायां तदेक-देशः–सामायिकाध्ययनैकदेशः, एप विदुषां–पण्डितानामुपदेशो–वचनमितिगाथार्थः ॥१२२॥ अथ पुनरपि पराशङ्कामाह—

**सक्कस्स य सक्कथए उवहाणं नेव संभविज्जावि । ता कह नराण हुज्जा ? इअ संकप्पो महापावो ॥१२३॥**

ननु शक्रस्तवविपयमुपधानं वादिनां पञ्चत्रिंशद्दिनमानं, तच्च शक्रस्तवे शक्रस्य–इन्द्रस्य न संभवेदपि, 'ता' तर्हि 'नराणां' मनुष्याणां कथं भवेत् ?, इति–अमुना प्रकारेण संकल्पो–विकल्पना 'महापापः' महामोहनीयहेतुकोऽयं विकल्प इति गाथार्थः ॥१२३॥ अथ तद्विकल्पं निराकरोति—

**सक्कत्थओ अ दुविहो देवकओ तहय गणहरेण कओ । दुण्हं सकयत्तणओ असंभवा हुज्ज उवहाणं ॥१२४॥**

शक्रस्तवस्तु द्विविधः–देवकृतः–शक्रादिदेवजनितः तथा गणधरेण कृतश्च, तत्रैकश्चकारो देवकृतेऽनेकभेदसूचकः, नहि देव-कृतोऽपि शक्रस्तव एकः स्वरूपेण स्यात् , किंतु शक्रविजयसूर्याभादिदेवा यथावसर कर्मक्षयोपशमवैचित्र्याद्भिन्नान् भिन्नान् पठितवन्तः, अत एव देवकृताः शक्रस्तवाः अनियतपाठाः, सर्वेषामपि शक्रस्तवाभिधानं च प्रायः शक्रकृतशक्रस्तवानुकारित्वादेव, एवं गणधरकृतेऽपि बोध्यं, 'दुण्हं' ति द्वयोः–शक्रगणधरयोः स्वकृतत्वादुपधानमसंभवि भवेदिति गाथार्थः ॥ १२४ ॥ अथ कथमसंभवीत्याह—

**उद्देससमुद्देसाणुण्णापमुहोवहाणकिरिआओ । गुरुपुव्वे अज्झयणे हवंति सकयंमि नेव गुरू ॥१२५॥**

उदसमुद्देशानुज्ञाप्रमुखोपधानक्रिया अविच्छिन्नपरम्परायाता गुरुपूर्वेऽध्ययने भवति, गुरूपदेशापुपदेष्टा स एव पूर्वं यस्यैवंविधेऽध्ययने स्तु, स्वकृते—स्वयं रचिते शक्रस्तवे सामायिकादिद्वादशाङ्ग्यां च गुरुरेव न स्यात्, गुरुत्वे स्वकृतत्वव्याघातात्, गुरोरभावे चोद्देशादिविभागश्च स्यात् ?, न कोऽपीति शक्रस्तवे शक्रस्योपधानाभावेन मनुष्याणामपि नोचितमिति विकल्पन मह- दज्ञानमितिगाथार्थः ॥१२६॥ अथोपधानेऽपि गुरोरनुज्ञा नैकस्वरूपेति दर्शयति—

गुरुआणा य अणुण्णा दुविहा सावयमुणीणमहिगिच। सम्म धरणे सम्म धरणे दाणे अ कमसयणा ॥१२६॥

गुर्वाज्ञा चानुज्ञा द्विविधा—द्विप्रकारा, कथं ?—श्रावकमुनीनधिकृत्य—आश्रित्य, श्रावकस्यानुज्ञा भिन्ना साधूनां च भिन्नेति, भिन्नत्वं कथमित्याह—'सम्म धरण'त्ति श्रावकस्य सम्यग् धरणेऽनुज्ञा, तथैव—अणुण्णायमित्यादि यावत्सम्मं धारिज्जाहित्ति सम्यग् धारणविषयकमेव गुर्वनुज्ञावचनं, न पुनर्दानानुज्ञाऽपि, साधोस्तु 'सम्मं धारिज्जाहि अन्नेसिं च पवेज्जाहि'त्ति स्वधारणेऽन्येभ्यो दाने चेत्युभयथाऽपि गुर्वनुज्ञावचनमिति क्रमवचनात् क्रमेण द्विधाऽनुज्ञेतिगाथार्थः ॥१२६॥ अथ कथंचित्कदाचिच्छ्रावकेणापि नमस्कारादि दीयमानं दृश्यते, तत्र का गतिरित्याह—

ज पुण कत्थवि सावयदाणे आयस्सगस्स अब्भासो। जह उवहाणाभावे तहऽणुण्णा एवऽमावंमि ॥१२७॥

य पुनः कदाचित्—तथाविधावसरविशेषे तापस्यादिकं प्रति तथाविधभद्रकमिथ्यादृशमपि सम्यक्त्वाभिमुखं विज्ञाय श्रावक दाने-श्रावकेणापि दाने—नमस्कारादिपठने नमस्कारादि श्रावकयोग्यस्य श्रुतस्याभ्यासः प्रागुक्तलक्षणो भवतीति बोध्य, कथमि त्याह—'जह उवहाणाभावे'त्ति यथोपधानाभावे उपधानवहनाभिप्रायवतस्तदभ्यासः तथाऽनुज्ञाया अप्यभावेऽभ्यासः सम्यगेव,एतेन

यदि श्रीमहानिशीथोक्तं सत्यं स्यात् तर्हि नूपुरपण्डिता-
पुण्यपापविशेषं जानतो नमस्कारो देयो,नान्यस्य लाघवापादनादित्यादि यदि श्रीमहानिशीथोक्तं सत्यं स्यात् तर्हि नूपुरपण्डिता-
पुण्यपापविशेषं जानतो नमस्कारो देयो,नान्यस्य लाघवापादनादित्यादि
कथानके तथाविधविवेकविकलस्यापि शूलिकाप्रोतस्य मिण्ठस्य जलं मार्गयतः पञ्चनमस्कारपाठनं देवत्वहेतुः सुदर्शनकथानके
प्राग्भवे तज्जीवस्य सुभगाख्यमहिपीपालस्य ऋषभदासश्रेष्ठिना नमस्कारादिशिक्षणमनुचितं स्यादित्यादिशतपदीकारादीनां मौखर्यं
निरस्तं, यतो मुख्यवृत्तिस्तावत्स्वभावतः प्रवृत्तिरुत्सर्गरूपा, उत्सर्गस्त्वपवादघटित एव स्याद्, यदागमः-"जावइआ उस्सग्गा
तावइआ चेव हुंति अववाया। जावइआ अववाया उस्सग्गा तत्तिआ चेव॥१॥" व्यव० भाष्ये, तथा चोत्सर्गे निरूपिते क्वाप्यपवादोऽप्य-
वश्यं वक्तव्य एव,सच शूलिकाप्रोतमिण्ठादिपुरुषेभ्यः क्वोपयुज्यते अन्यत्र?,अत एव प्रवचनमनैकान्तिकं,यदुक्तं-"तम्हा सव्वाणुणा सव्व-
निसेहो य पवयणे नत्थि। आय वयं तुलिज्जा लाहाकंखिव्व वाणिअउ॥१॥"त्ति श्रीउपदे०,न चैवमुत्सर्गेणापवादः पराक्रियते,'उत्स-
र्गादपवादो बलीया'निति न्यायात् अपवादस्य बलीयस्त्वाद्, द्वयोरपि व्यत्ययतयाऽऽसेवने वामदक्षिणयोरक्ष्णोर्व्यत्ययकरणवदनर्थ
एव, यत्तु कश्चिदुपधानद्विट् शरप्रहतशकुनिका श्रीपार्श्वनाथजीवो हस्ती श्रीसुव्रतपार्श्वाश्वः श्रेष्ठिपुत्रो मत्स्यश्चेत्यादय उपधानविकलाः
कथं नमस्कार श्राविता इत्यादि लपति तच्च महदज्ञानमेव, यतः श्रावणं नागमे निषिद्धं, किंतु तदध्ययनाध्यापने इति, कथमन्यथा
कालिकश्रुतमप्याचाराङ्गादि श्रावकेभ्यः श्राव्यते इत्यादि स्वयमेव पर्यालोच्यमितिगाथार्थः ॥१२७॥ अथोपधानाभावेऽपि
कथं शुद्धिरित्याह--

**तहविहसामग्गीए अभावओ सुद्धभावओ सुद्धी। कस्सइ जा साऽऽलोअणविहिव्व सव्वत्थ न पमाणं ॥१२८॥**

तथाविधसामग्र्याः-तपःकरणशक्तिगुर्वादिलक्षणाया अभावात्कस्यचित्,न पुनः सर्वस्यापि, शुद्धभावतः उपधानवहनाभिमुखस्य

शुद्धिया रसते मा आलोचनाविधिना, यथाऽऽलोचना जिगृक्षु शुद्धपरिणामो गुर्वादिसामग्र्यभावे तदभिमुखोऽनालोचितपातकोऽपि शुद्धो भवति तथाऽयमपि, परं नाय प्रकारः सर्वत्र प्रमाणं, कथञ्चित्कादाचित्कत्वात्, नहि मरुदेवीसिद्धिमपेक्ष्य द्रव्यचारित्र ग्रहणे निराग्रहता युक्तेति गाथार्थ ॥ १२८ ॥ अथोपधानतपोऽपि श्रुताध्ययनयोग्यस्यैवेति योग्यायोग्ययो स्वरूप गाथाष्टकेन विभणिषु प्रथमगाथामाह—

जुग्गाजुग्गविआरो अज्झयणज्झावणम्मि जिणभणिओ।
आमघडजलाहरणविसेसओ मत्तसुअकम्मे ॥ १२९ ॥

'योग्यायोग्ययोर्विचार' अयमतस्य श्रुतस्याध्ययने योग्योऽयोग्यो वेत्येवरूपेण पर्यालोचनमर्थादध्यापकस्याध्ययनाध्यापने जिनभणित -तीर्थकृतोक्त, किमुदाहरणात्?–'आमघटजलोदाहरणात्, आम–अपक्वे घटे जल यथा द्वयोरपि विनाशहेतु, यदागम –"आम घडे निहत्तं जहा जलं त घडं विणासेइ। इअ सिद्धंतरहस्सं अप्पाहारं विणासेइ" ॥१॥ २–पृष्ठ १३७–२ न–पृष्ठ ५५–२ पंच–९८०) इति, महाश्रुतस्कन्ध अथापदध्ययन विक्षपतो योग्यायोग्यविचारो युक्त, सर्वश्रुताभ्यन्तरभूतत्वेन परम मन्त्रात्मकत्वादिति गाथार्थ ॥१२९॥ अथ योग्यस्य सामान्यतो विशेषतश्च लक्षणमाह—

सामण्णेण ओग्गो अब्भुग्गहिअमई सुअमण्णो। किरिआराहणरसिओ गुरूजणसंऽपऽभिमुहो वा ॥१३०॥

सामान्येन–नमस्काराध्ययनार्हस्य सामान्यलक्षणं तावदभ्युद्गाहितः सन् श्रुममन्यः, कृपाविवेकैरभ्युद्गाहित श्रुम–नमस्काराध्ययनं हितमिति मन्यमानः सर्वोऽपि सामान्येन नमस्काराध्ययनयोग्य, अथोपरमेन विशेषलक्षणमाह– 'किरी'त्यादि, विध्या-

राधनरसिकः—उपधानादितपःप्रभृतिलक्षणेन विधिनाऽऽराधने तत्परः, अथवा गुरूपदेशमपि, अपिरेवार्थे, गुरूपदेशमेवाभिमुखः तदा-
राधनादिविषये गुरूपदेशश्रवणे समुत्सुको 'विशेषः सामान्यालिङ्गित एवे'तिन्यायात् सामान्यलक्षणयुक्तो यदि तदाराधनविधिरसि-
कस्तर्हि विशेषेणेतिगम्यं योग्यो भवतीतिगाथार्थः ॥१३०॥ अथ योग्यस्य लक्षणमाह—

**वुग्गाहिओ अ जो सोऽणरिहो अहवा परम्मुहो विहिओ। महसुअखंधज्झयणे कुवक्खवग्गुव्व सवणेऽवि ॥१३१॥**

व्युद्ग्राहितः—कुपाक्षिकवासितो यः सोऽनर्हः—अयोग्यः, क ?—महाश्रुतस्कन्धाध्ययने,तस्य नमस्काराध्ययनं न युक्तमित्यर्थः,
अथवा अव्युद्ग्राहितोऽपि विधितो—विधिकरणात्पराङ्मुखः, किमनेनोपधानतपोविधिनेत्येवंरूपेण तद्विधिश्रद्धानविकलः, परं
व्युद्ग्राहितापेक्षयाऽल्पदोषभाग्, मार्गपतितत्वात्, कदाचित्कथंचिच्छ्रद्धानसंभवस्याशाप्रतिबद्धत्वाद्, अनर्हः, किंवत् ?—'कुपाक्षि-
कवर्गवत्' यथा कुपाक्षिकसमूहः पञ्चमङ्गलाध्ययनानर्हः, आस्तामध्ययनं दूरेण, श्रवणेऽपि न योग्यः, न चैवं दृष्टान्तदार्ष्टान्तिक-
योरैक्यमित्याशङ्कनीयं, व्युद्ग्राहितस्य कुपाक्षिकमार्गाद्भिन्नस्यापि संभवादितिगाथार्थः ॥१३१॥ अथ कुपाक्षिकवर्गस्यार्हन्नामादि-
श्रवणमपि नोचितं, तत् कथमित्याह—

**जण्णं कुमईवग्गो अरहंताईण णाम समरंता। पडसमयं मह पावं अणंतभवकारणं जणइ ॥१३२॥**

यद्—यस्मात्कुमतिवर्गोऽर्हदादीनां नाम स्मरन्, अपिर्गम्यः स्मरन्नपि, प्रतिसमयमनन्तभवकारणं महापापं जनयति—अर्जयतीति
गाथार्थः ॥१३२॥ अथ तादृशं पापं कथमित्याह—

**निअनिअमयाणुरत्ते अरिहंताईवि मणसि काऊणं। झाइज्जा तमजुत्तं कलंकदाणं महंताणं ॥१३३॥**

पगदोर्नित्यामिर्मय पान यम्—यम्मात्कारणा"हदादीनपि म्वस्वमतानुरक्तानेव मनमि कृत्वा कुपाथिकवर्गो ध्यायेत्, न शार्हदादय' कुपाथिकविकल्पितयागभदानभाजो भवन्ति, तत तत्तथावचन महताम्—अर्हदादीनां कलङ्कदानमेवेति महापातकं, यस्तुतस्तु तथाविधाचारविकल्पनाकल एव तथाविधाचारप्ररूपकाणामर्हदादीनामपि सङ्कल्पनासम्भवात्, अन्यथा स्वाचारस्य प्रामाण्य वक्तुमशक्यत्वात्, अत एव तथाविधाचारार्हदादीनां कल्पना महापातकमितिगाथार्थः ॥२३॥ अथ नाम्ना साम्येऽपि भिन्नत्वे दृष्टान्तमाह—

परममरुत्तिनाम जा" गग मिस्समिस्सअत्थमुअ। निअनिअमयफलहेऊ आयारायारमाणवसा ॥२४॥

परमपर इत्यक नाम 'मिश्रमिश्रार्थयुत' निजनिजाचारप्ररूपकत्वेन विकल्पितानेककोटिपरमेश्वरवाचक निजमतफलहेतुर्भवति, कस्मात्?—आचाराकारध्यानवशात्, आचार —म ध्यानवन्दनाभिपूजादिलक्षण आकार —अक्षमकत्रिशूलगदादिग्रहणमुद्राविचित्रवाहनलिङ्गादिरूप, आचाराकारयोर्ध्यानमस्मदीय आचारः कीदृगाकारभृता केन प्ररूपित इत्यादि मनसा चिन्तन तद्वशात्—न पारग ध्यात्, अय भाव'—बौदादीनां सर्वेषामपि यो देव स परमेश्वरत्वेनैवाभिमत, तत्र नामैकमपि निजनिजविकल्पनानुसारे णानेकमतनपश्चाभिधानाथ सपद्य तन्नाम्ना ध्यानं कुर्वाणा अपि निजनिजाचारप्ररूपकं तथाविधविचित्राकारवती च मूर्ति ध्यायति, तद्ध्यान च न मतभेदानायासकमेवेतिकृत्वा यथास्वं मतमताचारगोपनन, तदेव ध्यानेनापि, तदनन्यपरिणामरूपत्वादितिगाथार्थ ॥१३४॥ अथ तथाविधपरिणामादिद्युपायोपायमाह—

पुच्छिज्जंतो कोओ निअनिअआयारभासग भणई। आयार पुण केसिमरमाइ अपिमस्साई ॥१३०॥

लाको पाचान कुत्रदान' स च 'पृच्छ्यमानः' प्रश्नविषयीक्रियमाणः ननु भोः को भवतां परमेश्वर इत्यर्थमवश्य प्रेममाण इत्यर्थ,

परस्परप्रामाण्यसापेक्षं,
'निजनिजाचारभापकं' स्वकीयस्वकीयमार्गप्रणेतारं परमेश्वर भणति, एवं च सति परमेश्वराचारयोः प्रामाण्यं परस्परप्रामाण्यसापेक्षं,
तच्चैवं–परमेश्वरे प्रामाण्यं स्वाभिमताचारप्ररूपकत्वादेव, आचारे च प्रामाण्यं तथाविधपरमेश्वरप्ररूपितत्वादेव, परमेश्वरस्याप्रामाण्ये
आचारस्याप्यप्रमाण्यमाचारस्याप्रामाण्ये च परमेश्वरस्याप्रामाण्यमेवेति परस्परसापेक्षता, सा च विचार्यमाणा परमेश्वराचारयोः कथं-
चिदैक्यमेव सूचयति स, अतः स्वाचारानन्यरूपत्वात्परमेश्वरध्यानमकिञ्चित्करमेव मिथ्यादृशां, तथा आकारं पुनः ब्रह्मेश्वरादिवि-
म्बरूपाणि भणति, ननु भो भवतां परमेश्वरस्य कीदृगाकार इत्येवं प्रेरितो भणति कश्चिद् ब्रह्ममूर्त्तिं कश्चिदीश्वरलिङ्गम्, आदिशब्दान्ना-
रायणादिमूर्त्तिप्रभृतिकम्, एवं च सति नाम्नैकत्वेऽपि निजनिजाचाराकारध्यानपारतन्त्र्यान्निजनिजमतक्रियाजन्यमेव फलं परमेश्व-
रध्यानेऽपीतिगाथार्थः ॥१३५॥ अथोक्तं दृष्टान्तं प्रकृते योजयितुमाह—

एवं कुवक्खवग्गो पुच्छिज्जंतोऽवि भणइ अम्हाणं। सद्दहणाइसमा जे ते अरिहंताइणोऽभिमया ॥१३६॥

एवमुक्तन्यायेन कुपाक्षिकवर्गः पृच्छ्यमानोऽपि भणति–येऽस्माकं श्रद्धानादिसमास्त एवार्हदादयोऽभिमताः–नमोअरिहंताणमि-
त्यादिनमस्कारावल्या स्मर्यमाणास्तथाभूता एव ध्यानगोचरीभवन्ति, न पुनरतत्श्रद्धानभाजो, न वाऽस्मद्विपरीतमुपदिशन्तोऽपीति
स्पष्टमेव नमस्कार जपन्तोऽपि प्रतिसमयमनन्तभवभोग्यं क्लिष्टकर्मार्जयन्तीति गाथार्थः ॥ १३६ ॥ इतिगाथाष्टकेन नमस्कारा-
ध्ययने योग्यायोग्यविचार विधाय योग्यस्यैव नमस्काराध्ययनाध्यापने योग्ये, नान्यस्येति प्रदर्श्याथोपधानमपि कथं
जिनाज्ञेति दर्शयति—

उवहाणं पुण नाणा जह तह रइअंमि जेण केणावि। किंतु रयणाविसेसे पुरिसविसेसेण जहजुग्गं ॥१३७॥

उपधानं पुनर्येन केनापि पुरुषेण यथा तथा रचितेन श्रुतेन नाज्ञा–जिनाज्ञा न भवति, किन्तु पुरुषविशेषेण–आगमव्यवहारिणा 'रचनाविशेष' सूत्ररचनात्मके श्रुते 'यथायोग्य' योग्यस्थानतिक्रमेण, अन्यथैरिवागमव्यवहारकाले उपधानं न भवत्यपि, आगमस्य तत्रापन, अनियतविधिरपि कश्चिन् कस्यापि संभवति, नियतविधिनोपधानं श्रुतव्यवहारकाले भवत्येवेति यथायोग्यमितिपदमिति गाथार्थ ॥१३७॥ अथ दृष्टान्तमाह—

जह सुअकेवलिरइए निज्जुत्तिमुहम्मि नत्थि उवहाणं। पज्जोसवणाकप्पे अत्थि तओ तंपि पेगविहं ॥१३८॥

यथा श्रुतकेवलिना श्रीमद्भद्रबाहुस्वामिना रचित निर्युक्तिप्रमुखे–आवश्यकादिनिर्युक्त्युपसर्गहरजइआससमणेमयवमित्यादि स्तोत्राणामुपधानं नास्ति, अस्ति च श्रीपर्युषणाकल्पसूत्रे, कल्पमात्रेऽपि रचनाविशेष एवोपधानं भणितं, यत एवं ततस्तदपि–उपधानमपि अनेकविधं–नानाप्रकारं कालिकोत्कालिकादि, नियतदिननियततपोलक्षणं जिनाज्ञया, न पुन स्वेच्छया, अत एवाचाराङ्गे पञ्चाशद्दिनात्मको योग' स्थानाङ्गे तु प्रत्यगीयमन्य'ष्यष्टादशदिनात्मक इत्यादिसूरिपरम्परायातविधिनेतिगाथार्थं ॥ १३८ ॥ अथ राकामतो युग्येोपसंहारमाह —

इअ पुण्णिमगमूले उस्सुत्त तिविहमेअमिहमुत्त। माहूपइट्ठामउदसिमहानिसीहाण पडिसेहो ॥१३९॥

इति–प्रागुक्तप्रकारेण पूर्णिमामतमूलमेतत् उत्सूत्र त्रिविधमिहोक्तम्, तत्स्किमि याह–'साहू'त्ति साधुप्रतिष्ठा 'चउदसी'ति परैकदेशे परममूलदोषपागचतुर्दशीपाक्षिक महानिशीथं–श्रीमहानिशीथसंज्ञकं सूत्रं ततो द्वन्द्वस्तेषां प्रतिषेधः, साधुप्रतिष्ठाप्रतिषेधा अथान् भावरूपनिमुनि मागनाशो मार्गेश्वनारूपं महोत्सव, तथा चतुर्दशीपाक्षिकनिषेध अमात्पूर्णिमापाक्षिकाभ्युपगम इत्यत्रापि

मार्गनाशोन्मार्गदेशनात्मकं महोत्सूत्रं द्वितीयं, श्रीमहानिशीथप्रतिषेधो मार्गनाशलक्षणं, तदपि सर्वश्रुतातिशायितश्रुतप्रतिषेधात्म-
कत्वेन महोत्सूत्रमिति तृतीयमपि तथाभूतमेवेति राकामते महोत्सूत्रत्रिकं दर्शितमिति गाथार्थः ॥ १३९ ॥ अथ तदनुजेभ्यः
प्रवृत्तानामुत्सूत्राणामतिदेशमाह—

सेसं पवड्ढमाणं उस्सुत्तं जमिह सड्ढसामइए। पच्छा इरिआपमुहं किअंतमवि खरयरेण समं ॥१४०॥

शेषम्—उक्तोत्सूत्रत्रिकातिरिक्तं यदिह—राकामते उत्सूत्रं प्रवर्द्धमानं श्राद्धानां सामायिके पश्चादीर्यापथिकाप्रतिक्रान्तिप्रमुखं किय-
दपि खरतरेण समम्—औष्ट्रिकमतसमानमिति गाथार्थः ॥ १४० ॥ अथ यदुत्सूत्रं खरतरेण समं तच्च यद्यपीहैव वक्तुं युक्तं तथापि
खरतरेण सहातिदेशे हेतुमाह—

खरयरमयंपि कालाणुभवा मूढाण साहुभंतिकरं। तेणं तम्मयवसरे पभणिज्जंतं इहंपि मयं ॥१४१॥

खरतरमतमपि कालानुभावात् मूढानां—सम्यग्विचारपराङ्मुखानाम्, एतेऽपि योगोपधानसाधुप्रतिष्ठादिस्वीकारेण साधव एवेत्ये-
वंरूपेण साधुभ्रान्तिकरं—बाह्यदृष्टीनां साधुसमताबुद्धिजनकं तेन कारणेन तन्मतावसरे—अनन्तरं भणिष्यमाणौष्ट्रिकमतवक्तव्य-
तावसरे प्रभणिष्यमाणमिहापि पौर्णिमीयकमते मतं—सम्मतं ज्ञेयमिति गाथार्थः ॥ १४१ ॥ अथ द्वितीयविश्रामोपसंहारमाह—

एवं कुवक्खकोसिअसहस्सकिरणंमि उदयमावण्णे। चक्खुप्पहावरहिओ कहिओ बिइओ अ पुण्णिमिओ ॥१४२॥

एवं—प्रागुक्तप्रकारेण कुपक्षकौशिकसहस्रकिरणे उदयं प्राप्ते 'चक्खु'त्ति चक्षुः—स्वकीयं लोचनं तस्य प्रभावो—नीलादिवस्तुग्रह-
णशक्तिस्तेन रहितो—विकलो द्वितीयः पौर्णिमः—पौर्णिमीयकः कथितः, अयं भावः—उदिते हि सहस्रकिरणे यथा कौशिको निज-

प्रभु'प्रभावरहितो भवति, अथ हि अगस्त्यभावो यथामगकुलस्य सूर्यकिरणा अतिश्यामतया भासन्ते, तथा कुपथकौशिकसहस्रकि रणमेषिनर्ऽस्मिन् प्रकरणे कुपथानां पुरस्तात्प्रावित कुपथविशेष' पौर्णिमीयको निजप्रभु'—कुदृष्टिस्तत्प्रभावरहितो भवति, तस्य रमनिविकरिणा' स्फुलयो न स्फुरन्ति, अथवा कुदृष्टिरपि मुदभिभवति, एवंविध' पौर्णिमीयकः कथित इति गाथार्थ' ॥१४२॥

अथाय पौर्णिमीयकः कस्मिन् संवत्सर कस्मिंश्च गुरौ विद्यमाने कथित इति प्रदर्शनाय गाथामाह—

नयकरयकागरागक्रिअममममहिममि चित्तसिअपक्खे। गुरुदेसयपुण्णुदए सिरिहीरविजयसुगुरुधारे ॥१४३॥

इअ मासमणउदयगिरिं जिणभासिअधम्मसाम्यराणुगय। पाविअ पभामघतो सहस्सकिरणो जयउ एसो ॥१४४॥

प्रथमविभागोक्ता योज्या ॥१४३॥ अथतस्यकरणकनामगर्भिताशीरभिधायिकां गाथामाह—भागवतु० ॥१४४॥

इअ कुपरकोसिअसहस्सकिरणंमि पवयणपरिक्खापरनामंमि पुण्णिमयमयनिराकरणनामा तइओ विस्सामो सम्मत्तो



इति श्रीमत्तपागगनभोमणिश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीधर्मसागरगणिविरचित कुपथकौशिक सहस्रकिरणे श्रीहीरविजयसूरिदत्तप्रवचनपरीक्षापरनाम्नि प्रकरणे पौर्णिमीयकमतनिराकरणनामा तृतीयो विश्रामो व्याख्यातः ग्रन्थाग्रं २०७०॥



अथ पौर्णिमीयकानन्तरं क्रमप्राप्तं खरतरमतं निरूपयितुमाह—

**अह खरयरमयमूलं उस्सुत्तं जं जहा जओ जायं। पढमायरिअं नामुप्पत्तिं सुस्सुत्तमवि वुच्छं ॥१॥**

'अथे'ति पौर्णिमीयकमतनिरूपणानन्तरं खरतरो-वक्ष्यमाणनिरुक्तिकौष्ट्रिकाद्यपरनामा लोकप्रसिद्धः तस्य मतं-तदभिमतप्ररूपणालक्षणो मार्गः तस्य तस्मिन् वा मूलम्-आदिभूतं खरतरमतोत्पत्तिनिदानमुत्सूत्रं-प्रवचनमतिक्रम्य यादृच्छिकभाषणं 'यथा' येन प्रकारेण 'यतः' पुरुषाद्, उपलक्षणात् यस्मिन संवत्सरे इत्यादि ग्राह्यं, जातम्-उत्पन्नं, तथेत्यध्याहार्यं, तथा प्रथममाचार्यं-तन्मताकर्षकं तथा नामोत्पत्तिम्-अमुकहेतुना अमुकनाम संजज्ञे इत्यादिरूपेण खरतरादिनाम्नामुत्पत्तिं, चकारः समुच्चयार्थः, उत्सूत्रं मौलादुत्सूत्रात् क्रमेण प्रवर्द्धमानं यदुत्सूत्रं जातं तद्वक्ष्ये-भणिष्यामीति गाथार्थः ॥१॥ अथ मूलमुत्सूत्रं जिनवल्लभादेवात-स्तदुत्पत्तिस्वरूपमाह—

**कुच्चयरगच्छवासी चिइअनिवासी जिणेसरो सूरी। जिणवल्लहो अ सीसो तेण कओ दविणदाणेण ॥२॥**

कूर्चपुरीयगच्छवासी चैत्यनिवासी जिनेश्वर इति नाम्ना सूरिरासीत्, तेन सूरिणा द्रविणदानेन पञ्चशतीद्रम्मद्रव्यव्ययेन जिनवल्लभनामा श्रावकपुत्रः शिष्यः कृतः, यदुक्तं खरतरैरेव—"इतश्च तस्मिन् समये आसिकाभिधानदुर्गवासी कूर्चपुरीयजिनेश्वराचार्य आसीत्, तत्र ये श्रावकपुत्रास्ते सर्वेऽपि तस्य मठे पठन्ति, तत्र च जिनवल्लभनामा श्रावकपुत्रोऽस्ति, तस्य जनको दिवं गतः, तं जननी प्रतिपालयति, पाठयोग्यश्चासौ प्रक्षिप्तः तया तत्र मठे पठितुं, सर्वेभ्यश्चट्टेभ्यस्तस्याधिकः पाठ आगच्छति, अथ कथंचित्तेन जिनवल्लभचट्टेन बहिर्गच्छता टिप्पनकमेकं प्राप्तं, तत्र विद्याद्वयं लिखितमस्ति, सर्पाकर्षिणी सर्पमोचनी च, ततः कण्ठगतां

कृत्वा पारम्परमा विद्या प्रत्ययाय पठिता तावत्कुण्डगोपमीपमाः फूत्कुर्वाणाश्चलचलजिह्वायुगला' स्फुरदरुणलोचनाः सर्वा
स्यो दिग्भ्य आगच्छन् त विद्याप्रभावाकृष्टा महानागा , निर्भयचेतसा चिन्तितं तेन–भूतप्रत्ययेयं विद्या, पुनरुच्चारिता द्वितीया, त
स्या' प्रभावेण पुनः पथा गतायतितायसु' भवन',एतच्च तत्स्वरूपं श्रुतं सूरिणा,ज्ञातं च–निश्चितं माणिक्यो शुभात्मिका पुण्यपात्रमेष',त
माद्य ममात्कर्मु युक्त इति,ततस्तं ग्राधास्तज्राखोटकखण्डसम्प्रमोदकादिदानपुरस्सरं वशीकृत्य तन्मातरं मधुरवचने संबोधयस्मास,
यदृत एष त्वदीयपुत्रोऽत्यन्तप्राज्ञ' मूर्तिमान् माणिक्य , किं बहुना ?, आचार्यपदयोग्योऽस्ति, तदेनमस्मभ्यं प्रयच्छ, एषा ताव
कीना इयन्नसिका अन्येषां च निस्तारको भविष्यतीत्यर्थे नान्यथा किंचिदकथ्यमित्यभिधाय द्रम्मशतपञ्चकं तस्या हस्ते प्रक्षिप्य
क्षिप्रं दिदीक्ष, जिनवल्लभोऽप्यापितस्तत्र समस्ता लक्षणच्छन्दोऽलङ्कारतर्कागमगणितादिका निरवद्यविद्या', कदाचित्तस्याचार्यस्य ग्रा
माद्यो प्रयोजनमुपलभ्य, ततो गच्छता पश्चिमो जिनवल्लभो भणितो–भोस्त्वया तावत् मठेऽपि चिन्ता कर्तव्या यावदहं प्रयोजनमनु
ष्ठीन्याहमागच्छामि विनयप्रणतोत्तमाङ्गेन जिनवल्लभेनोक्त–पूज्यैर्यथाऽऽदिष्टं तथा विधास्ये, परमाराध्ये' कार्यं निष्पाद्य शीघ्रमाग
न्तव्यमिति, गतोऽसौ ग्रामान्तरं, ततो द्वितीयदिने चिन्तितं जिनवल्लभेन–भाण्डागारमध्ये मञ्जूषा पुस्तकभृता दृश्यते, तदेतेषु
पुस्तकेषु किमस्तीति भावयामि यतस्तदयं ममापि जातमस्तीति छोटितमेकं पुस्तकं, तच्च सिद्धान्तसत्कं, तत्रोक्तं पश्यति–"सा
धूना द्विचत्वारिंशद्दोषविशुद्धेन पिण्डेन गृहस्थगृहस्थो मधुकरवृत्त्या गृहीतेन संयमनिर्वाहहेतवे देहधारणा कर्तव्या, न कल्पते य
तीनां मणिपुष्पफलादिकं हस्तेनापि स्प्रष्टुं किमङ्ग नाट्यमाचारयितुं ?, न युक्त एवम्भ निवासो मुनीनामित्यादिविचारयन् एष
मनसा विस्मितश्चिन्तयामास–अहो अन्य एव स कश्चिदाचारो येन मुक्ती गम्यते,चिरकालमस्मास्वस्माकमेष समाचार' स्फुटं दुर्गतिग

मनसा विस्मितश्चिन्तयामास—

त्तायां पततामेतेन न कश्चिदाधार इति चेतस्यालोच्य गम्भीरवृत्त्या पुस्तकादिकं यथास्थिति कृत्वा गुरूक्तरीत्या स्थितः, कतिपय-
दिनानन्तरमकृतकार्यस्ततः समागतः आचार्यश्चिन्तयति—किमपि स्थानं न हीनं जातं यावज्जिनवल्लभेन मठवाटिकाविहारद्रव्यसं-
भारकोष्ठागारप्रभृति सर्वं त्रातं, तस्माद्यथा योग्यश्चिन्तितः तथा निश्चितमेव भविष्यति, किंतु सिद्धान्तं विना शेषा अशेषा अपि
तर्कालङ्कारादिविद्या अनेनाभ्यस्ताः. सिद्धान्तश्च यथावस्थितः संप्रतितनकालापेक्षया संपूर्णः साम्प्रतं श्रीअभयदेवसूरिसमीपे श्रूयते,
तत्सिद्धान्तवाचनाग्रहणार्थं तत्पार्श्वे जिनवल्लभं प्रेषयामि, गृहीतायां तु सिद्धान्तवाचनायां समस्तविद्यावनितावल्लभं स्वपदे स्थाप-
यिष्यामीति परिभाव्य वाचनाचार्यं कृत्वा निश्चिन्ततोपेतभोजनादियुक्तिं च चिन्तयित्वा जिनशेखराभिधानद्वितीयशिष्यवैयावृत्त्य-
करसमेतं जिनवल्लभं श्रीअभयदेवाचार्यसमीपे प्रेषितवान्, मरुकोट्टमध्येनाणहिल्लपाटकं गच्छता रात्रौ मरुकोट्टिमाणश्रावककारित-
जिनभवने प्रतिष्ठा विदधे, ततः पत्तने प्राप्तः श्रीअभयदेवसूरिवसतिं पृष्ट्वा प्रविष्टः, तत्र दृष्टो भगवान् तीर्थंकरप्रतिरूपः सन्निकृष्टो-
पविष्टसिद्धान्तवाचनार्थिप्रचुराचार्यः स्ववाग्वैभवावधूतदेवाचार्यः, भक्तिभरोल्लसितबहलरोमाञ्चकञ्चुकिताञ्चितकायलतिकेन वन्दि-
तस्तेन, ततो गुरुणा दर्शनमात्रेणैव योग्योऽयं शुद्धात्मकफलक इव कश्चिदयं दृश्यते इति परिविभाव्य मधुरवाण्या पृष्टः—कुतो भवान्
किं च भवतः प्रयोजनम्?, आनम्य ततो नियोजितकरकुड्मलेन भगवद्दर्शनोद्भूतप्रभूतनिरुपमानबहुमानजलपटलनिर्धौतान्तरमलेन
वचनामृतवारिन्यक्कृतामृतनिर्म्मितगेहिणीवल्लभेन जगदे जिनवल्लभेन—भगवन्! निजाखण्डलक्ष्मीप्रवीणस्वःपुरीदासिकायाः स-
मागतः श्रीमदाशिकायाः, श्रीजिनेश्वरसूरिणा स्वगुरुणा प्रेषितस्य मम मधुकरविभ्रमस्य यौष्माकीणवक्त्राम्भोजमकरन्दपानं विधातुं,
ततः प्रभुभिरुक्तं—युक्तं विहितं भवता यत् सिद्धान्तवाचनाभिप्रायेणात्र समागतः,ततः प्रधानदिने वाचनां दातुमारब्धः, यथा यथा गुरु-

जिनवल्लभगणिना दृष्टानि यथा यथा समुदितानि सन् स सुधीः सुधारसमिव ह्यात्मास्वादयति, हर्षोत्फुल्लमानसश्चैवं तावत् शिष्यम
मिरीक्ष्य गुरवोऽपि गोरपोऽपि गुणीकृतवाचनादानोत्सुका बभूवुः, किं बहुक्तेन ?, तथाऽऽह श्रावकस्तथा श्रीपूज्या वाचनां तस्मै दातुं प्रवृत्ता
यथा म्लोकैर्व कालेन सिद्धान्तवाचना परिपूर्णा जाता, तथा गुरोर्ज्योतिषिकः एकः पूर्वप्रतिपन्न आसीत्, यदि भवतां कश्चियोग्यः शिष्यो
भवेत् महात्मा मम समस्तमपि यत् मम गणप्रज्योतिषं समर्पयामि, तत पूज्यैर्जिनवल्लभगणिः समर्पितः, तेनापि जिनवल्लभाय ज्योति
तिः सपरिवारं समर्पितम् एवं च गृहीतसिद्धान्तवाचन सिद्धान्तोक्तक्रियासम्यगनुष्ठानबद्धमानसो सम्यगधिगतसकृतज्योतिष
मगुरु समागमनाय मुत्कलनाय प्रतीच्छति, प्रसुभिरभिहित-वत्स ! सिद्धान्तोक्तसाधुसमाचारस्तावत्समस्तोऽपि त्वयाऽवगतोऽस्ति
मस्तनुसारेण क्रियोद्धारेण यथा प्रवर्तन तथा विधेयं, श्रीजिनवल्लभगणिना पादयोर्निपत्य भणितं-यथा पूज्यपादा आज्ञापयन्ति
तथा निधिनं प्रतिपन्नं, प्रयाणदिने च पठितो, यथागतमार्गेण पुनर्मरुकोट्टे ग्रामः, आगच्छता सिद्धान्तानुसारेण देवगृहे विधिलि-
गितो यत विधिना विधिर्नत्यमपि मुक्तिमाषन, विधिचैत्यस्य विधिरयं-"अत्रोत्सूत्रजनक्रमो न च न च स्नात्रं रजन्यां सदा,
साधूनां ममताश्रयो न च न च स्त्रीणां प्रवेशो निशि। जातिज्ञातिकदाग्रहो न च न च श्राद्धेषु ताम्बूलमित्याज्ञाऽत्रेयमनिश्रिते विधि-
कृत श्रीजिनचैत्यालये ॥१॥" इत्यादिविधिविषया यत मम चैत्यवन्दनाद्यनुष्ठानं मुक्तये संपद्यत इति, ततोऽसौ गुरुसमीपं गन्तुं प्रवृत्ता,
ग्रामा नागरग्राम गसिंमदुर्गादयो तत्र स्थित:, तत्रैव गुरोर्मीलनाय पुरुषं प्रेषित, तस्य हस्ते लेखो दत्तो यथा युष्म
त्प्रसादेन मुगुरुसमीपे वाचनां गृहीत्वा नागरग्रामे अहं समागतोऽस्मि, पूज्यैः प्रसादं कृत्वाऽत्रैवागत्य मम मीलनीयं, ततो गुरु-
भिरपि-किमिति जिनवल्लभेन न लिखितं ?, नायातो भवत् ?, ततो द्वितीयदिने मरुकोट्टेन सार्द्धं समायाता आचार्यैः, समितुर्म

गतो जिनवल्लभः, प्रणतो गुरुः,पृष्टा क्षेमवार्त्ता गुरुणा,कथिता यथोक्ता सर्वापि वार्त्ता, तेन ब्राह्मणसमीचीनज्ञाननिमित्तं मेघादिस्व-
रूपाणि तथा ज्योतिषबलेन भणितानि कानिचिद्यथा गुरोरप्याश्चर्यकारीणि जातानि, 'भूतपूर्वकस्तद्वदुपचार' इति न्यायाद्गुरुणेत्युक्तं,
पृष्टो गुरुणा–किमिति त्वं मध्ये नागतो ?, जिनवल्लभगणिनाऽभिहितं–भगवन् ! सुगुरुमुखाज्जिनवचनामृतं पीत्वा कथमधुना दुर्ग-
तिगुप्तावात्मनः समुचितपाशं विषवृक्षसदृशं चैत्यवासं सेवितुमिच्छामि ?, ततो गुरुणा भणितं–भो जिनवल्लभ ! मयेदं चिन्तित-
मासीद्–यत्तुभ्यं स्वपदं दत्त्वा त्वयि स्वगच्छदेवगृहश्रावकादिचिन्तां निवेश्य पश्चात्स्वयं सुगुरुसमीपे वसतिमार्गमङ्गीकरिष्ये, ततो
जिनवल्लभगणिना विकस्वरवदनारविन्देन भणितं–भगवन् ! अतीव शोभनमेतद्, विवेकस्य हीदमेव फलं यद् हेयपरित्यागेनोपा-
देयमुपादीयते, तर्हि समकमेव सुगुरुसमीपे गम्यते, गुरुणोपनिःश्वस्य प्रत्यपादि–यदुत वत्स ! ईदृशी निःस्पृहता नास्त्यस्माकं,
यया चिन्ताकरणसमर्थं पुरुषं विना गच्छदेवगृहवाटिकादिचिन्तां मुक्त्वा सुगुरुपार्श्वे वसतिवासमङ्गीकुर्म्महे, अवश्यं भवता विधा-
तव्यं वसतिवसनं, जिनवल्लभगणिरपि तत्सम्मतेन पत्तने विजहार, श्रीमदभयदेवसूरिपादान् बह्वादरेण वन्दितवान्, सद्गुरूणाम-
तिशयेन समाधानं ममजनि, चिन्तितं च यथा परीक्षितस्तथैवैष जज्ञे, ततो मनसि विदन्तोऽपि न कस्यापि प्रतिपादयन्ति यदुत
एष एवास्मत्पदयोग्यो, यतो देवगृहनिवासिशिष्य इतिहेतोर्गच्छस्य सम्मतं न भविष्यतीति, ततो गच्छाधारको वर्द्धमानाचार्यः स्व-
पदे निवेशितः, जिनवल्लभगणेश्च क्रियोपसंपदं दत्तवन्त इत्यतःप्रभृत्यस्मदाज्ञया सर्वत्र प्रवर्त्तितव्यमिति, एकान्ते पुनः प्रसन्नचन्द्रा-
चार्यो भणितः–मदीये पदे भव्यलग्ने जिनवल्लभगणिः स्थापनीय इत्येवं नवाङ्गीवृत्ति वर्त्तिनीमिव मुक्तिनगरस्य भव्यजनेभ्यः प्रति-
पाद्य सिद्धान्तोक्तविधिना समाधानेन देवलोकं गताः श्रीअभयदेवसूरयः, प्रसन्नचन्द्राचार्यस्यापि सुगुरुपदनिवेशनप्रस्तावो न जातः,

ततस्तत्रापि स्वायु परिसमाप्तिसमये श्रीदेवभद्राचार्याणां विज्ञप्तं यत्सुगुरूपदेशो युष्माभिरेव सफलीकार्योऽवश्यमेव, मया कर्तुं न शक्यते, ततः प्रतिपन्न-वर्धमानयोगेनैव करिष्याम, समाधानं भवद्भिर्विधेयमिति, जिनवल्लभवाचनाचार्योऽपि कतिचिद्दिनानि पत्तनभूमौ विहृत्य न तादृशो विशेषेण बोधः कस्याप्यत्र गुर्जरत्रामण्डले विधातुं शक्यते येन समाधानमुत्पद्यते (इति) मनसिकृत्यात्मद्वितीय आगमविधिना सुशकुनेन भव्यजनमनस्सुक्षेत्रभूमिकासु भगवदुदितविविधधर्मबीजनिक्षेपणार्थं श्रीमेदपाटदेशादिषु विहारं चकार, ते च देशा मेऽपि प्रायश्च चैत्यनिवास्याचार्यैर्व्याप्ता, सर्वोऽपि लोकस्तद्वासितो वर्तते, किं बहुना?, तादृशदेशान्तरस्थग्रामनगरादिषु विहारं विदधानश्चित्रकूटाचलदुर्गं प्राप्तः, यद्यपि तत्रस्थसुप्रेमाश्रितो लोकस्तथाप्ययुक्तं किमपि कर्तुं न शक्नोति, श्रीपत्तने श्रीगुरूणां महत्याः प्रसिद्धेः श्रवणात्, ततो जिनवल्लभगणिना स्थानं याचिताः तत्रस्थश्राद्धा, तैरुक्तं-चण्डिकामठोऽस्ति यदि तत्र तिष्ठथ, ततो जिनवल्लभगणिना ज्ञात-दुष्टाभिप्रायेणैवं भणन्ति, तथापि तत्रापि स्थितस्य देवगुरुप्रसादाद्भद्रं भविष्यतीति चिन्तयित्वा भणितास्ते-तत्रैव वयं मन्यध्वं यूयं येन तिष्ठामः, तैरुक्तम्-अतीव सम्मतमस्माकं, तिष्ठथ यूयं, ततो देवगुरून् संस्मृत्य देवतां चानुज्ञाप्य स्थिताः तत्र, देवता तेषां ज्ञानेन ध्यानेन संतुष्टा सती दत्तावधाना रक्षति, ते च श्रीजिनवल्लभवाचनाचार्या इत्यादि यावत् श्रावका अपि स्तोकं स्तोकं समागच्छन्ति, मत सिद्धान्तवचनानि श्रुत्वा तदनुसारेण क्रियामपि प्रतिपद्य, श्रीजिनवल्लभगणीयानां गुरूपदेशनातीतानागतादिज्ञानं ज्योतिषज्ञाने चातिशयितमासीत्, भगवदन्तिके साधारणश्राद्धः सावारणसद्बुद्धिमतिपल्लककीर्तिमानदयापकसोमिलकवीरदवादिभिः श्रावकैः समाविना श्रीजिनवल्लभवाचनाचार्यो गुरुत्वेन प्रतिपन्नः, परिग्रहपरिमाणं ग्रहीतुं प्रवृत्तः, गणिभिश्च स उक्तः-कियन्मात्रं सर्वसंग्रहं करिष्यसीति?, साधारणः-भगवन्! सूत्रं विचार्या

महसैमं, विमलज्ञानदृष्टयो जिनवल्लभगणयः श्रावक ! बहुतरं कुरु, ततः कृतानि त्रिंशत्सहस्राणि, पुनर्ज्ञानेन—महानु-
भाव ! इतोऽपि प्रभूततरं परिभावय, साधारणः—प्रभो ! मदीयसमस्तगृहसारमूल्यगणनेऽपि पञ्च शतानि न पूर्यन्ते, कौत-
स्कुती ममाधिकतरद्रव्यसंप्राप्तिः ?, पुनर्हुंकृत्य प्रभवः—सर्वसाधारणसाधारण धार्मिकश्रावक ! किमसाध्यं पुण्यसंभारस्य ?
मा कुरु गणनतुलां, चणकमात्रविक्रयिणोऽपि पुरुषाः संख्यातिगा लक्षपतयो भवन्तीति, साभिप्रायं गुरुवचनमाकर्ण्य निश्चिन्तितं
किंचित् काञ्चनसंप्राप्त्यादिकं भद्रं मम भविष्यतीति विचिन्त्येषद्विहसा च साधारणेनोक्तं—यद्येवं तर्हि भगवन् ! भवतु सर्वपरिग्रहे
ममैकं लक्षमिति, तथा वितीर्णगृहीतपरिग्रहपरिमाणः सन् सद्गुरुपादोपास्त्यपहस्तिताप्रशस्तान्तरायकर्म्मा दिने दिने प्रवर्द्धमानः संपदा
गुर्वाज्ञया विशेषतः प्रवर्त्तमानः साधारणः सकलसङ्घस्य साधारणः समभूत्, सट्टकादयोऽपि श्राद्धाः साधारणवत् सर्वत्र जिनवल्लभ-
गणेराज्ञया प्रवर्त्तितुमारब्धाः, तत्र कृतचतुर्मासिककल्पानां श्रीजिनवल्लभगणिवाचनाचार्याणामाश्विनमासस्य कृष्णपक्षत्रयोदश्यां
श्रीमहावीरदेवगर्भापहारकल्याणकं (आगतं) ''पंचहत्थुत्तरे होत्था साइणा परिनिव्वुडे' त्ति प्रकटाक्षरैरेव सिद्धान्ते प्रतिपादनाद्, अन्यच्च
तथाविध विधिचैत्यं किमपि नास्ति, ततोऽत्रैव चैत्यवासिचैत्ये गत्वा यदि देवा वन्द्यन्ते तदा शोभनं भवति, गुरुमुखकमलविनि-
र्गतवचनाराधकः श्रावकरुक्त—भगवन् ! यद्युष्माकं सम्मतं तत् क्रियते, ततः सर्वे श्रावकाः निर्मलशरीरा निर्मलवस्त्रा गृहीतनिर्मलपू-
जोपकरणा गुरुणा सह देवगृहे गन्तुं प्रवृत्ताः, ततो देवगृहस्थितया आर्यिकया गुरुश्राद्धसमुदायेनागच्छतो गुरून दृष्ट्वा पृष्टं—को
विशेषोऽद्य ?, केनापि कथितं—वीरगर्भापहारकल्याणककरणार्थमेते समागच्छन्ति, तया चिन्तितं—पूर्वं केनापि न कृतमेतद्, एतेऽधुना
करिष्यन्तीति न युक्तं, पश्चात् संयतीदेवगृहद्वारे पतित्वा स्थिता, द्वारप्राप्तान् प्रभूनवलोक्योक्तमेतया दुष्टचित्तया—मया मृतया यदि

रं प्रविशत,तारतम्प्रीतिकं ज्ञात्वा निवर्त्य स्थाने गता। पूज्या,श्राद्धैरुक्तं–भगवन् ! अस्माकं बहुतराणि सदनानि सन्ति,तत एकस्य
गृहोपरि चतुर्विंशतिपट्टकं धृत्वा देववन्दनादि सर्वं धर्मप्रयोजनं क्रियते, षट्कल्याणकमाराध्यते, गुरुणा भणितं–युक्तमत्रायुक्तं ?,
तत आराधितं विस्तरेण कल्याणकं, जातं समाधानम्, अन्येद्युर्गोष्ठिभिः श्रावकैर्मन्त्रितं–यदि विपक्षेभ्योऽविधिप्रवृत्तेभ्यः प्रार्थ्ये
जिनोक्तो विधिर्न लभ्यते ततो यदि गुरुः सुम्मत भवति तदा तले उपरि च देवगृहद्वयं कार्यते,स्वसमाधानं गुरूणां निवेदितं, गुरु-
मिरप्युक्तं–जिनभवनं जिनबिम्बं जिनपूजां जिनमतं च यः कुर्यात्। तस्य नरामरशिवसुखफलानि करपल्लवस्थानि ॥ १ ॥
इत्यादिदेशनया ज्ञातं श्राद्धैः श्राद्धप्रधानैः गुरूणामभिप्रेतमेवैतत्,लोकमध्ये च वार्ता जाता यथैते देवगृहद्वितयं कारयिष्यन्तीति,
वार्तामाकर्ण्य प्रह्लादनपुरवास्तव्य बहुदेवश्रेष्ठिना कथितम्–एतेऽष्टौ कापालिका देवगृहद्वितयं कारयिष्यन्तीति यावत्, तत्र सोपरि
तत् श्रीपार्श्वनाथजिनभवनमधस्तात् पाश्चात्श्रीमहावीरभवनं निष्पादितं, श्रीजिनवल्लभवाचनाचार्यैर्विस्तरेण समस्तविधिपूर्वकं चक्रे
गरिष्ठा प्रतिष्ठा,सर्वत्र प्रसिद्धिर्जाता अहो एत एव गुरव इत्यादि यावत् मरुकोट्टीयश्रावकैः श्रीजिनवल्लभगणिन आचार्या विहार
क्रमेण समाहूता इत्यादि यावत् श्रावकाणां धर्मपरिणाममुत्पाद्य पुननागपुर विहारं चक्रुः श्रीजिनवल्लभगणयः, अत्रान्तरे श्रीदेव
भद्राचार्या विहारक्रमं कुर्वाणाः श्रीअणहिल्लपत्तने समायाता, तत्रागतैश्चिन्तितं–प्रसन्नचन्द्राचार्येण पर्यन्तसमये ममाग्रे भणितं–
भवता जिनवल्लभगणिः श्रीअभयदेवसूरिपदे निवेशनीयः, स च प्रस्तावोऽधुना वर्तते, ततः श्रीनागपुरे श्रीजिनवल्लभगणेर्विस्तरेण
लेखः प्रेषितः–त्वया शीघ्रं समुदायेन सह चित्रकूटे विहर्तव्यं येन वयमागत्य चिन्तितं प्रयोजनं कुर्मः ततः समागताश्चित्रकूटे
जिनवल्लभगणयः,तथा देवभद्राचार्या अपि सपरिवाराः, पं० सोमचन्द्रोऽप्याकारितः परं नागतो(?) मक्कोऽभूत् ततो महता विस्तरेण

श्रीदेवभद्राचार्यैः श्रीअभयदेवसूरिपट्टे श्रीजिनवल्लभगणिः स्थापितः, अनेन भव्यलोकः श्रीजिनवल्लभसूरीन् युगप्रधानश्रीअभय-देवसूरिप्रभुभक्तान् समालोक्य मोक्षमार्गे प्रवृत्तः, देवभद्राचार्यादयस्तु पदस्थापनं कृत्वा कृतकृत्यमात्मानं मन्यमानाः श्रीअणहिल्ल-पाटकादिस्थाने विहारं चक्रिरे, श्रीजिनवल्लभसूरिभिस्तु स्वायुःप्रमाणं गणितं यावत् षड् वर्षाण्यद्याप्यायुरस्तीत्यागतं, ततश्चिन्ति-तम्—एतावताऽपि कालेन प्रभूतभव्यलोकप्रतिबोधं करिष्याम इत्येवं सुस्थितानां तेषां षण्मासातिक्रमेऽकस्माद्देहास्वास्थ्यं जातं,ज्ञातं किमेतत् ?, पुनर्निपुणं निरूपयन्ति तावदङ्कोच्छिष्टं जातं, षण्मासानां स्थाने षड्वर्षाण्यागतानि, तत एतावदेवायुरिति निश्चित्य ते महासत्त्वाः समस्तसङ्घेन सार्द्धं दत्तमिथ्यादुष्कृताः प्रतिपन्नचतुःशरणा विहितसर्वसत्त्वक्षामणाः दिनत्रितयमनशनं विधाय सप्तषष्ट्यु-त्तरैकादशशतसंवत्सरे ११६७ कार्तिककृष्णद्वादश्यां १२ रजनीचरमयामे पञ्चपरमेष्ठिपरावर्त्तनं कुर्वन्तः श्रीजिनवल्लभसूरयो महात्मान-श्चतुर्थदेवलोकं प्राप्ता इत्यादि जिनदत्ताचार्यकृतस्य गणधरसार्द्धशतकस्य बृहद्वृत्तौ,एवंविधे जिनवल्लभव्यतिकरे तदपत्य-कृतवर्णनमाकर्ण्य न सम्मोहः कार्यः, यतो जनकजननीखर्जूरादिखाद्यार्पणविधिपुरस्सरवशीकरणपञ्चशतीद्रविणार्प्पणपूर्वकप्रव्राजना-चार्याभिधानोत्सूत्रव्यवस्थापनपुरस्सरसाधारणसट्टकप्रमुखनवीनसमुदायव्यवस्थापनार्यिकोत्सूत्रनिवारणप्रमुखसंबन्धमात्रघटकं समी-चीनं, शेषं तु योगाद्यनुष्ठानविकलस्यापि तथाभूतस्य जिनवल्लभस्य संविग्नश्रीअभयदेवसूरिसकाशात्सिद्धान्तवाचना श्रीअभय-देवसूरिसंबन्धघटनाय प्रसन्नचन्द्रादीनां कर्णजापपरम्परया तत्पट्टधरत्वमित्यादिकं जिनदत्ताचार्यादिभिर्विकल्प्य लिखितं सम्य-ग्धिया पर्यालोच्यमानं विशीर्यत एवेतिकृत्वा अकिञ्चित्करमेवेति बोध्यं, तत्पर्यालोचनं च खरतरौष्ट्रिकादिनामव्युत्पत्तिवक्तव्य-ताऽवसरे वक्ष्यते, अत एव भूयोऽसंगतोऽपि जिनवल्लभव्यतिकरोऽग्रे बहूपयोगीति विचिन्त्य किञ्चित्सविस्तरमिहैव लिखित इति

हितनेपथ्यः' माधुवेषधारी, साध्वाभास इत्यर्थः, किच–अनन्तानुबन्धिकषायोदयमन्तरेणोत्सूत्रमार्गप्रवर्त्तकत्वासंभवात्, अनन्ता-
नुबंधिकषायिणो हि नियमान्मिथ्यादृष्टय एव, ते च सुविहितमत्सरिण एव स्युः, यद्यपि कदाचित् वाङ्मात्रेण सुविहितानुकूल्यं ज्ञाप-
यन्ति तथापि ते विषकुम्भामृतपिधानकुम्भकल्पा बोध्याः, यथा साम्प्रतमपि केचन कुपाक्षिकाः वयं तपागणसाधूनां महानुभावत्व-
मेव श्रद्दध्म इति प्रत्यक्षा दृश्यन्ते, तेन तथाभूतेन सुविहितभ्रान्तिजनकेन जिनवल्लभेन 'वचनरचनया' निजवचनचातुर्या कालानु-
भावात् 'केइवि' अपिरेवार्थे केचिदेव, न पुनः सर्वेऽपि, श्राद्धाः उपलक्षणात्काश्चित् श्राविका अपि 'वशीकृताः' स्वायत्तीकृताः, तत्र-
त्यसङ्घैकदेशः स्वायत्तीकृत इत्यर्थ इतिगाथायुग्मार्थः ।३।४। अथ जिनवल्लभेन किं प्ररूपितमित्याह—

तेसिं पुरओ पढमं छट्ठं कल्लाणगंपि उवइट्ठं । निअचिंतिअकज्जट्ठा वारिज्जंतेण तेणेव ॥५॥

ये श्रावकाः स्ववशीकृतास्तेषां पुरस्तात्प्रथमम्–आदौ षष्ठं कल्याणकमेव प्ररूपितं, विपरीतबोधनिदानं तूत्सूत्रवचनावसरे वक्ष्यामः,
किमर्थं षष्ठ कल्याणकं प्ररूपितं?–'निअ' इत्यादि, निजचिन्तितकार्यार्थं, मयाऽवश्यं षष्ठं कल्याणकं व्यवस्थापनीयमित्येवंरूपेण
चिन्तितं यत्कार्यं तदर्थं, केन?–'तेनैव' जिनवल्लभेनैव, षष्ठकल्याणकप्ररूपणामूलं जिनवल्लभ एव, नान्यः कोऽपीत्यर्थः, किं क्रिय-
माणेन?–निवार्यमाणेन अर्थात्तीर्थेन, अयं भावः–प्रवचनोपघात्यनुचितं प्ररूपयन्तं बलवन्तमपि पुरुषं तीर्थकृदाज्ञावर्त्ती सङ्घो
निवारयत्येवेतिकृत्वा भो जिनवल्लभ मा इत्थं प्ररूपयेत्याक्रोशवचनैस्तीर्थनिवारितोऽपि अभिनिवेशात्षष्ठं कल्याणकं तीर्थमवगणय्यैव
व्यवस्थापितवान्, अन्यथा सङ्घेन बहिष्कृतेरसंभवात्, न ह्यपराधी तदीयापराधमनुद्भाव्यैव केनापि बहिष्क्रियते इति लोकेऽपि
प्रतीतत्वात्, बहिष्कृतत्वं च जिनवल्लभस्य खरतरेणैव भणितं, तथाहि–"संघत्राकृतचैत्यकूटपतितस्यान्तस्तरां ताम्यतस्तन्मुद्राहढ-

एवं षट्कल्याणकप्ररूपणेन 'व्युद्ग्रहयन्' तथाविधक्लिष्टकर्म्मवशवर्त्तिनो जनान् विप्रतारयन् 'अन्यत्र' चित्रकूटादन्यत्र नागपुरादौ 'कइ वरिसे'त्ति कति वर्षाणि—कतिसंख्याकानि वर्षाणि विहृत्य प्राकृतत्वात्पुस्त्वं निजमेव—स्वकीयमेव निजकमेवंविधं यत्पदं—स्थानं तदुचितेन शिष्येण रहितः—शून्यः, स्वपदे कश्चनापि शिष्यमनवस्थाप्येत्यर्थः, 'कालयोगेन' तथाविधकालसामग्र्या 'कालं' कालधर्मं मरणं प्राप्तः, स्वपदोचितापत्यशून्य एव परलोकं गत इत्यर्थः, बहुकालं विहरताऽपि जिनवल्लभेनामुकः प्रव्राजित इति श्रुतेरप्यनुपलब्धेः अपत्यशून्यत्वेऽपि नाशङ्केति, किच—अग्रेऽपि प्रसंगतो निरपत्यत्वसूचिका बह्वयो युक्तयो वक्ष्यन्ते इतिगाथार्थः ॥६॥ अथ जिनवल्लभवक्तव्यताया उपसंहारमाह—

**इअ जिणवल्लहजाओ कुच्चयरा नामओ अ विहिसंघो। खरयरमयबीअंति अ काउमिह समासओ भणिओ ॥७॥**

इति—अमुना प्रकारेण 'कूर्चपुरात्' कूर्चपुरीयगच्छात् नामतः चकारोऽवधारणे नामत एव, विधिसङ्घः, परमार्थतोऽविधिसङ्घ एव, यथा परमार्थतोऽनागमिकोऽपि नाम्ना आगमिकः प्रतीतो, 'जिनवल्लभजातः' जिनवल्लभात्समुत्पन्नः, खरतरमतबीजमितिकृत्वा इह 'समासतः' संक्षेपतो भणितः, अन्यथा 'हतं सैन्यमनायक' मितिवचनात् जिनवल्लभस्य निरपत्यत्वे तन्मतस्यापि तदन्वेवोच्छिन्नत्वात्तद्दूणनमयुक्तं स्यादितिगाथार्थः ॥७॥ अथ कथं खरतरमतस्य बीजभूतो विधिसङ्घ इत्याह—

**कुच्चयरा विहिसंघो दुग्गमिवऽवलंबिऊण विहिसंघं। जिणदत्ताओ खरयरनामेण पवट्टिअं कुमयं ॥८॥**

'कूर्चपुरात्' कूर्चपुरीयजिनेश्वरसूरिशिष्यजिनवल्लभाद्विधिसङ्घः समुत्पन्नः, तदुत्पत्तिस्तु विक्रमतस्त्रिंशदधिकैकादशशतादारभ्य वर्षाणां विंशतेरर्वागेवावगन्तव्या, विधिसङ्घमवलम्ब्य जिनदत्तात् खरतरनाम्ना कुमतं प्रवर्त्तितमितिगाथार्थः ॥८॥ अथ जिनदत्तेन

पाशपन्धनवतः शक्तश्च न स्पन्दितुम् । मुक्त्यै कल्पितदानशीलतपसोऽप्येतत्क्रमस्थायिनः, मनुष्याग्रग्रहस्य जन्तुहरिणव्रातस्य मोक्षफल ॥ ११ ॥'' इतिमहापद्यके, तथुक्तमेकदेशो यथा—तथैवयुगीनमहसप्रशस्तिपरिहारेण सद्धर्मात्मप्रतिपादनमभीप्सां भूपण, नतु दूषणं सत्यदृग्धलस्वस्मेन तत्कारिणो दारुणदुर्गतिविपाकश्रुत्या तत्परिहारेण प्रकृतसद्धर्मात्मत्वं तेषां चेतसि रुचितत्वादित्यादिना सद्धर्मात्मत्वकरणं च तदानीं तस्य सिद्धमेव, न च जिनवल्लभस्य यत्सद्धर्मात्मत्वं तचैत्यवासिसमापेक्षयैवेतिवाच्यं, चैत्यवासिभिरपि सुसाधुसमुदायस्य कथमपि तथा पराभूते कर्तुमशक्यत्वात्, नहि लोकेऽप्युन्मार्गगामी भूयानपि जनः सुमार्गगामिनं वचसाऽप्यपाकर्तुं शक्नोति, तथा जगत्प्रचाराभावात्, श्रीमदभयदेवसूर्यादीनामपि तथापराभूतिप्रसक्तेश्च, नचैतत्कश्चित् कदाचित्केनापि चैत्यवासिना संविग्नसमुदायेन संविग्नसमुदाय संघबहिष्कृत इति दृष्टं श्रुतं वा, किंच—खरतरेणाप्यैदंयुगीनसद्धर्मप्रशस्तिपरिहारेणेत्याद्युक्तं न पुनश्चैत्यवासिमहेनेत्याद्युक्तं, तस्मात्संघबाह्यता जिनवल्लभस्य तीर्थानभिमतप्रकाशकत्वात् निवारणेऽप्यनिवर्तत्वाच्च पूर्णिमाप्ररूपकचन्द्रप्रभाचार्यवद् बोध्यम्, एतेन श्रीअभयदेवसूरिनिर्मितप्रतिपदेन जिनवल्लभो विहरमाणत्वापि कश्चिद्वाचालो यदभिप्रायतो जल्पति तच्चैत्यवासिनिर्मितस्य महाप्रासादस्य करणासंभवात्, किंच—यदयं सद्धर्मात्मो नामसिद्धसदा तदानीतनसद्धर्म स्याद्वादोपमयाऽर्जनोपात्तमपि ष्यत्, तस्मात्संघे निवारयतश्च पढ़ं कल्पयामक स्पस्थापित, संघतीनिवारणं तु खरतरेणाप्युक्तमस्तीति प्रयुक्तमनात्मकं बोध्यम्, एवं संयतीनिवारणे सिद्धे संघनिवारण तु सुतरामेव सिध्यति, संयत्याश्च सन्तानभूतत्वादितिगाथार्थः ॥५॥ अथैवं प्ररूपकजिनवल्लभो यथा परलोकं प्राप्तस्तथा दर्शयन्नाह—

गव वुग्गाहंतो अण्णत्थवि विहरिऊण कइ वरिसे । निअमयपयडीसरहिओ कालगओ कालजोग्गण ॥६॥

एवं षष्ठकल्याणकप्ररूपणेन 'व्युद्ग्राहयन्' तथाविधक्लिष्टकर्म्मवशवर्त्तिनो जनान् विप्रतारयन् 'अन्यत्र' चित्रकूटादन्यत्र नागपुरादौ 'कइ वरिसे'त्ति कति वर्षाणि—कतिसंख्याकानि वर्षाणि विहृत्य प्राकृतत्वात्पुंस्त्वं निजमेव—स्वकीयमेव निजकमेवंविधं यत्पदं—स्थानं तदुचितेन शिष्येण रहितः—शून्यः, स्वपदे कश्चनापि शिष्यमनवस्थाप्येत्यर्थः, 'कालयोगेन' तथाविधकालसामग्र्या 'कालं' कालधर्मं मरणं प्राप्तः, स्वपदोचितापत्यशून्य एव परलोकं गत इत्यर्थः, बहुकालं विहरताऽपि जिनवल्लभेनामुकः प्रव्राजित इति श्रुतेरप्यनुपलब्धेः अपत्यशून्यत्वेऽपि नाशङ्केति, किंच—अग्रेऽपि प्रसंगतो निरपत्यत्वसूचिका बह्व्यो युक्तयो वक्ष्यन्ते इतिगाथार्थः ॥६॥ अथ जिनवल्लभवक्तव्यताया उपसंहारमाह—

**इअ जिणवल्लहजाओ कुच्चयरा नामओ अ विहिसंघो। खरयरमयवीअंति अ काउमिह समासओ भणिओ ॥७॥**

इति—अमुना प्रकारेण 'कूर्चपुरात्' कूर्चपुरीयगच्छात् नामतः चकारोऽवधारणे नामत एव, विधिसङ्घः, परमार्थतोऽविधिसङ्घ एव, यथा परमार्थतोऽनागमिकोऽपि नाम्ना आगमिकः प्रतीतो, 'जिनवल्लभजातः' जिनवल्लभात्समुत्पन्नः, खरतरमतबीजमितिकृत्वा इह 'समासतः' संक्षेपतो भणितः, अन्यथा 'हतं सैन्यमनायक' मितिवचनात् जिनवल्लभस्य निरपत्यत्वे तन्मतस्यापि तदन्वेवोच्छिन्नत्वात्तद्दूषणमयुक्तं स्यादितिगाथार्थः ॥७॥ अथ कथं खरतरमतस्य बीजभूतो विधिसङ्घ इत्याह—

**कुच्चयरा विहिसंघो दुग्गमिवऽवलंबिऊण विहिसंघं। जिणदत्ताओ खरयरनामेण पवट्टिअं कुमयं ॥८॥**

'कूर्चपुरात्' कूर्चपुरीयजिनेश्वरसूरिशिष्यजिनवल्लभाद्विधिसङ्घः समुत्पन्नः, तदुत्पत्तिस्तु विक्रमतस्त्रिंशदधिकैकादशशतादारभ्य वर्षाणां विंशतेरर्वागेवावगन्तव्या, विधिसङ्घमवलम्ब्य जिनदत्तात् खरतरनाम्ना कुमतं प्रवर्त्तितमितिगाथार्थः ॥८॥ अथ जिनदत्तेन

कथं निषिमन्न आश्रित इत्याह—

निस्सामिअसमवायं मुणिऊण य सोमचंदवरमुणी । सूरी हविसु सामी जाओ जिणदत्तनामेण ॥९॥

निरपत्ये जिनवल्लभे परलोकं गते सति कश्चिद्धर्मदेवोपाध्यायस्य शिष्यः सोमचन्द्रनामा 'द्रव्यमुनिः' द्रव्यलिङ्गधारी 'निस्सामिअ' त्ति निर्गतः—नि:सत्ताकीभूतः स्वामी जिनवल्लभनामा यस्यासौ निःस्वामिकः स चासौ समवायश्च जिनवल्लभसम्प्रदायापितविधिसङ्घनाम्ना समुदायस्तं तथाविधं 'मुणिअ' त्ति ज्ञात्वा अवगम्य चरिभूत्वा कनापि संतोषहेतुविधिना सतीर्ध्यदेवभद्राचार्यादाचार्यपदमादाय जिनदत्तनाम्ना 'स्वामी' तत्समुदायनायको जातः, यदि जिनवल्लभसमुदाये सोमचन्द्रो नाधिष्ठाताऽभविष्यत्तदा तदानीमेव निःस्वामिकत्वात्तन्मतं व्युच्छिन्नसंकथममभविष्यत्, तस्मात्सोमचन्द्रेणैव तन्मतमधिष्ठायाद्य यावदव्युच्छिन्नप्रवृत्तिमद्विहितमिति ॥ अथ जिनदत्तस्वरूपज्ञापनायान्यत्रोक्तं स्वरतरस्य सम्भवः भवति वा न भवत्यतः प्रत्यक्षं ज्ञातः स्मरणीयं गणधरसार्द्धशतकमेव योग्यं, तदपि प्रसङ्गतो विचार्यमाणमभिनवनाटकमिवाभातीतिकृत्वा गणधरसार्द्धशतकाद्युक्तं चरित्रं लिख्यते, तथाहि—किल पूर्वे जिनेश्वरसूरिसत्कधीधर्मदेवोपाध्यायस्य संघटीभिर्गीतार्थाभिर्धवलक्के चतुर्मासी कृताऽऽसीत्, तत्र वपणकभक्ता विच्छिगनाम्न श्रावकस्य पत्नी बाहडदेवी नाम्नी पुत्रसहिता तासां साध्वीनां पार्श्वे धर्मं श्रोतुं समागच्छति, ता अपि तस्याः विशेषेण धर्मकथादिकं कथयन्ति, पुत्रलक्षणं च शुभमशुभं च गुरूपदेशाद्विदन्ति, तस्याः पुत्रस्य प्रधानलक्षणानि पश्यन्ति, तल्लाभनिमित्तं च तन्मातरं महाश्लिषयन्ति, किं बहुना ?, तथाऽऽश्लिष्टा यथा कथितकारिणी जाता, ततो भणिताऽर्यिकाभिः —धर्मशीले ! एष त्वदीयः पुत्रो विशिष्टयुगप्रधानलक्षणधरः, तदेनं यद्यस्मद्गुरुभ्यां प्रयच्छसि तदा तव महान् धर्मो भवति, किञ्च—एष समस्तजगन्मुकुटभूतो भविष्यति, तथाऽपि

प्रतिपन्नं, ततश्चतुर्मास्यनन्तरं धर्मदेवोपाध्यायानां स्वरूपं दत्तं यदस्माभिरत्र पात्रमेकं प्राप्तमस्ति यथा युष्माकं प्रतिभास्यति, ततः शीघ्रं समागताः धर्मदेवोपाध्यायाः पृष्टश्च सः, ज्ञातं च–निश्चितं न सामान्यपुरुष एषः, किं तर्हि ?, गुरुपदयोग्यो भविष्यति, तस्तन्माता पृष्टा–तव सम्मतं यद्येष दीक्ष्यते ?, तयोक्तं पुण्यमात्र्या–भगवन् ! प्रसादं कृत्वा कुरुतैवं येन ममापि निस्तारो भवति, पुनः पृष्टोपाध्यायैः–कियद्वर्षप्रमाणोऽयं ?, तयोक्तम्–एकादशशतद्वात्रिंशन्संवत्सरे ११३२ जात इति, तत एकादशशते एकचत्वारिंशत्संवत्सरे शुभलग्ने तस्योपाध्यायैर्दीक्षा प्रदत्ता, नाम च कृतं सोमचन्द्र इति, भणित उपाध्यायैः सर्वदेवगणिः–अथ कियद्वर्षाण्येष परिपाल्यः, सर्वं बहिर्भूमिनयनादिकं कार्यं, क्रियाकलापं च शिक्षणीयः, तथा सूत्रपाठस्तेन स्वगृहे कृतो नास्ति अतः 'करेमि भंते ! सामाइअ'मित्यादि पाठ्यते, प्रथमव्रतदिने चासौ सोमचन्द्रमुनिर्नीतोऽस्ति बहिर्भूमौ सर्वदेवगणिना, अज्ञानत्वादुद्गतानि क्षेत्राणि त्रोटितानि तेन, ततः शिक्षानिमित्तं रजोहरणं मुखवस्त्रिका च गृहीता सर्वदेवगणिना, भणितश्च–व्रते गृहीते किं क्षेत्राणि त्रोट्यन्ते ?, तद्गच्छ स्वगृहं, ततस्तदैवोत्पन्नप्रतिभेन तेनोक्तं–युक्तं कृतं गणिना, परं मम चोटिका आसीत् तां दापय येन गच्छामि इत्युक्ते गणेराश्चर्यमभूद्–अहो लघोरपि कीदृक् सदुत्तरत्वमेतस्य ?, कीदृशं प्रतिवचनं प्रदीयते ?, एषा चर्चा धर्मदेवोपाध्यायस्याग्रे जाता, धर्मदेवोपाध्यायैश्चिन्तितं–भविष्यति योग्य एषः, सर्वत्र पत्तने परिभ्रमन् लक्षणपञ्जिकादिशास्त्राणि भणितुमारब्धः सोमचन्द्रः, एवं च भावदेवाचार्यधर्मशालायां पञ्जिकागणनार्थमेकदा गच्छन्नुद्धतेन केनापि प्रतिपादितो यथा अहो सितपटाः ! कपालिकाग्रहणं किमर्थं ?, सोमचन्द्रेणोक्तं–त्वदीयमुखचूरणार्थमात्ममुखमण्डनार्थं च, गतोऽसौ निरुत्तरो, न किमपि वक्तुं शक्तः, भणनस्थाने गतः, तत्रानेकाधिकारिपुत्राः पञ्जिकां भणन्ति, कदाचित्तेनाचार्येण परीक्षार्थं पृष्टोऽसौ सोमचन्द्रः–न विद्यते

नवकारो यत्र स नवकार इति यथार्थनाम, ग्रतिमतवता प्रोक्तं झटिति सोमचन्द्रेण-मैवमावेदयन्त्वाचार्याः, किं तर्हि ?,नवकरण नय-कार इतिव्युत्पत्तिः कार्या, आचार्येण ज्ञातम्-महोऽस्पन्तसदुत्तर एषः, अनेन सह वक्तुं न शक्यते,अन्यदा लोचदिने व्याख्यान-मण्डपाय नागतो, व्याख्यानव्यवस्था चेदृशी-यद्येकोऽपि छात्रो नागच्छति व्याख्या न, श्रमणस्याचार्ये सगर्वं भणितमधिकारि पुत्रै-राचार्यमिश्रा ! सोमचन्द्रस्थाने एष पाषाणो धृतोऽस्ति, भवत यूयं व्याख्यान, ततस्तदनुरोधेन भणितं व्याख्यान, द्विती-यदिन समागतः सोमचन्द्रः प्रपच्छ छात्राणि-अतीतेऽह्नि किं मां विना भणितं युष्माभिः ?, तैरुक्तं-त्वदीयस्थाने पाषाणो धृतः, सोमचन्द्रेणोक्तं-कथितपाषाणः कथितस्यपुनैव शास्यते, यावती पञ्जिका भणिता तावतीं मां पृच्छन्तु, एतानप्यहं पृच्छामि,यथार्थं यो न व्याख्यास्यति स एव पाषाणः, भो सोमचन्द्र ! त्वां प्रज्ञादिभौरम्यगुणाढ्यं कस्तूरिकं जानाम्येव, परमदैमूलः प्रेरितोऽहं व्याख्यानेऽस्व सम्बन्धे भवता, एव पञ्जिकापाठ, अशोकचन्द्राचार्यमोत्थापना कृता हरिसिंहाचार्येण सिद्धान्तवाचना दत्ता पण्डितसोमचन्द्राय, तथा मन्त्रपुस्तिका, यया सिद्धान्तवाचना स्वय गृहीता सा कपालिका भगवता तुष्टेन दत्ता,तथा देवभद्रामा-र्येण तुष्टेन काश्रोल्किरण दत्त येन महावीरचरितादीनि चत्वारि कथाशास्त्राणि पट्टिकायां लिखितानि,एव पण्डितसोमचन्द्रगणिर्ज्ञानी ध्यानी सैद्धान्तिकः सर्वजनमनोहारी भावकथामाह्लादकारी साध्वाचारेण ग्रामानुग्राम विहरति, इतश्च श्रीदेवभद्राचार्यैः श्रुता जिनवल्लभसूरीणां देवलोकगमनवार्ता, समुत्पन्नोऽतीव चित्तसंतापः, अहो सुगुरूणां पदमुद्योपितमभूत् परं विघटित, यद्यदेवमद्रा-गच्छ करतत्पदयोग्य इति चिन्तायां पण्डितसोमचन्द्रगणिर्ऽयो,निश्चितमेष एव योग्यः, धासकर्णा मानध्यानक्रियापरत्वेनानन्दकारी,

पश्चात् सर्वसम्मतेन सोमचन्द्रस्य लेखः प्रदत्तः यच्चित्रकूटे शीघ्रं समागन्तव्यं येन श्रीजिनवल्लभसूरिपदस्थापनं भविष्यति, न ज्ञा-
यते कश्चिदुपवेक्ष्यति, श्रीजिनवल्लभसूरिपदप्रतिष्ठायामनागतोऽभूस्त्वं, बहवश्च तत्पदे स्थातु लम्बकर्णा गौरवर्णाः श्रीपर्णपर्णाक्षाः
साक्षादिव मकरध्वजाः गूर्जरत्रासंजाताः संयता अभ्युद्यता आसन्, परं योग्यतां गुरव एव विदन्ति, किं बहुना ?, देवभद्राचार्याः
पण्डितसोमचन्द्रोऽन्येऽपि साधवश्चित्रकूटे समाजग्मुः, सर्वोऽपि लोको वेत्ति सामान्येन श्रीजिनवल्लभसूरिपदस्थापनं भविष्यति,
न ज्ञायते कश्चिदुपवेक्ष्यति, श्रीजिनवल्लभसूरिप्रतिष्ठिते साधारणसाधुकारिते श्रीमहावीरचैत्ये पदस्थापनं भविष्यति, ततः स्वप-
रिभावितलग्नदिनादर्वाग्दिने श्रीदेवभद्राचार्यैरेकान्ते भणितः पण्डितः सोमचंद्रगणिः–यदुतास्मिन् दिने युष्मदीयं पदस्थापनालग्नं
भावितमस्ति, पंडितसोमचन्द्रेणोक्तं–यद्युष्माकं सम्मतं तद्युक्तं, परं यद्यस्मिन् लग्ने स्थापयिष्यते तदा न चिराय जीवितं भविष्यति,
षण्णां दिनानामुपरि शनैश्चरवारे यल्लग्नं भविष्यति तत्रोपविष्टानामस्माकं चतुर्दिक्षु विहरतां चतुर्विधः श्रीश्रमणसङ्घः श्रीजिनव-
ल्लभसूरिवचनेन प्रभूतो भविष्यति, चिरजीवित्वं च, देवभद्राचार्यैरुक्तं–तदेव वयमपि गवेपयामः, तदपि लग्नं न दूरे, तत्रैव
भवतु, ततस्तस्मिन् दिने श्रीजिनवल्लभसूरिपदे विस्तरेण संध्यासमये लग्नवेलायां संस्थापिताः श्रीजिनदत्तनामानो युगप्रवराः, ततो
वादित्रे वाद्यमाने समानीता वसतौ, प्रतिक्रमणानन्तरं वन्दनकं दत्त्वा श्रीदेवभद्रसूरिभिर्भणितं–देशनां कुरुत, ततः सिद्धान्तोक्तोदा
हरणानुसारिमनोहारिसुधासारणीगीर्वाणवाणीप्रबन्धेन तथा कृता पूज्यैः श्रीजिनदत्तसूरिभिर्देशना यथा ह्रस्वशरीरः श्यामवर्णोऽयं
किमित्युपवेश्यते ? किं न सन्त्यन्ये गौरववर्णा लम्बकर्णाः विशाललोचना गच्छमध्ये साधव इत्यादिकालुष्यमपहाय सर्वा प्रजा
रञ्जिता भणति–अहो सिंहानां पदे सिंह एवोपविष्टो विराजते, धन्याः श्रीदेवभद्राचार्याः यैरीदृशं पात्ररत्नं परीक्षितं, किमस्मादृशाः

स्थूलमतयो निर्लक्षणा जानन्ति ! अन्यस्मिन् दिने विज्ञप्ता श्रीजिनदत्तसूरय श्रीदेवभद्राचार्यैः—यदि कतिपयदिनानन्तरं कतिचि दिनानि पत्तनाद् बहिर्विहरणं, श्रीजिनदत्तसूरिभिरुक्तम्—एव विधास्याम , अपरदिने जिनशेखरेण साधुविषये किंचित्कलहादिकम युक्तं कृतं ततो देवभद्राचार्येण गले गृहीत्वा निष्कासित ,ततो यत्र श्रीजिनदत्तसूरयो बहिर्गच्छन्ति तत्र गत्वा स्थित', तत्र गतानां पूज्यानां पादयोर्लगित्वा दीनवागवादीत्—प्रभो ! मदीयोऽयमन्याय एकवारं क्षन्तव्यो,न पुनः करिष्यामि, तत' कृपोद्वय' श्रीजिनदत्तसूरयस्तं प्रवेशयामासु', पश्चाद्देवभद्राचार्यैरुक्त—युष्माभिर्न युक्त कृतम्, एष दुरात्मा, न भवतां सुखावहो भविष्यति, पापनोऽग्रस्यैव तस्य बहिर्निष्कासनमेव श्रेय', पूज्यैरुक्तं—श्रीजिनवल्लभपट्टे लग्नोऽयं यावदनुवर्तयितुं शक्यते तावदनुवर्त्यते, श्रीदेवभद्राचार्यादयोऽन्यत्र विहारं चक्रु, कालेन स्वःपथं संप्रापुरिति, श्रीजिनदत्तसूरिभिरुक्तं—कुत्र विहराम इति, ततो मरुस्थलादिषु विहर्तव्यमित्युक्तप्रपवर्त्त दत्त्वा गतोऽवर्णनमिति प्रभृत्तं गणधरसार्द्धशतकवृत्तौ, अत्र जिनदत्तस्वरूप१ देवभद्राचार्यस्वरूप२ जिनवल्लभसमवायस्वरूप च३ सुरुचा पर्यालोच्यमानमभिनयनाटकमिवाभातीति प्रागुक्त तदिदानीं व्यक्तीक्रियते, तथाहि—बालशेषितं हि प्राय' स्वभवत् भविष्यद्भावाविर्भावक भवति, यत'—"पीऊस पाणिजं सरवराण पिड्डि न दिंति सिद्दिहिमा । होही जण कलावो मार्ग चिश्र परिसी पुढी ॥१॥" इति, यथाऽतिमुक्तकस्य श्रीवीरविनेयस्य मम नौस्तरतीतिवालचेष्टैवात्मनस्तद्भव एव संसारत नद्यधिका, नौशब्देन शरीरमपि, यत'—"शरीरमाहु नावुत्ति,जीवो वुच्चइ नाविओ । संसारो अण्णवो वुत्तो,ज तरंति महेसिणो" ॥२॥ "(७–१०४८) इति, तथा प्रकृते प्रव्रज्यादिन एवोद्भवक्षेत्रप्रोटनं तथा गणिना आक्रोशविपयीकृत्य रजोहरणाद्युद्दालनेऽपि निर्भय तथा प्रतिवचोदान चोदितमार्गणपुरस्सरं परावृत्य गृहगमनमपन नेत्यादिकं विनयचेष्टितं किं भाविगुणप्रधानभावसूचकमत

वैपरीत्यभावसूचकं चेत्यादिपर्यालोच्यमाने प्रथमपक्षो न दक्षः,क्षोदाक्षमत्वात् ,तथाहि–तत्र तावद्भविष्यद्युगप्रधानभावसूचकं किमुद्र-
तक्षेत्रत्रोटनं कल्प्यते उत रजोहरणाद्युद्दालनेऽपि युक्तं कृतमिति भाषणमथवा चोटिकामार्गणपुरस्सरं परावृत्य स्वगृहगमनं चेत्यादि,
यत्किञ्चिदेतत्, नहि निशान्ते स्पष्टदृष्टोऽपि काकस्वप्नः आत्मनः करिशतपरिकल्पितां राज्यपदवीं सूचयति,तस्माद् द्वितीयविकल्प
एव ज्यायान्, तस्यैव विचारक्षमत्वात्,तथाहि–उद्धृतक्षेत्रत्रोटनेन धर्माङ्कुरितस्य सङ्घक्षेत्रस्य देशेन धर्मनाशको भविष्यामीमि स्तू-
चितं रजोहरणाद्युद्दालनेऽपि युक्तं कृतमिति भणनेन मदीया दीक्षा ममान्येषां च न श्रेयस्करी भविष्यतीति सूचितम्, आक्रोशेऽपि
निर्भयतया प्रतिवचोदानेन तीर्थनिर्भर्त्सितोऽपि निर्भयतया प्रतिजल्पाको भविष्यामीति तेन सूचितं, चोटिकामार्गणपुरस्सरं गृह-
गमनभणनेन गृहवास एव मम श्रेयानित्यसूचि,एवं प्रामाणिके विचारे कर्तव्येऽपि यत्तदीयैरुपाध्यायादिभिः एष इत्यादि विचारितं
तदवश्यं तथाविधभवितव्यतायोगादेव बोध्यं, तथा केनचिदहो सितपटाः! कपालिकाग्रहणं किमर्थमिति मृदुवचसोदीरितोऽपि
त्वदीयमुखचूरणार्थमात्मनो मुखमण्डनार्थं चेत्यादि निष्ठुरभाषणेन पञ्जिकाध्ययनमात्रेणापि कश्चित्पाषाणः कश्चिन्नेत्यधुनैव ज्ञास्यते
इत्यादि सगर्वभाषणेन चात्मनो मौखर्यमेव ज्ञापितवान्, न पुनः कश्चित्सत्पुरुषस्वभावम्, अत एव खरतर इति नाम्नोऽपि हेतु-
जिनदत्तमौखर्यमेवेत्यग्रे वक्ष्यते, तथा सम्मतेन सोमचन्द्रस्य लेखः प्रेषित इत्युक्त्वा सामान्येन जिनवल्लभपट्टे कश्चिदुपवेक्ष्यति,
परं कोऽपि न जानाति अमुक इति कथं संगतिः ?, किंच–तदानीं सोमचन्द्रो व्यक्तोऽव्यक्तो वा ?, व्यक्तश्चेत्कथं स्वकीयं गणं
गणनायकं नाजनाचार्यं स्वकीयसंघाटकादिकं वाऽनापृच्छ्याविमृश्य च सहसा सर्वमपि प्रतिबन्धं परित्यज्य स्वयं श्रीवीरस्य पञ्च-
कल्याणकवादी सन्नगच्छीयः सन् अतर्कित एव देवभद्रसकाशादाचार्यीभूय परलोकगतस्यापि पट्कल्याणकवादिनः कूर्चपुरीय-

चैत्यवासिनो जिनवल्लभस्य पट्टधरो जात ?, अभ्यक्तमेव् बालभावादज्ञानाद्वा ?, आद्योऽसंभवी,तस्यानेकचत्वारिंशद्वर्षीय-वयस्कत्वात्, अज्ञानादेति द्वितीयो विकल्प सुतरामामेवानिष्ट, किंच—अयं यदि युगप्रधानपदवीयोग्य सूरिपददानमात्रेणापि स्थापनीकर्तु शक्यस तर्हि निजगणाचार्यै श्रीवर्द्धमानाचार्यादिभिर्निजपद एव कथं न स्थापित ?, नहि निपुणः कोऽप्येतादृशं पात्ररत्नमन्यत्र गन्तुं ददाति, यत्लक्षैरपि पुनरप्राप्यत्वादिति संक्षेपतो जिनदत्तभणित ॥ अथ देवभद्राचार्यमभ्यर्च्यते—

स संविग्नोऽसंविग्नो वा ?,संविग्नश्चेत्तर्हि षट्कल्याणकप्ररूपणादिना नवीनमतप्रवर्त्तकत्वात् मदृषन बहिष्कृतस जिनवल्लभस पट्टे निजविनेयप्राय मतीर्थ्यमाचार्यीकृत्य तदीयसमुदायस्य समर्प्पयेदिति चार्चागन्धस्याप्यसंभवः, संभवे वा संविग्नत्वस्यैवासंभव, नहि प्रवचनदत्तदृष्टि संविग्नः साधु संविग्नपाक्षिको वा उत्सूत्रमार्गमुत्सर्प्पयेत्, प्रत्युत प्रवचनाहितस्य तदीयमार्गस्योच्छेदाभि प्रायेण तदीयसमुदायं यथाविधविहितोपदेशप्रदानादिना स्वनिश्रयैव प्रवर्त्तयेत्, संविग्नानां तथैवाचारात्, अन्यथोपेक्षणादिना संसार वृद्धिलघुतादयो बहवो दोषाः, किंच—स देवभद्रस्तदीयसमुदायस्य सम्मतोऽसम्मतो वा ?, आद्येऽन्तरोपदेशेन तथाविधो विधिम त्स्यमुखेनैव धर्ममार्गेऽनुसारयितु शक्य कथं तन नानृतारित ?,असम्मतश्चेत्कथं तच्छिष्य सोमचन्द्र सम्मतो जात इत्यप्रान्त वृस्या काचिन्महती विचारणा कर्त्तव्या,नहि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्त्तते इतिन्यायात्,केन प्रयोजनविशेषेणैवं सादरं देवभ द्रस्य प्रवृत्तिरिति, ननु संविग्नशिरोमणिना श्रीअभयदेवसूरिणा अन्त्यसमये प्रसन्नचन्द्राचार्य एकान्ते भणित —योग्योऽपि जिन वल्लभ चैत्यवासिशिष्यत्वेन गच्छासम्मतत्वाभिजपदे स्थापयितु न शक्यः, परं भवद्भिरस्य मत्पदं स्थापनीय इत्यादिप्रागुक्तप्रकारेण श्रीअभयदेवसूरिवचनस्यैव प्रमाणीकरणमत्र प्रयोजनं,तत्र का विचारणेति चेत् अहो अत्रैव महत्या विचारणायाः सद्भाव ,तथाहि—

कल्पितः, स च रव्वया कर्णसंधानकल्पोऽकिञ्चित्कर एव, न विद्वत्पर्षद्व्यक्तशब्देनापि
यस्तु खरतरेण संगतिघटनाय कर्णजापः कल्पितः, स च रव्वया कर्णसंधानकल्पोऽकिञ्चित्कर एव, न विद्वत्पर्षद्व्यक्तशब्देनापि
वक्तव्यः, तत्र युक्तिर्यथा—श्रीअभयदेवसूरिणा एकान्ते प्रसन्नचन्द्रो भणितस्तेन च देवभद्राचार्य इत्यादि तत्सर्वं कोशपानप्रत्याय-
नीयम्, एतद्विषयेऽपरस्य साक्षिकस्याभावाद्दिव्यकरणेनैव प्रत्ययः समुत्पादनीयः, अथ किंचित्साक्षिकाभावेऽपि विश्वसनीयं
भवेद् यदि युक्तिसंगतं स्यात्, तच्च युक्त्या विचार्यमाणमालजालकल्पं, विचारणा त्वेवं—यदि चैत्यवासिशिष्यत्वेन हेतुना सूरिभिः
स्वहस्तेन स्थापितो गच्छसम्मतो न स्यात्तर्हि तथात्वे सत्येव तद्वचनेन प्रसन्नचन्द्रस्थापितो गच्छसम्मतः कथं स्यात्?, किंच प-
रम्परया श्रीअभयदेवसूरिवचनोद्भावनमकिञ्चित्करमेव, यतो यथा जिनवल्लभसूरिपट्टधरः कृतः तथा सूरिवचनमन्तरेणापि सूरि-
पट्टधरः क्रियतां, देवभद्रस्योभयत्रापि सामर्थ्यात्, किंच—जिनवल्लभस्याचार्यपदमन्तरेण किं न्यूनं को गणाधारः कोऽप्यात्मीयो
नासीदुताचार्यपदमन्तरेण तस्य चारित्रगुणा हीयन्ते अथवा योग्यतैव काचित्तस्य तादृशी येनावश्यमस्याचार्यपदं कर्त्तव्यमेव उता-
सादेवाग्रतोऽप्याचार्यपदप्रवृत्तिर्येनामत्यपि समवाये रहस्याचार्यपदस्थापनायै सूरिभिराज्ञा दत्ता?, नाद्यः, गणाधारस्य वर्द्धमाना-
चार्यस्य स्वहस्तेनैव कृतत्वात्, न द्वितीयः, आचार्यपदमन्तरेणापि विशिष्टचारित्रगुणानामुपलब्धेः प्रतीतत्वात्, न तृतीयः,
सूरिभिरेव तत्पदस्थापनायाः कर्तव्यताऽऽपत्तेः, एकस्मिन्नपि योग्यानामनेकेषामपि सूरिपदसंभवात्, कथमन्यथा श्रीजिनेश्वरसूरिणैव
जिनचन्द्राभयदेवावाचार्यपदे निवेशितौ?, अथैवमपि सङ्घासम्मत्या वर्तुं न शक्यत इतिचेत्तत्र संघसम्मत्यभावे निदानं किं
चैत्यवासिशिष्यत्वमन्यद्वा?,आद्ये दिग्बन्धादिना तदपाकरणस्य सुकरत्वाद्,एवमप्यसम्मतौ कथं प्रसन्नचन्द्रस्थापितः सम्मतो भवि-
ष्यतीति सूरेर्विचारणा किं नासीत्?, मत्पट्टेऽयं स्थापनीय इत्येकान्ते भणितम्, अथ विचारणा आसीदेव,परमेतादृश एवायम-

वगतो यस्मायं सामान्यपुरुषः,किंतु महापुरुषः,स्वयमेव चैत्यवासिसमवायमेव स्वायत्तीकृत्य प्रवचनप्रभावको भविष्यतीति चेत् तर्हि स्वयमेव तस्याचार्यपदं दत्त्वा कथं न विसर्जित' ?, तत्र संघसम्मतेरप्रयोजकत्वात्, किंच—संघासम्मतो चैत्यवासिशिष्यत्वमेवोक्ता-र्थं ननु खरतरस्य पक्षमपि न युक्तं, यतश्चैत्यवासिन एव श्रीवर्द्धमानसूरेः श्रीउद्योतनसूरिपट्टधरत्वं तैरेव भण्यते,अथान्यत्किञ्चि-त्कारणमितिविकल्पश्चेत्तर्हि तद्वाच्यमवाच्यं वा ?, वाच्यं चेदुच्यतां, वक्तुं न शक्यते इति चेत्तर्हि अवाच्यस्य मस्तके किं शृङ्गं निर्ग-च्छति ? यदवाच्याशक्यं भिन्नमिति भणित्वाऽपि वक्तुं न शक्यते इति भण्यते, तस्मादवाच्यमेव वक्तव्यं, तच्च कारणं तदेव संभाव्यं येन श्रीअभयदेवसूरिभिः शिष्यत्वेनापि प्रतिपत्तुं न शकित', कथं पट्टधरत्वेनेति, किंच—पट्टधरोऽपि स एवोच्यते यस्तदीयसमु-दायाधिपतिः स्यात्, नहि भिन्नसमुदायाधिपतीभूय प्रवर्त्तमानस्तत्पट्टधर' संभवति, लोकेऽपि नृपादिषु तथैव दर्शनात्, किंच—समुदायप्रतिबन्धाभावेऽन्यतोऽपि कुतश्चिदाचार्यपदमादाय यथा श्रीअभयदेवसूरिपट्टधरत्वमात्मनः स्थापयति तथा गौतमादीना-मपि किमिति न प्रज्ञप्ते ?, समुदायप्रतिबन्धाभावस्योभयत्रापि तौल्यात्, किंच—नियतयोग्यतां संविदता सूरिणा यथा प्रसन्नच-न्द्र एवमन्त भणित' तथा निजपदस्थापित' श्रीवर्द्धमानाचार्य एव भणितुं युक्तः, यतोऽसंभाव्यमपि स्थूलधीभि' संभाव्यते तत्प-दाधिकारित्वात्,यो यत्पदाधिकारी सोऽन्यमपि तत्पदाधिकारिणं कर्तुंसमर्थो भवति, न पुन प्रसन्नचन्द्रः,सूरिपदानधिकारित्वात्, एव च सति दग्धभग्नो दुस्तर एव, यत 'स्वयं दरिद्रो न परमीश्वरीकर्तुमीश्वर' इति सूरिपट्टधरत्वमधिकृत्य श्रीवर्द्धमानाचार्यव्य-तिरिक्तानां सर्वेषामपि तद्वाहित्येन दारिद्र्यात्, किंच—आस्तां प्रसन्नचन्द्रोऽपि, परं भव्यजनसमक्षमेव कथं न भणितः ?, रहसि भणन प्रयोजनाभावात्, यदि जिनवल्लभो योग्यस्तर्हि संविग्नसमुदायो न तं परगमयति, विशेषतः सूरिवचनात्, मत्कृत एव

स्यात् न वा ?, सोऽपि तं संविग्नसमुदायमिति, अयोग्यश्चेदलं रहः कर्णजापेन, नापि चतुर्थः, नहि जिनवल्लभेन कस्याप्याचार्य-
पदं दत्तं, नाप्यमुकस्य देयमित्यनुज्ञातमपि, किंतु स्वयमेव स्तनिकमताकर्षकनरसिंहोपाध्यायवत् केनाप्यन्तर्वृत्त्या त्रुटिविधिना देव-
भद्रसकाशादाचार्यीभूय विंशतिदिनाधिकं मासत्रयं जीवितवान्, अतस्तस्याचार्यपदं काशकुसुममिव निष्फलमेव संजज्ञे, इत्यादिवि-
चारणया जिनवल्लभस्याचार्यपदं न श्रीअभयदेवसूरिवचसा, न वा तथाभूतः कस्यापि पट्टधरः, किंतु चन्द्रप्रभाचार्यादिवन्मताक-
र्षकः, किंच-कर्णजापकल्पनास्थाने श्रीअभयदेवसूरिभिश्चित्रकूटीयसंघस्य ज्ञापितं यदेष मया तथाविधयोग्यताया अभावादनङ्गीकृतः
तत्र समागतः षष्ठं कल्याणकं व्यवस्थापयन् तिरस्करणीय इत्येव विचारणा ज्यायसी चतुरचेतश्चमत्करोति, लिङ्गाल्लिङ्गिनो ज्ञानमि-
ति वचनात्, तत्सद्भावे लिङ्गस्यापि सद्भावात्, कथमन्यथा चण्डिकामठे स्थितोऽपि सङ्घबाह्यः कृतः, खरतरकल्पना तु कर्णजाप-
विषयिणी कोशपानप्रत्यायनीया स्वगृह एव प्रणिगद्यमानाऽपि न हृद्या, किंच-श्रीअभयदेवसूरिपार्श्वाच्चित्रकूटे गतस्तत आरभ्य न
सूरेर्मिलितो नवा तदाज्ञा मार्गिता न वा संदेशकमपि प्रेषितवानित्यपि लिङ्गं स्फुटमेव, तस्मात्कर्णजापजल्पाको देवभद्रो लोभेन
मृषाभाषी न संविग्न इति देवभद्रश्चर्चितः २। अथ जिनवल्लभस्थापितः समुदायश्चर्च्यते, तथाहि-स समुदायः किं धर्मानुरक्तः
उत स्वमतानुरक्तः ?, आद्यश्चेत्स एव तावदित्थं प्रष्टव्यः-ननु भो जिनवल्लभे परलोकं गते तीर्थं साचार्यकं निराचार्यकं वा ?, साचा-
र्यकं चेत्तर्हि पञ्चकल्याणवाद्याचार्यनिश्रितं तीर्थं तद्व्यतिरिक्तं चातीर्थं स्वत एव सिद्धं, पर्यालोच्य तीर्थमेवाद्रियतामलमतीर्थे क्रीता-
चार्यनिश्रया प्रवर्त्तनेन ?, निराचार्यकं चेति द्वितीयः पक्षश्चेत्तर्हि किं जिनवल्लभस्य जिनदत्तस्य चाचार्यपददायकदेवभद्राचार्यस्य
मुधा प्रशंसनादिक्लेशेन ?, किंच-देवभद्रस्य पञ्चकल्याणकवादिनः सकाशादाचार्यपदोपादानमपि न युक्तं, षट्कल्याणकवादिमतेन

तस्य तीर्थपात्मात्, किञ्च–जिनवल्लभे परलोक गते येन केनचिदाचार्येण य कश्चिदनिर्दिष्टनामा आचार्यीकृत्य समर्पितस्तदप पश्यतां भजत तर्हि उगम्यगम्या विलुप्येत, सर्वेषामपि सर्वापत्यस्यापत्यथा निरपत्यत्व कस्यापि न स्यादिति प्राक् प्रदर्शितमत्राप्यव गन्तव्य, तथा च स्थाप्यस्थापकआहकानां सोमचन्द्रदेवभद्रविधिसङ्घानां त्रयाणामप्युपहास्यहेतुत्वेन लघुतैवेतिकृत्वा यदि विधिसङ्घो धर्मानुरक्तोऽभविष्यत्तर्हि जिनवल्लभे परलोक गते सुविहितान्यगच्छाश्रयणमकरिष्यत्, किंच–आस्तामेतादृग् कुमतं, सम्य ग्मार्गसंपधि यच्चाचार्ये व्युच्छिन्ने सुविहितगच्छाचार्याश्रयण जिनाज्ञा, यदागम "पचहिं ठाणेहिं कप्पति निग्गंथीण वा निग्गंथीण वा गामाणुगाम दूइज्जित्तए, तंजहा–णाणट्ठयाए दसणट्ठयाए चरित्तट्ठयाए आयरिअउवज्झाए से विसुंभेज्जा आयरिअउवज्झायाण वा बहिआ वेआवच्चकरणयाए" त्ति। श्रीस्थानाङ्ग(४१२) एतद्वृत्त्येकदेशो यथा तथा–'आयरियउवज्झाए' त्ति समाहारद्वन्द्वस्तदाचार्योपाध्यायं वा स–तस्य भिक्षोः 'विसुंभेज्ज' ति विष्वक्–शरीरात् पृथग्भवेत्–जायेत, म्रियेतेत्यर्थः, ततस्तत्र गच्छेऽन्यस्याचार्यादेरभावात् गणान्तराश्रय णायमित्यादि स्थानाङ्गवृत्तौ, न पुनरन्यगच्छीयो य' कश्चिदन केनापि विधिना आचार्यं कारयित्वोपादाय च तन्निश्रया प्रवर्त्तनं जिनाज्ञा, तस्मात्स्म जिनवल्लभसमुदायो न धर्मानुरक्त', किन्तु स्वमतानुरक्तः, परमेतच्चित्र यत् खरतरमते क्रीतमन्तरेण युगप्रधान एव न स्यात्, त त्कथमिति चेदुच्यते, प्रथमतो जिनवल्लभ पञ्चद्रम्मशत्या क्रीतः, जिनदत्तस्तु आचार्यपदसंयुक्त एव देवभद्रसकाशात् क्रीतः, न च क्रीतत्वं मर्पा मते यथाकाम् 'अथपाव सर्वेय प्रवृत्तेरविभ्रान्ते', तथा देवभद्रस्यापि चरित्रं चित्रकृत् यत् श्रीअभयदेवसूरिपट्टधरः वर्द्धमानपा अपि जिनवल्लभः सूरीकृत, तस्मिन्नपि परलोक गते यदि जिनवल्लभपट्टेऽपर आचार्यो न स्थाप्यते तदा का भक्तिरितिमिषोद्भावनेनास्मी यमतीर्थ्ये सोमचन्द्रमाचार्यीकृत्य विक्रीतवान्, जिनदत्तस्यापि चरित्रमतीवाश्चर्यकृत् यन्नाममात्रेण स्वयं पुरा मन्मार्गपतितोऽप्याचा-

र्यीभूय गोत्रान्तरे कन्येव देवभद्रेण दीयमानः परगृहमण्डनं जातः, परगृहमण्डनत्वं चास्य प्रतिज्ञापूर्वकमेव, यतो देवभद्राचार्येणैकान्ते
भणितः पण्डितसोमचन्द्रगणिर्यद्युतास्मिन् दिने युष्मदीयं पदस्थापनालग्नं परिभावितमस्ति, पश्चात् सोमचन्द्रेणोक्तं—यद्युष्माकं
सम्मतं तद्युक्तं, पर यद्यस्मिन् लग्ने स्थापयिष्यते तदा न चिराय जीवितं भविष्यति, षण्णां दिनानामुपरि शनैश्चरवारे यल्लग्नं भ-
विष्यति तत्रोपविष्टानामस्माकं चतुर्दिक्षु विहरतां चतुर्विधः श्रमणसङ्घः श्रीजिनवल्लभसूरिवचनेन प्रभूतो भविष्यति चिरंजीवि
त्वं चे'त्यादि जिनदत्तेन प्रत्यपादि, न पुनश्चैत्यवासादिकुसङ्गं परित्यज्य संविग्नभावितो भविष्यति, न चास्मादीयगुरूणां श्रीजिनेश्वर-
सूरिश्रीअभयदेवसूरिप्रभृतीनां वचनेन भूयान् जनो भविष्यतीत्यादि, किंच—बहवश्च तत्पदे स्थातुं लम्बकर्णा गौरवर्णाः श्रीप-
र्णपर्णाक्षाः साक्षादिव मकरध्वजा गुर्जरत्रासंयताः अभ्युद्यताः आसन्, पर योग्यतां गुरव एव विदन्तीत्यादिहीलनावाक्यैर्वर्णिता
ये संयतास्ते संविग्ना असंविग्ना वा ?, नाद्यः, संविग्नानां तथाविधहीलनास्थाने मिलनस्याप्यसंभवात् मिलने प्रयोजनाभावात्
पदकल्याणकवादिपदाभिलापासंभवाच, किंच—लम्बकर्णा इत्यादि वचनं भाण्डचेष्टितवचनवदनार्यवचनमेव, संविग्नेषु प्रयुज्यमान-
मनन्तसंसारिताहेतुः, किच—संयताः किं कूर्चपुरीयाः चन्द्रगच्छीया वा ?, नाद्यः, जिनवल्लभेनामुकस्य प्रव्रज्या दत्तेति वार्त्ताग-
न्धस्याप्यननुभूतेः, अत एव जिनवल्लभकाले विधिसंघो द्विविधस्त्रिविधो वेत्यग्रे वक्ष्यते, चातुर्विध्यं तु जिनदत्तादेवेतिप्रसङ्गतो
बोध्यम्, अथ चन्द्रगच्छीया इति विकल्पे विचार्यमाणे देवभद्राचार्यसंबन्धिन एव संभवन्ति, न पुनरभयदेवपट्टधरश्रीवर्द्धमा-
नाचार्यप्रभृतिसंबन्धिनः, तेषां तत्र प्रयोजनाभावात्, ये तु देवभद्रसंबन्धिनस्ते ज्ञातव्यतिकराः सङ्घपूजाद्यर्थमेव मिलन्ति, कथं
ते पदप्रलिप्सवः स्युः ?, नहि लोकेऽप्युद्वाहोत्सवोद्यता वरपक्षीयाः सुहृदोऽपि वर इव कन्यां समीहमानाः केनापि दृष्टाः श्रुता वा?,

उ मर्गेनोऽपि मृग्रापतद्द्वारामिठापिप', तथा संयता अपि त वस्तकम्बठायमित्रपियोऽभयन्तम्या',तस्मात्ररबस्स्यलिप्सब इत्यादि वपनानि देषतापत्तानां प्रनापततणफल्नानीति, नाहि कौतुकोत्सुका गार्गिरो मेयरातिका' सभूय मिलिता बाठका अपि सर्वे रजप्र- लपि गम्यग्रलिप्सवो भवन्तीत्येव मुग्धा ममीक्ष्यमाणा जिनदत्तकथा बिन्दुसंयुक्ताधवर्णा तत्रस्थानां कण्ठपीठे सदा तिष्ठतु,तस्मा पपोक्तमनरञ्जननीमंमूलो पयोक्तमम यादिनथेग्रमोम्नादिचेष्टाकः कमनुपिपद्वातकिञ्चिठियाको पयोक्तवापल्यमौक्षपर्याप्तिगुण- गणालङ्कृत' मोमचन्द्रो विधिमहमस्मूमाभ्यामपि संभूपान्तमृपया पर्यालोच्य च किंचिन्मन'संतुष्टिनिष्पादनपुरस्सरं संकेतितेन देव- मन्नापार्येण पियङ्कुर गत्वा भीप्रभयदत्तसूरिपट्टे जिनवल्लभजिनवल्लभपट्टे सोमचन्द्रो जिनदत्तनाम्ना संस्थाप्य समर्पितः, अन्यथा नाम्नाप्यज्ञातः मोमचन्द्र' मूरीकृत्य समर्पित' पुगपत्समस्तस्य जिनवल्लभसमुदायस्य मम्मतः कथं भवेदित्येताव 'मात्र जिनदत्तचरित्र विचारणीयं, अयं तु संमतिपन्नाय पठितमप्युकपुच्छया विषन्त एवेतिकृत्वाऽपकर्णनीयमेवेति भावार्थ इति गाथार्थ ॥९॥ अथोक्त मृतत एव मूचयमाह—

गणहरसद्दस्सगस्सा वित्तीए चविणओ अ जिणदत्तो। सम्म विआरणिज्ज वपणाग्रकम जहा जाय ॥१०॥

गणधरसारशतकस्य जिनदत्तकृतस्य वृत्तौ जिनदत्तो वर्णित' यत्रेति गम्यं तद्वृत्तौ वर्णकवन—पुगप्रधानोऽपमित्यादि यत्र र्णकवचन म मूतत्रा सम्यग्विचारणीय 'यथा जातं' यथा संवृत्तं तथा विचारणीयमिति गाथार्थः ॥१०॥ अथ वर्णकस्य वचन रूपमित्याह—

वण्णगवयणं मोआ भाणगणाण पाय पढमदिअं। जह मिअपमागर क्वे बाहमिवाहत्ति मोऊत्ति ॥११॥

वर्णकवचनं लोकाभाणकन्यायेन प्रायः पथपतितं, प्रायो—बाहुल्यं, तद्रूपो यः पन्थाः—मार्गः तत्र पतितं—तदाश्रितं, लोका-
भाणकमाह—'जहे'त्यादि, यथा 'निजकमातर' निजजननीं प्रति डाकिनीवादी—मदीया माता डाकिनीरितिवक्तुं शीलमस्येति डा-
किनीवादी कोऽपि न स्यादिति लोकोक्तिः, लोकाभाणकन्यायेनाभ्युपगतस्य गुरोरवर्णवादी न स्यात्, किंतु तद्विपक्षं वर्णवादमेव
कुरुते, तेन वर्णकवचनं किंचित्कदाचित्कापि सत्यं स्यात्, प्रायोऽसत्यमेवेतिकृत्वा कर्णकवर्जं भणितमिति गाथार्थः ॥ ११ ॥
अथ जिनदत्तवर्णनं प्रायोऽसत्यमेवेत्यत्रोदाहरणमाह—

**जिणसेहरचंदप्पहनरसिंहप्पमुहवण्णणयाहरणं। किंचिवि सम्मं संबंधसंगयं तंपि नो सव्वं ॥१२॥**

जिनशेखरो—जिनवल्लभसतीर्थ्यः चन्द्रप्रभः—पौर्णिमीयकमताकर्षकश्चद्रप्रभाचार्यः नरसिंहो—नरसिंहनामोपाध्यायः स्तनिकमता-
कर्षकः ततो द्वंद्वस्तत्प्रमुखाणां—तदादीनाम् आदिशब्दात्पाशचन्द्रपर्यन्ताः सर्वेऽपि ग्राह्याः, तेषां वर्णनं तदेवोदाहरणमत्र बोध्यम्, अयं
भावः—जिनशेखरादयस्तदभ्युपगन्तृभिर्महता प्रबन्धेन वर्णितास्तदतिरिक्तैश्च तिरस्कृताः तत्र किंचित्संबन्धसंगतं जननीजन-
कादिसंबन्धमात्रसूचकं सम्यग्—सत्यं, तदपि—संबन्धसंगतमपि न सर्वं, किंतु प्रायोऽल्पमेवेतिगाथार्थः ॥ १२ ॥ अथोभयस-
म्मतवर्णनोदाहरणमाह—

**निक्कासिओ गहेउं गलंमि जिणसेहरोत्ति खरयरया। रुद्दोलिआ य अहिनवगोअमसामित्ति पडिवण्णा ॥१३॥**

जिनशेखरो गले गृहीत्वा निष्काशित इति खरतराः, यदुक्तं—"अपरदिने जिनशेखरेण साधुविषये किंचित्कलहादिकमयुक्तं कृतं,
ततो देवभद्राचार्येण गले गृहीत्वा निष्काशित इत्यादि यावदेष दुरात्मा न भवतां सुखावहो भविष्यति, पामनोष्ट्रस्येव तस्य बहि-

निष्क्रानमेव थय इत्यादिप्रकारेण तिरस्कृत', स्वपक्षीयास्तु निजमकरणप्रस्तस्यादावभिनवगौतमस्वामीति प्रतिपन्ना',तत्र विचार्यमाणे—किं वचन प्रमाणीक्रियते ?, निष्प्रपञ्चस्याभ्युपगन्तुर्मत्यादि विचारणायां यदीयमभ्मत तदेव सत्यमितिगाथार्थः ॥१३॥ अथैवमप्युक्तं वर्णनं कथं स्यात् दृष्टान्तेनत्याह—

जह सिंह निअपिअर वण्णिअत मुणिअ मिअपमुहा। निअनिअपिअर गयघडविदारय वण्णयति मुहा ॥१४॥

यथा निजपितरं वर्णयन्तं सिंहं श्रुत्वा मृगप्रमुखा निजनिजपितरं गजघटाविदारकं मुधा वर्णयन्ति,मृगादय' पापका जानन्ति—निजपिता इत्यमेव वर्ण्यते, तत्र यथा सिंहेन निजपिता वर्ण्यते तथाऽस्माभिरपि निजजनको वर्ण्यते, तत्र सिंहेन वर्णनं सत्यं, शेषमसत्यमितिगाथार्थ ॥१४॥ अथ प्रकारान्तरेण दृष्टान्तमाह—

अहवा सासणनयरिं पासिअ पासंतकुमइवग्गोपि। तित्थअणुगरणमित्त तरुमत्ता वण्णयति मुहा ॥१५॥

अथवा 'सासनगरीं' जैनप्रवचनाधिपतिं दृष्ट्वा तु वेदन्दनपूजनादिपुण्यक्रियाविपर्यीक्रियमाणं दृष्ट्वा 'पाशान्तकुमतिवर्गमपि' पाशचन्द्रपर्यंतरूपाधिकमत तद्भक्ता दिगम्बरादिपाशचन्द्रपर्यंतानां भक्ता वर्णयन्ति, कथं ?—तीर्थानुकरणमात्रं यथा स्यात्तथेति क्रियाविस्तरण, यथा तीर्थे प्रतिक्रमणादिक्रियाणां यानि नामानि तानि तानि नामानि निजमतिविकल्पितक्रियाणामपि सूर्यमरीचितापोपशमभ्रधुभिमरुमरीचिकायां जलसंज्ञामिव वदन्ति, तथा साधुसाध्वीश्रावकश्राविकादिसंज्ञा तथा तेषां भक्तिः साधर्मिकस्यास्वपमित्यादि तीर्थानुकरणमय, तच्च मुधा—व्यर्थमेव, वस्तुतस्तत्स्वरूपाभावात्, नहि शुक्तिशकले रजतज्ञानाद्रजतया प्रवर्तमानोऽपि रजतलाभवानिति दृष्टान्तेन तीर्थानुकारिणोऽपि कुपक्षाक्षीयप्रतिपन्नाः तेषां तत्र्कैः क्रियमाणं वर्णनमपि मिथ्यात्वमेवेति

गाथार्थः ॥१५॥ अथ सर्वमपि वर्णनं नासत्यमित्याह—

**पाओगहणा एगं सच्चमसच्चा य अणुहरा सेसा । जह जिणसामणमेगं सच्चं सेसा असच्चा य ॥१५॥**

'वण्णयवयणं'ति गाथायां प्रायोग्रहणात्–प्रायःशब्दोपादानादेकं सत्यं यस्यानुकारो विधीयते तत्सत्यं, तत्तु एकमेव भवति, शेषा अनुकारविधायिन एते तीर्थवर्त्तिनः माध्यादय इत्थं कुर्वन्त्यतोऽस्माभिरपीत्थमेव विधेयमित्येवंरूपेण गजचेष्टाविधायिनो नटा इवासत्याः, वर्णनीयगुणानाश्रया इत्यर्थः, तत्र दृष्टान्तमाह–'जहे'त्यादि, यथा जैनशासनमेकमेव मोक्षमार्गतया सत्यं, शेषाः सर्वेऽपि सुगतादयोऽसत्या एव, मोक्षार्थमपि निजमतिविकल्पितक्रियाविधायिनोऽसर्वज्ञमूला अकिञ्चित्करा इतिगाथार्थः ॥ १६ ॥ अथ 'निक्कासिउ'त्ति त्रयोदशगाथायां वर्णकवचनमकिञ्चित्करतया दर्शितं यच्च तीर्थसम्मतं तत्सम्यगित्यप्युक्तं तेन तीर्थसम्मतं यज्जि-नवल्लभविषयं तदाह—

**जिणवल्लहो अ एवं गुरुणा चत्तो न केणवंगिकओ । अप्पच्चिओ बहु भमिओ कइजणअसुभाण उदएणं ॥१७॥**

एवं जिनशेखरादिदृष्टान्तेन, जिनवल्लभोऽपीतिगम्यं, सोऽपि गुरुणा त्यक्तः, पद्कल्याणकप्ररूपणादिकं किञ्चिन्निमित्तमासाद्य चैत्यवासिजिनेश्वरसूरिणा निष्काशितो न केनाप्यङ्गीकृतः, अहं चैत्यवासं त्यक्ष्यामीति वाङ्मात्रमुद्भाव्य श्रीअभयदेवसूरिसमीपं गतः, तेनापि परीक्षयाऽनुचितोऽयमिति ज्ञात्वा नाभ्युपगतः, परं लोकानुवृत्त्या त्वं शोभनां क्रियां कुरु पश्चाद्यथावसरं ज्ञास्यते इत्युक्त्वा प्रत्युत्तरितः, सोऽपि धौर्त्याद् गुरुवचनं प्रमाणमिति वचनमुक्त्वा चित्रकूटादौ गतः, किंलक्षणः ?–आत्मद्वितीयः, एको जिनशेखरोऽपरश्चात्मेति द्विस्थानकेन 'बहु भ्रान्तः' बहुकालं बहुक्षेत्रं च भ्रान्तः–पर्यटितः, 'कतिजनाशुभानामुदयेन' कतिपयजना-

नां पापगुमानि कर्म्माणि नयां कर्मणामुदयेन,प्राग्व मस्रनं विक्लिष्टकर्मोदयमन्तरणोत्पन्नमाप्युपदेशविपयो न भवतीति गाथार्थः ॥१७॥ अथ तन समता कि विहितमित्याह—

तण कओ विहिसंघो अप्पबिओ सावगो अ तिविहो वा। निरवच्चे परलोग गयम्मि जा जुम्मि वरिसाइं ॥१८॥

तन–जिनवल्लभन नाम्ना विधिसङ्घ कृत, स्ववचोनिपथितकतिपयजनसमुदायो विधिसङ्घनाम्ना व्यवस्थापितः, स च मरूप कीदृक् ?–'आत्मद्वितीय श्रावकः' आत्मैव द्वितीयो यत्र स श्रावकः–श्रावकजातीयः,साधुश्रावकलक्षणो द्विविधः सङ्घ इत्यथ, साधारण्यमूना श्रावका अनेन व्रापसीकृता इतिगणधरसार्द्धशतकेऽभिहिता', परं श्राविका नोक्ता, साध्व्यश्च दीक्षिता एव नामन्, साध दूर आस्तां, साधुरपि कश्चिन्न दीक्षित, अथवा त्रिविध', कथमन श्राविका' श्रावकायत्ता' समाप्यमाना अपि इतिकृत्वा त्रिविध इत्यथ','निरपत्य' अपत्यरहित परलोक गत जिनवल्लभे द्वे वर्षे यावद् गते, यावत्साधुरहित एव विधिसङ्घ आसीदितिगाथार्थ ॥१८॥ अथैवंविधन सङ्घन कि कृतमित्याह—

तण परोअतण महिओ एगो अ सोमचंदमुणी। अणुण्णं पयपच काऊण कारिओ सूरी ॥१९॥

तन सङ्घन 'परोक्षता' असत्समूहायो नि स्वामिकोऽयं कश्चित्स्वामी कर्त्तव्य इति धिया प्रत्यहमन्वेषयता वर्षद्वयेऽतिक्रान्ते एकः सोमचन्द्रनामा मुनिरूप , अन्याऽन्यं वचांसि च मतमन्यं वा कृत्वा गोष्ठ्या स्वस्वामिकृत्या एकीभूय तेन सङ्घन सूरि कारित , तस्य च नाम जिनदत्तसूरिरितिकृतमितिगाथार्थ ॥१९॥ तत्र जिनवल्लभजिनदत्तयोगत्यायपर्विधिः गणधरमार्गस्थान घस्मरस्थान पीठ्य इति ज्ञापयमाह—

जिणवल्लहजिणदत्तायरिअपयं जारगब्भसारित्थं । सीमंतसम पुत्थयालहण... कुणइ तस्सावि ? ॥२०॥

...गणधरसार्द्धशतकादिग्रन्थरचनया जिनवल्लभजिनदत्तयोराचार्यपदं जारगर्भसदृक्षं,तस्यापि पट्टस्य सीमन्तसमं पुस्तकलिखनं—गणधरसार्द्धशतकादिग्रन्थरचनया पुस्तके लिखनं कः करोति ?,न कोऽपि करोतीत्यर्थः,यत्तु खरतरेण कृतं तत्सान्वर्थनामत्वाद्युक्तमेवेत्यक्षरार्थः। भावार्थस्त्वयं—चैत्य वासिशिष्यत्वेन न गच्छसम्मतो भविष्यतीतिकृत्वा श्रीअभयदेवसूरिणा नाचार्यपद दत्तम्, अन्त्यसमये प्रसन्नचन्द्राचार्यस्योक्तं-यन्मत्पट्टे जिनवल्लभः स्थाप्यस्तेनाप्यन्त्यसमये देवभद्राचार्यः, तेन च जिनवल्लभकृतसमुदायमाक्षिकं चित्रकूटे गत्वाऽऽचार्यपदं कृतं, श्रीअभयदेवसूरिणा च स्वपट्टे श्रीवर्द्धमानाचार्यः स्थापित इत्यादि जिनवल्लभपदस्थापनस्वरूपं गणधरसार्द्धशतके लिखितं, तच्च प्राग् तत्संबन्धव्यतिकरेऽत्रैव दर्शितम्, एवं जिनदत्तस्यापि व्यतिकरः प्राग् प्रदर्शितो बोध्यः, एवं तयोः पदं विचार्यमाणं जारगर्भ इवापन्नं, जारगर्भस्य च सीमन्तकरणं न केनापि श्रुतं दृष्टं वा ?, तद्वदेतादृशो व्यतिकरः पुस्तके लेखनानर्होऽपि खरतरे-णाविमृश्य लिखितः, नह्येवंविधव्यतिकरः पदस्य दातुरनुज्ञातुः उपादातुर्वा गौरवकरः, किंतु महालज्जाकरः, नचैवं तदीयसमुदाय-स्यापि गौरवमिति सूक्ष्मधिया पर्यालोच्यमितिगाथार्थः। २०॥ अथ जारगर्भसादृश्यज्ञापनाय दिशमाह—

पव्वज्जाउट्ठावणुवहाणसुण्णोवि चिइनिवासीवि । सिद्धंतपारगामी सूरीवि विगोवणुत्तीए ॥२१॥

जिनवल्लभस्तावत् क्रीतकृतोऽपि चैत्यवास्यपि प्रव्रज्योपस्थानोपधानशून्यः,नहि जिनवल्लभेन कस्यापि संविग्नस्य पार्श्वे प्रव्रज्या गृहीता,तदभावाच्च न केनाप्युपस्थापितः,उपस्थापनाऽभावान्नोपधानमपि,आवश्यकादिश्रुताराधनतपोविशेषयोगानुष्ठानाद्यपि न जातम्, ...तैः शून्यो–रहितः सिद्धान्तपारगामी संविग्नश्रीअभयदेवसूरिपार्श्वे संपन्नः, तथाभूतोऽपि रहः कर्णजापपरम्परया सूरिरपि, सोऽपि

नां यान्यशुभानि कर्म्माणि तेषां कर्म्मणामुदयेन, प्राग्जन्मसंपादितक्लिष्टकर्मोदयमन्तरेणोत्सूत्रमाप्युपदेशविषयो न भवतीति गाथार्थः ॥१७॥ अथ तेन भ्रमता किं विहितमित्याह—

तेण कओ विहिसंघो अप्पबिओ सावओ अ तिविहो वा। निरवच्चे परलोगं गयम्मि जा दुन्नि वरिसाइं ॥१८॥

तेन—जिनवल्लभेन नाम्ना विधिसङ्घः कृतः, स्ववचोनियंत्रितकतिपयजनसमुदायो विधिसङ्घनाम्ना व्यवस्थापितः, स च सङ्घः कीदृशः?—'आत्मद्वितीयः श्रावकः' आत्मैव द्वितीयो यत्र स श्रावकः—श्रावकजातीयः, साधुश्रावकलक्षणो द्विविधः सङ्घ इत्यर्थः, साधारणप्रमुखाः श्रावका अनेन स्वायत्तीकृता इतिगणधरसार्द्धशतकेऽभिहिताः, परं श्राविका नोक्ता, साध्व्यश्च दीक्षिता एव नाभवन्, तावद् दूर आस्तां, साधुरपि कश्चिन्न दीक्षितः, अथवा त्रिविधः, कथमन श्राविका भावकापत्या संभाव्यमाना अपि इतिकृत्वा त्रिविध इत्यर्थः, 'निरपत्ये' अपत्यरहिते परलोकं गते जिनवल्लभे द्वे वर्षे यावद् गते, वर्षद्वयं यावत्साधुरहित एव विधिसङ्घ आसीदितिगाथार्थः ॥१८॥ अथैवंविधेन सङ्घेन किं कृतमित्याह—

तेण परोक्खत्तेण लद्धिओ एगो अ सोमचंदमुणी। अण्णुण्णं वयणं काऊण कारिओ सूरी ॥१९॥

तेन सङ्घेन 'प्रलोकयता' भ्रमत्समुदायो निःस्वामिकोऽतः कश्चित्स्वामी कर्त्तव्य इति धिया प्रत्यहमन्वेषयता वर्षद्वयेऽतिक्रान्ते एकः सोमचन्द्रनामा मुनिर्लब्ध, अन्योऽन्यं वचोवचनं च कृत्वा रहोवृत्त्या स्वस्वामिरुच्या एकीभूय तेन सङ्घेन सूरिः कारितः, तस्य च नाम जिनदत्तसूरिरितिकृतमितिगाथार्थः ॥१९॥ अथ जिनवल्लभजिनदत्तयोराचार्यपदविधिः गणधरसार्द्धशतकादुपलभ्यमानः कीदृश इति ज्ञापयन्नाह—

**जिणवल्लहजिणदत्तायरिअपयं जारगब्भसारित्थं। सीमंतसमं पुत्थयलिहणं को कुणइ तस्सावि ? ॥२०॥**

जिनवल्लभजिनदत्तयोराचार्यपदं जारगर्भसदृक्षं,तस्यापि पदस्य सीमन्तसमं पुस्तकलिखनं–गणधरसार्द्धशतकादिग्रन्थरचनया पुस्तके लिखनं कः करोति ?,न कोऽपि करोतीत्यर्थः,यत्तु खरतरेण कृतं तत्सान्वर्थनामत्वाद्युक्तमेवेत्यक्षरार्थः। भावार्थस्त्वयं–चैत्य वासिशिष्यत्वेन न गच्छसम्मतो भविष्यतीतिकृत्वा श्रीअभयदेवसूरिणा नाचार्यपदं दत्तम्, अन्त्यसमये प्रसन्नचन्द्राचार्यस्योक्तं– यन्मतपट्टे जिनवल्लभः स्थाप्यस्तेनाप्यन्त्यसमये देवभद्राचार्यः, तेन च जिनवल्लभकृतसमुदायमाक्षिकं चित्रकूटे गत्वाऽऽचार्यपदं कृतं, श्रीअभयदेवसूरिणा च स्वपट्टे श्रीवर्द्धमानाचार्यः स्थापित इत्यादि जिनवल्लभपदस्थापनस्वरूपं गणधरसार्द्धशतके लिखितं, तच्च प्राग् तत्संबन्धव्यतिकरेऽत्रैव दर्शितम्, एवं जिनदत्तस्यापि व्यतिकरः प्राग् प्रदर्शितो बोध्यः, एवं तयोः पदं विचार्यमाणं जारगर्भ इवापन्नं, जारगर्भस्य च सीमन्तकरणं न केनापि श्रुतं दृष्टं वा ?, तद्वदेतादृशो व्यतिकरः पुस्तके लेखनानर्होऽपि खरतरे- णाविमृश्य लिखितः, नह्येवंविधव्यतिकरः पदस्य दातुरनुज्ञातुः उपादातुर्वा गौरवकरः, किंतु महालज्जाकरः, नचैवं तदीयसमुदाय- स्यापि गौरवमिति सूक्ष्मधिया पर्यालोच्यमितिगाथार्थः। २०॥ अथ जारगर्भसादृश्यज्ञापनाय दिशमाह—

**पव्वज्जाउट्ठावणुवहाणसुण्णोवि चिइनिवासीवि। सिद्धंतपारगामी सूरीवि विगोवणुत्तीए ॥२१॥**

जिनवल्लभस्तावत् क्रीतकृतोऽपि चैत्यवास्यपि प्रव्रज्योपस्थानोपधानशून्यः,नहि जिनवल्लभेन कस्यापि संविग्नस्य पार्श्वे प्रव्रज्या गृहीता,तदभावाच्च न केनाप्युपस्थापितः,उपस्थापनाऽभावान्नोपधानमपि,आवश्यकादिश्रुताराधनतपोविशेषयोगानुष्ठानाद्यपि न जातम्, एतैः शून्यो–रहितः सिद्धान्तपारगामी संविग्नश्रीअभयदेवसूरिपार्श्वे संपन्नः, तथाभूतोऽपि रहः कर्णजापपरम्परया सूरिरपि, सोऽपि

श्रीश्रमणसंघपरिषद्ये श्रीवर्द्धमानाम्नाय विद्यमानेऽपि,तदीयसमवायनानभ्युपगतोऽपि,सङ्घेन बहिष्कृतोऽपि एकाकी भ्रमन्नपि श्रीश्र मणसंघपरिषद्ग्य इत्यादि विशेषणयुक्त्या यत्र लिखित खरतरमन्तरेण को गर्दभीक्षीरपायी प्रत्येतीति गाथार्थ ॥२१॥ अथ प्र स्तावान्तरमपि दिग्बन्धन गाथाद्विकेन विवक्षु प्रथमगाथामाह—

जाव दिसाबंधेण न कओ सीसो सहत्थवासेण। ताव न मंडलिभोगोऽवि होइ कह होइ पट्टधरो? ॥२२॥

यावत्स्वहस्तवासेन–निजहस्तवासनिक्षेपेण हेतुभूतेन दिग्बन्धेन शिष्य कृतो न स्यात्, दिग्बन्धस्त्वेष–कौटिको गणो वैरी शाखा चान्द्रं कुलममुकनामा भट्टारकोऽमुक आचार्योऽमुकश्चोपाध्यायोऽमुका प्रवर्तिनी चेत्याद्येवंविधेन दिग्बन्धेन शिष्य कृतो न भवेत् तावत् मण्डलीसंभोगोऽपि न भवति–सप्तादिमसप्तमण्डलीसंभोगो न स्यात्, सप्तमण्डल्यस्त्वेवम्–"सुत्ते अत्थे भोअण काले आवस्सए अ सज्झाए। संथारे चिअ तहा सत्तेआ मंडली हुंति ॥१॥" तर्हि पट्टधर कथं भवेत्?, मण्डलीसंभोगाभावे पट्टधरत्व दुरापमवेति गाथार्थ ॥२२॥ अथ व्यतिरेक प्रथममभिमाह—

भिन्नदिसाबंधेण न हुंति संभोगसीसमाईणि। ठाणंगे चउभंगी गणसंठिइमाइवित्तीए ॥२३॥

भिन्नदिग्बन्धेन–गच्छान्तरीयदिग्बन्धकरणेन निजगच्छसत्कमण्डलीसंभोगशिष्यादीनि, आदिशब्दात्निजपदस्थापनानि प्रायाणि, तानि न भवन्ति, अ यथा दिग्बन्धस्य वैयर्थ्यापत्तेः, एतच्च स्थानाङ्गे चतुर्थस्थानके चतुर्भङ्ग्यां गणसंस्थित्यादिवृत्तौ भणितमित्यध्याहार, तथाहि–"चत्तारि पुरिसजाया पं०, तं०–धम्मसंठिइं जहाति नामेगे नो गणसंठिइं, गणसंठिइं जहाति ना मेगे नो धम्मसंठिइं" इत्यादि श्रीस्थानाङ्गे,तद्वृत्तिर्यथा–धर्मं त्यजत्यको जिनाज्ञारूप,न गणसंस्थिति–स्वगच्छसत्कां मर्यादाम्,इह

देयमिति, एवं च योऽन्य-
कैश्चिदाचार्यैस्तीर्थकरानुपदेशेन संस्थितिः कृता यथा–नास्माभिर्महाकल्पाद्यतिशयश्रुतमन्यगणसत्काय श्रुतं दात-
गणमत्काय न तद्दाति स धर्मं त्यजति,न गणस्थितिं, जिनाज्ञानुपालनात्,तीर्थकरोपदेशो ह्येवं–सर्वेभ्यो योग्येभ्यः श्रुतं दात-
व्यमिति प्रथमः, यस्तु ददाति स द्वितीयः,यस्त्वयोग्येभ्यस्तद्ददाति स तृतीयः, यस्तु श्रुताव्यवच्छेदममर्थस्य परशिष्यस्य स्वकी-
यदिग्बन्धं कृत्वा श्रुतं ददाति तेन न धर्मो नापि गणसंस्थितिस्त्यक्तेति" श्रीस्थानाङ्गवृत्ताविति गाथार्थः ॥२३॥ अथ गच्छा-
न्तरीयदिग्बन्धेन शिष्यादिव्यवहारो न स्यात् तत्कथमिति ज्ञापनाय गाथामाह—

**तेणं पज्जोसवणाकप्पंमि थिरावलीइ भणिआइं । साहाकुलपमुहाइं नामेहिं नेव दीसंति ॥२४॥**

येन कारणेन गच्छान्तरीयदिग्बन्धेनात्मीयसंबन्धि शिष्यादि न स्यात् तेनैव कारणेन पर्युषणाकल्पे स्थविरावल्यां शाखाकुलप्रमुखानि
भणितानि यानि तानि नामभिः–यथोक्ताभिधानैर्न दृश्यन्ते, अयं भावः–जिनवल्लभवत् संतानरहिता ये परलोकं गतास्तत्कृत-
दिग्बन्धादिविकलास्तत्संताना भवितुं नार्हन्त्यतो व्युच्छिन्नसंतानास्तेऽभूवन्,ततः कथं तेषां नामभिस्ते लभ्यन्ते ?,न पुनः साक्षाद्
दृश्यन्त इतिगाथार्थः ॥२४॥ अथ प्रकृते योजयति—

**जिणदत्तदिसाबंधो न कओ जिणवल्लहेण तस्सावि । न कओऽभयदेवेणं कहमण्णुण्णंपि संबंधो ॥२५॥**

'जिनदत्तदिग्बन्धः' जिनदत्तस्य सोमचन्द्रापरमूलकस्य दिग्बन्धः जिनवल्लभेन न कृतः,तस्यापि–जिनवल्लभस्याप्यभयदेवेन
न कृत इति, एवं च सति कथमन्योऽन्यमपि–परस्परमपि संबन्धः–गुरुशिष्यभावलक्षणः स्यात् ?,न कथमपीतिगा-

जह कीडिअउदाण संबंधो तारिसो अ तह तेसिं। चित्तं तदवच्चेण चरिअं ज तारिसं लिहिअं ॥२६॥

यथा कीटिकोन्दुरयो' संबन्धो यादृश इति गम्यं तादृशस्तथा तेषां—श्रीअभयदेवसूरिजिनवल्लभजिनदत्तानां परस्परं संबन्धः, अय भाव —कीटिकाभिरुन्दुर उन्दुरस्य च कीटिकाभि' संबन्धो—अन्यजनकभावो न स्यात्, नहि बह्वीभिरपि कीटिकाभिरुन्दुर एकोऽपि उन्यन तथा तेन गाथत्यादि दृष्टान्त' प्रतीत एव, 'तदपत्येन' जिनपतिसूरिप्रभृतिना तादृश चरितं—जिनवल्लभजिनदत्तयोर्य याभूत संबन्धमात्रपरकं चरित्र लिखित तच्चित्रम्—आश्चर्यम्, अन्यथा कथमस्मादृशैर्यथावत् ज्ञायेतेतिगाथार्थ ॥२६॥ अथ जिनव ल्लभस्योपरामहेतुमाभाग्यमाविष्कुर्वन्नाह—

निरवच्चमयस्साविअऽवच्चं जिणवल्लहस्स स तेण। लोउत्तरसोहग्ग वण्णिज्जइ कित्तिअं तस्स ? ॥ २७॥

निरपत्यमृतस्यापि जिनवल्लभस्यापत्य, मत्त्वनदावत्वारिंशद्वर्षीयाधायपदोपतमेव प्रवृत्तमितिगम्य, तत् तदपत्यहेतुक लोकोत्तरं सौभाग्यम्, अन्यस्य तद्व्यतिरिक्तस्य तादृश न भवतीति, लोकोत्तरमिति सौभाग्यविशेषण, 'तस्य' जिनवल्लभस्य 'कियत्' कियन्मात्र वर्ण्यत ?, वर्णयितुमशक्यमित्युपहास्य, जगत्स्पतेर्बहिर्भूतत्वात्, एतेन खरतर यदमादिषु —अस्मदीयो गच्छ' माधिपायकमनत्यस्य संपन्न, तथाविधाधिष्ठापकमन्तरेण मृतानामप्यपत्यत्वासम्भवादितिगाथार्थः ॥ २७ ॥ अथ जिनदत्त स्याप्युपहास्यास्पदत्वमाह—

लोउत्तरसोहग्ग जिणदत्तस्साऽवि जेण निरवच्चो। कालगओ सावओ जाओ जिणवल्लहो जेण ॥२८॥

जिनदत्तस्यापि लोकोत्तरं सौभाग्य एव कारणेन निरपत्य कालगतोऽपि जिनवल्लभो येन जिनदत्तेन हेतुना सापत्यो जातः,

एतदप्यसंभवि जगद्विलक्षणं संभूतमिति, अयं भावः—'अपुत्रस्य गतिर्नास्ती'ति वचः श्रुत्वा अहो जिनवल्लभोऽपत्यरहितो
मृतो विगतिभाग् मा भवत्विति तद्भक्त्युल्लसितमानसः स्वयं तदपत्यीभूय जिनवल्लभं सुगतिं प्रापितवान् जिनदत्त इत्युपहास्यमि-
तिगाथार्थः ॥२८॥ अथ खरतरसमुदायमात्रस्यापि लोके हास्यास्पदत्वं दर्शयति—

**जीवंतजणयजणिआवच्चाइं हुंति एस जगवट्टो। खरयरनामावच्चं तु उग्गकिरिअंति विवरीअं ॥२९॥**

जीवज्जनकजनितापत्यानि भवन्ति एष जगन्मार्गो—जगत्स्थितिः,
'जीवज्जनकजनितापत्यानि' जीवद्भिर्जनकैर्जनितान्यपत्यानि जीवज्जनकजनितापत्यानि तदीयं वचस्तदनुसारेणैव संभा-
'खरतरनामापत्यं तु' खरतर इति नाम यस्येति, खरतरमात्रग्रहणं, तद्रूपं यदपत्यं तत्तूग्रक्रियमिति वर्षे दिवं गतः
व्यते इत्यर्थाद् बोध्यं 'विपरीतं' विपर्ययहेतुकं, मृतजनकजनितमित्यर्थः, अयं भावः—सं० ११३५ वर्षे क्वचित् ११३९ वर्षद्वयेऽतिक्रान्ते
श्रीअभयदेवसूरिः, जिनवल्लभस्तु सं० ११६७ वर्षे तत्पट्टधरः संपन्नः, (तस्मिन्नेव च दिवं गतः) ततोऽपि खरतरनामकमपत्य-
सोमचन्द्रो जिनदत्तनाम्नाऽऽचार्यीभूय तत्पट्टे जातः, ततश्च खरतरनाम्ना मतप्रवृत्तिरिति मृतजनकात्समुत्पन्नं
मित्युपहासस्थानं लोकानामिति गाथार्थः ॥२९॥ अथ जिनवल्लभजिनदत्तयोस्तथाविधभविष्यतासूचिकां चेष्टामाह —

**सप्पाकरिसिणिविज्जालाहुग्गयखित्ततोडणं पढमं। भविअव्वयाणुचिट्ठा लिंगं अइमुत्तयाहरणा ॥३०॥**

जिनवल्लभेन बाल्यावस्थायां सर्पाकर्षिणी विद्या तन्मोचनी च टिप्पनकलिखिता प्राप्ता तस्याः भाविफलं—सर्पतुल्यानामनन्त-
संसारभाजां दुष्टाशयवतां मनुजानामाकर्षणं—स्वायत्ततां करिष्यति, या च सर्पमोचिनी तस्याः फलं—निरपत्य एव परलोकं यास्य-
तीति सूचितं, यतस्तेनैव ते मोचिता इति लिखितमस्ति, जिनदत्तेनोद्गतक्षेत्रं त्रोटितं, तत्फलं—सम्यक्त्वाकुलितस्य सङ्घक्षेत्रस्य

म्वन ग्रोग्ये भविष्यतीति प्राक् प्रदर्शितमिति 'भवितव्यतानुचेष्टा' भवितव्यतानुसारेण चेष्टा भवितव्यतानुचेष्टा लिंगं–प्राग्युक्तक लम्सक्रम् अतिमुक्तकोदाहरणात्, यथाऽतिमुक्तकेन श्रीमहावीरशिष्येणासाकीना नौस्तरतीति वदता जले निजपात्रं प्रवाहितं, तथा तद्भवमोक्षगमने लिङ्ग सूचितमितिगाथार्थः ॥२०॥ अथातिदेशोपसंहारमाह—

इयेअ जिणवल्लहजिणदत्ताण चरित्तमिह वर्च। गणहरसड्ढसडस्स वण्णायवज्जति तं भणिअ ॥२१॥

इत्येवं प्रागुक्तप्रकारेण जिनवल्लभजिनदत्तयो' स्वरूप–चरित्रं गणधरसार्द्धशतकोक्तं, वर्णनं त्वयथार्थमपि भवतीतिकृत्वा वर्ण्य कमजमिह प्रकरणे वाच्य–वक्तव्य भवतीति सङ्गणितमितिगाथार्थ ॥२१॥ इतिगाथादशकेन खरतरपट्टधरपरम्परोपहास्यहेतुरिति दर्शितं ॥ अथ खरतरमतारम्भको जिनदत्ताचार्यः कथमित्याह—

जिणदत्ता चउवण्णो समुदाओ अत्र जाअ अभिहाणो। सजाओ त पढमो आयरिओ नामजिणदत्तो ॥२२॥

जिनवल्लभाद्विविधमह्य प्रवृत्तोऽपि साध्वीनाम्ना चिकलत्रिविध एवासीत्,जिनदत्तात्तु चतुर्वर्ण , कियत्कालानन्तरं साध्वी-वेषार्पणेन साध्वीसंयुक्तो जात'–संपन्न' समवायो जिनवल्लभस्यापितो विधिसङ्घनाम्नेति,एवंविधः समय यावदच्छिन्नो वर्तते, तेन कारणेन चतुर्वर्णरमीभूतस्य विधिसङ्घस्य प्रथम'–आद्य आचार्यो नाम्ना जिनदत्तो नामजिनदत्त', खरतरमतारम्भको जिनदत्ताचार्य इति मूलाचार्य प्रगन्नित इतिगाथार्थ ॥२२॥ इत्युद्दिष्टयोर्मूलोत्पत्तिप्रथमाचार्ययोर्वैकल्पता प्रदर्शिता, अथ खरतरमते नाम्ना-भूपत्ति स्वरूपमाह—

अह चामुंडिअउअट्टिखरयरनामाइ तिण्णि जिणदत्ता। जह जायाई तहेव य समासओ सुणह दसेमि ॥२३॥

'अथे'ति मूलोन्ध्वत्रप्रथमाचार्ययोर्वक्तव्यतानन्तरं चामुण्डिकश्चौष्ट्रिकश्च खरतरश्चेति नामानि 'त्रीणि' त्रिसंख्याकानि जिनदत्ताद् यथा जातानि अमुकवर्षेऽमुकहेतुना जातानि तथैव,नान्यथा,चकारः पादपूरणे, शृणुत भो लोकाः !, तन्नामोत्पत्तिजिज्ञासया श्रवणगोचरीकुरुताहं दर्शयामीतिगाथार्थः ॥३३॥ अथ प्रथमं चामुण्डिकनाम्न उत्पत्तिमाह—

**तेणेविगुत्तरेहिं बारससयवरिसएहिं चामुंडा। आराहिआ य तेणं चामुंडिअसन्निओ जाओ ॥३४॥**

तेनैव—जिनदत्तेनैवैकोत्तराधिकद्वादशशतवर्षे १२०१ निजमतवृद्धये 'चामुण्डा'चण्डिकापराभिधाना मिथ्यादृग्देवताविशेष आराधिता तेन हेतुभूतेन चामुण्डिक इति संज्ञा—नाम जाताऽस्येति चामुण्डिकसंज्ञितो जातः—उत्पन्नः, तथाविधख्यातिमानित्यर्थः, अयं भावः—चित्रकूटे यस्या मठे जिनवल्लभो वर्षारात्रं स्थित आसीत्, तत्रैव स्थित्वा जिनदत्तेन सा आराधिता निजमतवृद्धये, यथा आञ्चलिकमताकर्षकेण नरसिहोपाध्यायेन चम्पकदुर्गे मिथ्यादृग् कालिका देवी निजमतवृद्धये आराधिता तथाऽयं चामुण्डिकाराधनाचामुण्डिक इति मान्वर्थं नाम जिनदत्तादेव प्रवृत्तमितिगाथार्थः ॥३४॥ अथ सार्द्धगाथाद्वयेनौष्ट्रिकनाम्न उत्पत्तिमाह—

**अह अण्णया कयाई रुहिरं दट्ठूण जिणहरे रुट्ठो। इत्थीणं पच्छित्तं देइ जिणपूअपडिसेहं ॥३५॥**

**संघुत्तिभयपलाणो पट्टणओ उट्टवाहणारूढो। पत्तो जावालपुरं जणकहणे भणइ विज्जाए ॥३६॥**

**लोएणं सो भणिओ नामेणं उट्टिउत्ति बिअनामं। तन्नामसवणरुसिओ लोएहिं मिसिमिसेमाणो ॥३७॥**

**जाओ तामसवयणो भणिओ लोएण खरयरा पयडी। तेणामरिसवसेणं खरयरसन्नत्तिपडिवण्णं ॥३८॥**

'अथे'ति प्राग्वत् अन्यदा—एकदा प्रस्तावे जिनदत्तेन जिनभवने रुधिरं पतितं दृष्ट्वा रुष्टः सन् अद्यप्रभृति स्त्रीभिर्जिनप्रतिमा न

पूजनीया, विशेषतो मूलप्रतिमेत्येवमुपदेशेन सीम्णो रुधिरपातप्रभवपातकस्य प्रायश्चित्तं ददाति, एतद्व्यतिकरमाकर्ण्य मुख्येन चिन्तितम्—अहो प्रवचनोपघातकोपदेशेनानेनैवंविधः प्रायश्चित्तविधि कुतोऽभ्यस्तो ? यदेकस्यापराधे तज्जातिमात्रस्य जिनपूजाप्रतिषेधरूपं प्रायश्चित्तं दीयते, एवं च सति धर्मानुष्ठानमात्रस्याप्युच्छेदापत्तिः, न हि किमपि धर्मानुष्ठानस्थानं शाश्वतं यदनादौ संसारेऽनेकैरनेकशोऽननुकूलक्रियाभिर्न विराधितं, तस्माद्विराधितस्थाने तदाराधनाय प्रवृत्तो नोद्वेजयितव्यः, किंतु यत्स्थाने येन विराधितं भवेत्स एव तत्स्थानकविराधनासमुत्पपातकघाताय पुनस्तत्रैव प्रवर्त्तयितव्यः, अत एव प्रतिमापुस्तकविनाशे नवीन कारापणे शुद्धिः प्रायश्चित्तदाने भणिता, न पुनस्तदाराधनविधेः पराङ्मुखीकर्त्तव्यः, तस्मात् प्रातरेष प्रष्टव्यो, यदि कदाग्रहं न त्यक्ष्यति तदाऽस्मै शिक्षा दास्यते, इत्येवंरूपेण या सद्धोक्तिः तस्या सम्यक् भयस्य तस्मात् तन्निमित्तात् 'पलाणो'त्ति पलायितो,—नष्ट इत्यर्थः, कीदृशो नष्ट ?—उष्ट्रवाहनस्थ, पथनाजावालपुरं प्राप्तः, उष्ट्रमारुह्य स्वर्णगिरिं प्राप्त इत्यर्थः, तत्रस्थजनकथने—कर्थ केन विधिना शीघ्रमेव भवानिहागत इति लोकोक्तौ सत्यां द्रव्यलिङ्गिभ्यः संभावितोपद्रवः औष्ट्रिकी क्रिया स्मृत्वाऽत्रागत इति प्रत्युत्तरं दत्तवान्, तदानीं पानीयपात्राभावेन पञ्चाचरणाऽपि तन्मतं प्रसन्नतो पोष्या, ततो लोकेनौष्ट्रिकीविधानतयौष्ट्रिक इत्युक्तोऽसौ द्वितीयमौष्ट्रिकनामेति सार्द्धगाथाद्वयार्थः ॥ २५ ॥ २६ ॥ अथ सार्द्धगाथया वृद्धवादोऽनुसारेण युक्त्या खरतर नाम्न उत्पत्तिमाह—तदनन्तरोक्तमौष्ट्रिक इतिनाम तन्नाम तस्य नाम्नः भवण—लोकमुखाच्छ्रवणेन तेन हेतुभूतेन रुष्टो—रोषं गतः लोकैः तिरिति, पश्चात्तेन जिनदत्तेनामधयेन खरतरसंज्ञति प्रतिपन्नम्, अयं भावः—औष्ट्रिक इत्युक्ते लोकं प्रति सरोष त्रिवलीसमलङ्कृ-

तललाटः मवाष्पारुणलोचनः मां प्रतीत्थं लोको ब्रूते इति द्वेषाभिभूतोऽसभ्यभाषणाय स्फुरदोष्ठः सन् तामभवाग्-मां प्रति
नोपलक्षध्वमित्यादिरूपेण भयोत्पादनपुरस्सरमाक्रोशदाता जातोऽभूत्, पश्चाल्लोकेन भणितम्-अहो खरतरा प्रकृतिरस्य, मौखर्य
च जिनदत्तस्य स्वभावसिद्धं गणधरसार्द्धशतकवृत्तावप्युपलभ्यते,कथमन्यथा मृदुभाषया पृष्टोऽपि कापलिका त्वदीयमुखचूरणा-
र्थमित्यादि निष्ठुरभाषी भवेद्?,एतदर्थिना तु प्रागुक्तजिनदत्तचरित्रमेव विलोक्यम्, अद्यापि लोके यस्तामसप्रकृतिर्भवति तस्य
खरतरप्रकृतिरिति ख्यातिः स्वर्णगिर्यादौ प्रतीतैव, पश्चात्तेन चिन्तितं-खरतरप्रकृतिकं मां ज्ञात्वा कोऽप्यन्यो भीतो माऽपवद-
त्वित्यमर्षवशात्तेनाहं खरतरोऽस्मीति,मां प्रति समीक्ष्य किंचिद्वक्तव्यं,नाहं सहिष्ये इति तेन जिनदत्तेन खरतरसंज्ञेति प्रतिपन्नमिति
खरतर इति तृतीयं नाम लोकदत्तं, तदपि जिनदत्तेनाभ्युपगतमित्युभयसम्मतं, परं खरतरनाम्नः प्रसिद्धिः कियत्कालानन्तरमेव
वह्वी जाता, अत एव गणधरसार्द्धशतकवृत्त्यादौ खरतरनाम्नो नाभिधानं, तथा श्रावणिकत्वेन सगोत्रः स्तनिकोऽपि शतप-
द्याम्-'औष्ट्रिका आचरणायाः प्रामाण्यं वदन्ति तत्रेदमभिधातव्य'मित्यादिवचनैरुक्तवान्, न पुनः क्वापि खरतरा इति, तदानी-
मौष्ट्रिकनाम्न एव प्रसिद्धेरिति सार्द्धगाथार्थः॥३७-३८॥ अथोष्ट्रिकखरतरनाम्नोरुत्पत्तिः कस्मिन् संवत्सरे जातेत्याह—

**एवं चउत्तरेहिं बारससयवरिसएहिं १२०४ नामदुगं। चामुंडिअनामजुअं नामतिगं तेण जिणदत्ता ॥३९॥**

'एवं' प्रागुक्तप्रकारेण चतुरुत्तरैः-चतुरधिकैर्द्वादशशत १२०४ वर्षैः 'नामदुगम्'अभिधानद्विकं जातमित्यर्थः, तच्च नामद्विकं
चामुण्डिकनामयुतं सन्नामत्रिकं स्याद्, एतन्नामत्रिकं जिनदत्तादेव, नान्यस्माज्जिनवल्लभादेस्तथाविधनिमित्तामात्रादेवेतिगाथार्थः
॥३९॥ अथ "दमसयचउवीसेहि नयरि पट्टण अणहिलपुरि। हुअउ वाद सुविहित्थ चेइवासी स्यु वहुपरि ॥१॥ दुल्लहनरवइसभासमक्ख

जिण हलिहिं निभउ। पद्वाम उज्जपि देमगुअराहन विभउ ॥२॥ सुविहितगच्छ खरतरबिरुद दुल्लहनरपइ तिहिं दिअइ। सिरिवद्धमाणपट्टिहिं तिलउ,जिणेसरसूरि गुरू गहगहइ ॥३॥" इत्यादिवचोभिः श्रीदुर्लभराजसभायां चैत्यवासिभिः सह विवादे जयात् श्रीजिनेश्वरसूरिभिः खरतरबिरुद प्राप्तमिति तदीयाः श्रीजिनेश्वरसूरिमभ्यास्यांति, तदप्राकृतये गाथामाह—

जं पुण जिणेसरेण खरयरबिरुअ निवाउ उवलद्ध। क्याइयमुल्लवण लवण धम्मकुरस्स तय ॥४०॥

यत्पुनर्जिनेश्वरेण-श्रीजिनेश्वराचार्येण नृपात्-दुर्लभराजसकाशात् खरतरबिरुदमुपलब्धं-प्राप्तमित्यादिकमुल्लपनं तदेव तत्कुत्सार्थे कप्रत्यये तर्क-प्रागुक्तं धर्माङ्कुरस्य लवनं-छेदनं,तत्र धर्मो ज्ञानादिलक्षणस्तस्याङ्कुरः-सत्यभाषणं, यत सत्यभाषणादेव संविग्नपाक्षिकोऽपि ज्ञानदर्शनभाग् सन् मोक्षस्य तृतीयः पथा भणितः, यदुक्तं-"सावज्जजोगपरिवज्जणाइ सव्वुत्तमो जईधम्मो। बीओ सावगधम्मो तइओ संविग्गपक्खपहो ॥१॥त्ति श्रीउपदेशमाला (५१९) असत्यभाषणे च घोरानुष्ठानपरोऽप्यनन्तसंसारभाग्, यथा जमाल्यादयः, यदागम-"सत्तेआ दिट्ठीओ जाइजरामरणगब्भवसहीण। मूल संसारस्स उ हवंति निग्गंथरूवेण ॥१॥ (३-७८६) त्ति श्रीआवश्यकनि० विशेषतो महापुरुषस्याभ्यास्यानं ज्ञानादिनाशकमितिगाथार्थः ॥४०॥ अथ तत्र मृषाभाषणं व्यक्तमाह—

अण्ण दुल्लहराया वसचउवीसंमि १०२४ दुल्लहो चेव।
जो पुण असीइ १०८० विगप्पो त ससगस्सेव सवणपुट्ठ ॥४१॥

दशचतुर्विंशे—चतुर्विंशत्यधिकदशशत १०२४ वर्षे न दुर्लभराजो दुर्लभ एव, तदानीं तस्यानुत्पन्नत्वात्,न चानुत्पन्नो विरुद

दद्यात्, यत्पुनरशीतिविकल्पः—अशीत्यधिकदशशत १०८० वर्षे खरतरविरुदं जातमिति कल्पना तदपि शशकस्य श्रवणपुटमिव, यथाहि—आखेटकपरिवेष्टितः शशकः स्वकर्णपुटेन निजचक्षुषी आवृत्य तिष्ठति तथाऽयमौण्ड्रिकोऽपि, अयं भावः—प्रागुक्तयुक्त्या संत्रासितः पलायनदिशमलभमानः कश्चिद्वाचालो वदति—अहो मया "दससयचउवीसेहि नयरि"त्ति तत्र चतुर्विंशतिशब्देन चतस्रो विंशतयश्चतुर्विंशतय इतिव्युत्पत्त्या अशीतिरुच्यते इति विकल्प्य जल्पनमपि शशकस्य कर्णपुटमिव नालं भवति, यतस्तदीयजीर्णपट्टावलीषु १०२४ वर्षे श्रीमदणहिल्लपत्तने दुर्ल्लभराजसमक्षमित्यादि लिखितमस्ति, तथा,—'श्रीपत्तने दुर्ल्लभराजराज्ये, विजित्य वादे मठवासिसूरीन्। वर्षेऽब्धिपक्षाभ्रशशि १०२४ प्रमाणे, लेभेऽपि यैः खारतरो विरुद्व॥१॥इति सं० १५८२ वर्षे जिनहंससूरिराज्ये खरतरकृतच्छन्दोनिबद्धपट्टावल्यामितिगाथार्थः ॥४१॥ अथ तथा विकल्पितं कथं न त्राणमित्याह—

जं सो दसबावट्ठीवरिसे उववेसिऊण रज्जंमि। दससत्तसत्तरीए कालगओ दुल्लहो राया ॥४२॥

यद्—यस्मात् स दुर्ल्लभराजः षट्षष्ट्यधिकदशशतवर्षे १०६६ राज्ये उपविश्य सप्तसप्तत्यधिकदशशत १०७७ वर्षे कालगतः—परलोकं प्राप्तः, क्वचित् सं० १०७८ वर्षे इत्यपि दृश्यते, तत्रायं वर्ष ११ मास ६ राज्यं कृतवानिति लिखितम्, अतस्तदपि युक्तमेव, यतः श्रीपत्तनराजपट्टावली त्वेवं—श्रीवीरात् ४७० वर्षे श्रीविक्रमः संवत्सरः, विक्रमादित्यतः सं० ८०२ वर्षे वनराजेन पत्तनस्थापना कृता, तत्र तस्य राज्याभिषेकश्च ८०२ वर्षे, वनराजराज्यं वर्ष ६०, ततः ८६२ योगराजराज्यं, वर्ष ३५, ततः ८९७ क्षेमराजराज्यं, वर्ष २५, ततः ९२२ भूयडराज्यं, वर्ष २९, ततः ९५१ वैरसिंहराज्यं, वर्ष २५, ततः ९७६ वर्षे रत्नादित्यराज्यं, वर्ष १५, ततः ९९१ सामन्तसिंहराज्यं, वर्ष ७, एते चापोत्कटा राजानः १९६ वर्षमध्ये बोध्याः, ततः ९९८

मूलराजराज्य,वर्ष ५५, स च सामन्तसिंहभगिनीलीलादेवीसुतः, तत १०५३ चामुण्डराज्य,वर्ष १३, ततः १०६६ वल्लभराज्य, मास ६, तत १०६६ वर्षे दुर्लभराज्य, वर्ष ११ मास ६, तत १०७८ वर्षे भीमराज्य, वर्ष ४२, तत ११२० वर्षे कर्णराज्यं, वर्ष ३०, ततः ११५० वर्षे जयसिंहदेवराज्यं, वर्ष ४९, तत ११९९ वर्षे कुमारपालदेवराज्यं, वर्ष ३१,तत १२३० अजयपालराज्यं, वर्ष ३, तत १२३३ बालमूलराज्य, वर्ष २, तत १२३५ लघुभीमदेवराज्यं, वर्ष ६३, ततः १२९८ वर्षे त्रिभुवनपालराज्यं, वर्ष ४, एवं चौलुक्यवंशे एकादश ११ भूपाः ३०० वर्षमध्ये,ततश्च १३०२ वर्षे विसलदेवराज्यं,वर्ष १८,तत १३२० वर्षे अर्जुनदेवराज्यं, वर्ष १३, ततः १३३३ सारंगदेवराज्य, वर्ष २०, तत १३५३ वर्षे लघुकर्णराज्यं,वर्ष ७, एवं वाघेलान्वये राज्य वर्ष ५८, ततः अलावदीनादिसुरत्राणराज्य गुर्जरधरित्र्यामित्यादि विस्तारमिच्छता कुमारपालप्रबन्धो विलोकनीय इतिगाथार्थ ॥५२॥ अथ खरतरस्य खरतरबिरुदनिमित्तं विवाद उक्त स एव नासीदिति प्रदर्शनाय गाथायुग्ममाह—

जपिअ नियपरिसाग सिंगिविवाग जिणेसरेण समं। जइऊण य उवलद्धं खरयरबिरुअं तए भणिअं ॥५३॥

तपि (चि)अ मिच्छावाओ वाओ जाओ न कोऽवि लिंगीहिं।

पक्कमनिवउवरोहाणुण्णा य पभावगचरित्ते ॥ ५४ ॥ युग्म ॥

'अपिये'ति दूषणाभ्युपगमे यन्नृपपर्षदि—दुर्लभराजसभायां लिङ्गिविवाद—चैत्यवासिभिः सह विवादे श्रीजिनेश्वरसूरिणा जित्वा—जयमवाप्य खरतरबिरुदमुपलब्ध—प्राप्तमिति 'तए'त्ति त्वया खरतरेण, चकार एवार्थे, त्वयैव, भणितं, न पुनः परमार्थं विचार्यं परत्यर्थः, तद् दूषयति—'त चिअ' इत्यादि,तदेव मिथ्यावाद—अलीकभाषणं, यतो न लिङ्गिभिः कोऽपि विवादो जात ,प्रत्युत दु

र्लभराजनृपोपरोधात्तद्वचसैव तेषां स्थित्यर्थमाज्ञां ददध्वमिति नृपाग्रहेण लिङ्गिनामाज्ञा जातेति प्रभावकचरित्रे श्रीअभयदेवसूरि-
संबन्धे दृश्यते, यदुक्तं–"उपरोधेन ततो यूयममीषां वसनं पुरे। अनुमन्यध्वमेवं च, श्रुत्वा तत्र तदाऽभुः ॥१॥ इत्यादि श्रीप्रभा-
वकचरित्रे, अत्र कालानुभावात् समग्रव्यतिकरमन्तरेण प्रायः प्रसिद्धे विवादारूढे च विचारे सम्यक् प्रत्ययो न स्यात् ततो वक्ष्यमाणप्रयो-
गित्वात्प्रभावकचरित्रगतः श्रीअभयदेवसूरिसंबन्धो यथा–ॐनमः ॥ श्रीजैनधर्म्म(तीर्थ०प्र०)धम्मिल्लोऽभयदेवप्रभुः श्रिये। भू-
यात्सौमनसोऽक्षेदभास्वरः सर्वमौलिभूः ॥१॥ आदत्याष्टाङ्गयोगं यः, स्वाङ्गमुद्धृत्य च प्रभुः। श्रुतस्य च नयाङ्गानां, प्रकाशी ग
श्रिये द्विधा ॥२॥ वदन् बालो यथाऽव्यक्तं, मातापित्रोः प्रमोदकृत्। तद्वृत्तमिह वक्ष्यामि, गुरुहर्षकृते तथा ॥३॥ अस्ति श्रीमालवो
देशः, सद्वृत्तरसशालितः। जम्बूद्वीपाख्यमाकन्दफलं मद्वर्णवृत्तभूः ॥४॥ तत्रास्ति नगरी धारा, मण्डलाग्रोदितस्थितिः। मूलं नृपश्रियो
दुष्टविग्रहद्रोहशालिनी ॥५॥ श्रीभोजराजस्तत्रासीद्भूपालः पालितावनिः। शेषस्येवापरे मूर्त्ती, विश्वोद्धाराय यद्भुजौ ॥६॥ तत्र लक्ष्मी-
पतिर्नाम, व्यवहारी महाधनः। यस्य श्रिया श्रितः श्रीदः, कैलासाद्रिमशिश्रियत ॥७॥ अन्यदा मध्यदेशीयकृष्णब्राह्मणनन्दनौ। प्रज्ञा-
प्रज्ञाबलाक्रान्तवेदविद्याविशारदौ ॥८॥ अधीतपूर्विणौ सर्वान्, विद्यास्थानांश्चतुर्दश। स्मृत्येतिहासपुराणानां, कुलकेतनतां गतौ ॥९॥
श्रीधरः श्रीपतिश्चेति, नामानौ यौवनोद्यमात्। देशान्तरदिदृक्षायै, निर्गतौ तत्र चागतौ ॥१०॥ त्रिभिर्विशेषकं ॥ तौ पवित्रगतः
स्मात्र, लक्ष्मीधरगृहाङ्गणम्। सोऽपि भिक्षां ददौ भक्त्या, तदाकृतिवशीकृतः॥११॥ गेहाभिमुखभित्तौ च, लिख्यते स्मास्य
लेख्यकम्। टङ्कविंशतिलक्षाणां, नित्यं ददृशतुश्च तौ ॥१२॥ सदा दर्शनतः प्रज्ञाबलादायतिसंकुलम्। तत्रास्फूर्त्तिं सम्यक्, सदाऽभ्य-
स्तमिवानयोः ॥ १३ ॥ जनो मत्वार्थतः रूपकारवत् सूपकारवान्। वर्त्तते निश्चरः किंतु, मम किंचिन्न यच्छति ॥१४॥ ब्राह्मणा

अपि गीर्वाणान्मन्मुखादाहुतिप्रदा' । तप्यन्ति फल तु स्यात्कर्म्मकरस्येव मे ॥१५॥ इतीव कुपितो यद्विराद्दि केनापि मम सात्। विदधे तां पुरीमूरीकृतप्रतिकृतक्रिय' ॥१६॥ ॥त्रिभिर्विशेषकं॥ लक्ष्मीपतिर्द्वितीयेऽह्नि,न्यस्तहस्तः कपोलयो । सर्वस्वनाशतः खिन्नो, सम्यग्वाहाद्विशेषतः ॥१७॥ प्राप्तकाले च तौ भिक्षाकृते तस्य गृहाङ्गणे। प्राप्तौ मुष्टं च तद् दृष्ट्वा विषण्णाविदमूचतुः ॥१८॥ यजमान! तवोभिन्नकष्टेनास्मां सुदु'खितौ । किं कुर्वहे क्षुधा किं तु, सर्वदुःखातिशायिनी ॥१९॥ पुनरीदक्षुधाक्रान्त',सत्त्वधुर्विभ्रमान् सुधीः, (किमु प्र०) । की(धी)रा' सत्त्व न मुञ्चन्ति, व्यसनेषु महापदाः ॥२०॥ इत्याकर्ण्य तयोर्वाक्यमाह श्रेष्ठी निशम्यताम्। न मे धनाभवसादिदाहाद्दुःख तु तावकम् ! ॥२१॥ यादृग् लेखकनाशेन, निधर्म्मेण जनेन यत्। कलहं संभवी धर्महानिकृत्क्रियते हि किम्? ॥२२॥ जजल्पतुश्च तावावां,भिक्षाशी न चापरम्। यत्तुवो नोपकर्तुं हि, व्याख्यासो लेखक पुन' ॥२३॥ श्रुत्वाऽतिहृष्ट' श्रेष्ठी, स्वपुरस्तौ नरासने। न्यषण्णयजनः स्वार्थपूरकं ध्रुवमहंति ॥२४॥ तौ चादितः समारभ्य, तिथिवारर्क्षसंगतम्। व्यक्तश्च लरमासाद्दमहितं स्वटिनीवलैः ॥२५॥ वणजात्यभिधामूलद्रव्यसंख्यानशुद्धिमत्। आख्यातं लख्यकं स्वास्थ्याख्यानवद्दिपणावलान् ॥२६॥ पत्रकं लिखित्वा तच्छ्रेष्ठी वभ्यानहो इमौ । मम गोत्रसुरौ कौचिस्मासी मदनुकम्पया ॥२७॥ यद्विशोपक्रमात्रेऽप्य(ण), यदर्ता (यदन्तौ) नात्रविस्मृतम्। दस्तारीसंधुगीपत्रनिरपेक्ष हि लेखकम् ॥ २८ ॥ युग्मं ॥ तत्र मन्मान्य मक्रोज्यवस्त्रादिसम्भ्रमानतः। स्वगेहचिंतकौ तेन,विहितौ हितवेदिना ॥२९॥ जितेन्द्रियो च तौ शान्तौ,दक्षेति व्यपगतद्वनी। शिल्पी महत्पार्श्वेऽभूतां (भू स्तां) श्वेमरसंघभूषणौ ॥३०॥ इतः सपादलक्षेऽस्ति, नाम्ना कूर्चपूरं पुरम्। मषीकूर्चकमाधातुं, यद्दल आत्मानने ॥ ३१ ॥ मल्लभूपालपौत्रोऽस्ति, प्राक्पोत्रीव धराधर । श्रीमान् भुवनपालाख्यो विख्यातः सान्वयाभिध ॥३२॥ तत्रासीत्सप्तमश्रीभिर्वर्द्धमानो गुणोदधि'।

श्रीवर्द्धमान इत्याख्यः, सूरिः संसारपारभूः ॥३३॥ चतुर्भिरधिकाशीतिश्चैत्यानां येन तत्यजे। सिद्धान्ताभ्यासतः सत्यतत्त्वं विज्ञाय
संसृतेः ॥३४॥ अन्यदा विहरन् धारापुर्यां धाराधरोपमः । आगाद्वाग्ब्रह्मधाराभिर्जैनमुज्जीवयन्नयम् ॥३५॥ लक्ष्मीपतिस्तदाकर्ण्य,
श्रद्धालक्ष्मीपतिस्ततः। ययौ प्रद्युम्नशाम्बाभ्यामिव ताभ्यां गुरोर्नतौ ॥३६॥ सर्वाभिगमपूर्वं स, प्रणम्योपाविशत्प्रभुम्। तौ विधा-
य निविष्टौ च,करसंपुटयोजनम् ॥३७॥ वर्यलक्षणवर्यां च, दध्यौ वीक्ष्य तनुं तयोः। गुरुराहानयोर्मूर्त्तिः,सम्यक्त्वपराजित्वरी ॥३८॥
तौ च प्राग्भवसंबन्धाविवानिमिषलोचनौ । वीक्षमाणौ गुरोरास्यं, व्रतयोग्यौ च तैर्मतौ ॥३९॥ देशनामीशुविध्वस्ततामसौ
बोधरङ्गिणौ । लक्ष्मीपत्यनुमत्या च, दीक्षितौ शिक्षितौ तथा ॥४०॥ महाव्रतभरोद्धारधुरीणौ तपसां निधी । अध्यापितौ च सिद्धान्तं,
योगोद्वहनपूर्वकम् ॥४१॥ ज्ञात्वौचित्यं च सूरित्वे, स्थापितौ गुरुभिश्च तौ। शुद्धग्रामो हि सौरभ्यवासं समनुगच्छति ॥४२॥ जिनेश्वर-
स्ततः सूरिरपरो बुद्धिसागरः। नामभ्यां विश्रुतौ पूज्यैर्विहारेऽनुमतौ तदा ॥४३॥ ददे शिक्षेति तैः श्रीमत्पत्तने चैत्यसूरिभिः। विघ्नं
सुविहितानां स्यात्तत्रावस्थानवारणात ॥४४॥ युवाभ्यामपनेतव्यं, शक्त्या बुद्ध्या च तत्किल। यदिदानींतने काले, नास्ति (न स्तः
प्राज्ञौ भवत्समौ) प्राज्ञोऽभवत्समः ॥४५॥ अनुशास्तिं प्रतीच्छाव, इत्युक्त्वा गूर्जरावनौ। विहरन्तौ शनैः श्रीमत्पत्तनं प्रापतुर्मुदा
॥४६॥ सद्गीतार्थपरीवारौ, तत्र भ्रान्तौ गृहे गृहे। विशुद्धोपाश्रयालाभाद्वाचं सस्मरतुर्गुरोः ॥ ४७ ॥ श्रीमान् दुर्ल्लभराजाख्यस्तत्र
चासीद्विशांपतिः। गीष्पतेरप्युपाध्यायो, नीतिविक्रमशिक्षणे (णात्) ॥४८॥ श्रीसोमेश्वरदेवाख्यस्तत्र चासीत्पुरोहितः। तद्गेहे जग्म-
तुर्युग्मरूपौ सूर्यसुताविव ॥४९॥ तद्द्वारे चक्रतुर्वेदोच्चारं संकेतसंयुतौ। तीर्थं सत्यापयन्तौ च, ब्राह्मं पैत्र्यं च दैवतम् ॥५०॥ चतु-
र्वेदीरहस्यानि, सारिणीशुद्धिपूर्वकम्। व्याकुर्वन्तौ स शुश्राव,देवताव्रमसरे ततः॥५१॥ तद्ध्यानध्याननिर्मग्नचेताःस्तम्भितवत्तदा। सम

ऐन्द्रियचैतन्यं, शुस्योरिव स नीतवान् ॥५२॥ ततो मत्या निज च घुमाप्याय वचनामृतैः । आह्वानाय तयोः प्रैषीत्प्रेक्षाप्रेधी द्विजेश्वरः ॥५३॥ तौ च दक्षाञ्चरायातौ, दध्यानम्भोजभूः किम् ? । द्विधाभूयाद आदृत्य,दर्शनं अस्पदर्शनम् ॥५४॥ हित्वा मन्त्रासनादीनि, तद्दत्तान्यासनानि तौ । समुपाविशतां शुभ्रस्वकम्बलनिषद्ययोः ॥५५॥ यदोपनिषदां जैनश्रुततत्त्वगिरां तथा । चाग्मि साम्य प्रकाश्यैता चम्यधत्तां तदाशिषम् ॥५६॥ तथाहि—"अपाणिपादो ह्यमनो ग्रहीता,पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति विश्वं नहि तस्य वेत्ता, शिवो ह्यरूपी स जिनोऽवताद्वः ॥५७॥ ऊचतुश्चानयोः सम्यगवगम्यार्थसंग्रहम् । दधपाऽभ्यधिकं जैनं,तत्रावामाद्रियावहे ॥५८॥ युष्मवस्थितौ ह्युपेत्युक्ते तेनाप्तुम तौ । न कुत्रापि स्थितिश्चैत्यवासिभ्यो लभ्यते यतः ॥५९॥ चन्द्रशालां निजां चन्द्रज्योत्स्नानिर्मलमानसः । स तयोरार्पयत्तत्र,तस्थतुस्तत्परिच्छदौ ॥६०॥ द्वाचत्वारिंशता भिक्षादोषैर्भुक्तमलोत्तुपै । नवकोटिविशुद्ध चायात भैक्ष्यमसुब्रताम् ॥६१॥ मध्याह्ने याज्ञिकस्मार्तदीक्षितानग्निहोत्रिणः । आहूय दर्शितौ तत्र, निस्पृहौ तत्परीक्षया ॥६२॥ यावद्विद्याविनोदोऽत्र,विरिञ्चेरिव पर्षदि । वर्तते तावदाजग्मुर्नियुक्ताश्चैत्यमानुषाः ॥६३॥ ऊचुश्च ते झटित्येव,गम्यतां नगराद् बहिः । अस्मिन्न लभ्यते स्थातुं, चैत्यबाह्यसिताम्बरैः ॥६४॥ पुरोधाः प्राह निर्णेयमिदं भूपसभान्तरे । इतिगत्वा निजेशानमिदमाख्यात प्रापितम् ॥६५॥ इत्याख्यात च तैः सर्वैः, सप्रसादेन भूपतिः । वीक्षितः प्रातरायासीत्तत्र सौवस्तिकोऽपि सः ॥६६॥ व्याजहाराथ देवास्मद्गृहे जैनमुनी उभौ । स्वपक्षे स्थानमप्राप्नुवन्तौ संप्राप्तुस्तत ॥६७॥ मया च गुणगृह्यत्वात्, स्थापितावाश्रये निजे । भद्रपुत्रा अमीभिर्मे, प्रहिताश्चैत्यपक्षिभिः ॥६८॥ अत्रादिशत मे भूप, दण्डः काऽत्र यथाक्रमम् । श्रुत्वेत्याह स्मितं कृत्वा,भूपालः समदर्शनः ॥६९॥ मत्पुरे गुणिनोऽकस्माद्देशान्तरत आगताः । वसन्त केन वार्यन्ते ?, को दोपस्तत्र दृश्यते ? ॥७०॥ अनुयुक्ताश्च ते चैत्य, प्राहुः शृणु मदि

पते ।। पुरा श्रीवनराजाऽभूत्, चापोत्कटवरान्वयः॥७१॥ स बाल्ये वर्द्धितः श्रीमद्देवचन्द्रेण सूरिणा । नागेन्द्रगच्छभूद्धारप्राग्वराहो-
पमास्पृशा ॥७२॥ पञ्चाश्रवाभिधस्थानस्थितचैत्यनिवासिना । पुर म च निवेश्येदमत्र राज्यं दधौ नवम् ॥७३॥ वनराजविहारं च,
तत्रास्थापयत प्रभुः। कृतज्ञत्वादसौ तेषां, गुरूणामर्हणं व्यधात् ॥७४॥ व्यवस्था तत्र चाकारि, सङ्घेन नृपसाक्षिकम् । संप्रदायविभे-
देन, लाघवं न यथा भवेत् ॥७५॥ चैत्यगच्छयतिव्रातसम्मतो वसतान्मुनिः । नगरे मुनिभिर्नात्र, वस्तव्यं तदसम्मतैः ॥७६॥ राज्ञां
व्यवस्था पूर्वेषां, पाल्या पाश्चात्यभूमिपैः। यदादिशसि तत्कार्यं, राजन्नेवं स्थिते सति ॥७७॥ राजा प्राह समाचारं, प्राग्भूपानां वयं
दृढम् । पालयामो गुणवतां, पूजां तूल्लङ्घयेम न ॥७८॥ भवादृशां सदाचारनिष्ठानामाशिषा नृपाः । एधंते युष्मदीयं तद्राज्यं नात्रास्ति
संशयः ॥७९॥ उपरोधेन नो यूयममीषां वसनं पुरे । अनुमन्यध्वमेवं च, श्रुत्वा तेऽत्र तदादधुः ॥८०॥ सौवस्तिकस्ततः प्राह,
स्वामिन्नेषामवस्थितौ । भूमिः काप्याश्रयस्यार्थं, श्रीमुखेन प्रदीयताम् ॥८१॥ तदा समाययौ तत्र, शैवदर्शनिवासवः। ज्ञानदेवाभिधः
क्रूरसमुद्रविरुदार्हतः॥८२॥ अभ्युत्थाय समभ्यर्च्य,निविष्टं निज आसने । राजा व्यजिज्ञपत्किंचिदथ (द्य प्र०) विज्ञप्यते प्रभो ! ॥८३॥
प्राप्ता जैनर्षयस्तेषामर्पयध्वमुपाश्रयम् । इत्याकर्ण्य तपस्वीन्द्रः, प्राह प्रहसिताननः ॥८४॥ गुणिनामर्चनां यूयं, कुरुध्वं विधुतैनसम् ।
सोऽस्माकमुपदेशानां, फलपाकः श्रियां निधिः॥८५॥ शिव एव जिनो बाह्यत्यागात्परपदस्थितः। दर्शनेषु विभेदो हि, चिह्नं मिथ्याम-
तेरिदम् ॥८६॥ निस्तुषव्रीहिहट्टानां, मध्येऽत्र (त्रि प्र.) पुरुषाश्रिता । भूमिः पुरोधसा ग्राह्योपाश्रयाय यथारुचि ॥८७॥ विप्रः
स्वपरपक्षेभ्यो, निषेध्यः सकलो मया । द्विजस्तच्च प्रतिश्रुत्य, तदाश्रयमकारयत् ॥८८॥ ततःप्रभृति संजज्ञे, वसतीनां परम्परा ।
महद्भिः स्थापितं वृद्धिमश्नुते नात्र संशयः ॥८९॥ श्रीबुद्धिसागरः सूरिश्चक्रे व्याकरणं नवम् । सहस्राष्टकमानं तच्छ्रीबुद्धिसागराग-

भिषम् ॥९०॥ अन्यदा विहरन्तश्च, श्रीजिनेश्वरसूरयः। पुनर्दीगपुरीं प्रापु,सपुण्यप्राप्यदर्शनाम् ॥९१॥ श्रेष्ठी महीधरस्तत्र,पुण्यार्य प्रयोभवः। शुक्लैको सघने संस्था, य सर्वत्र विषक्षण ॥९२॥ तस्याभयकुमाराख्यो, धनदेव्याश्च सूरभूत्। पुत्र सहस्रजिह्वोऽपि, यद्गुणोक्तौ नहि प्रभुः ॥९३॥ सपुत्रः सोऽन्यदा सूरिं,प्रणन्तु सुकृती ययौ। संसारासारतामूल, श्रुतो धर्मश्च मक्तितः (तुर्विधः प्र०) ॥९४॥ अथाभयकुमारोऽसौ, वैराग्येण तरङ्गितः। आपप्रच्छे निजं तात, तपःश्रीसंगमोत्सुकः ॥९५॥ अनुमत्या ततस्तस्य, गुरुभि म च दीक्षितः। ग्रहणासेवनारूपशिक्षाद्वितयमग्रहीत् ॥९६॥ स चाचगारसिद्धान्तस्तत्वकाम्यानुमानतः। बभौ महाक्रियानिष्ठ , श्रीसंघांभोजभास्करः॥९७॥ श्रीवर्धमानसूरीणामादेशात्सूरिगो ददौ। श्रीजिनेश्वरसूरिश्च, ततस्तस्य गुणोदये ॥९८॥ श्रीमानभयदेवाख्य , सूरि पूरितविष्टपः। यशोभिर्विहरन प्राप, पल्यपद्रपुरं शनै ॥९९॥ आपु प्रान्ते च संन्यासमवलम्ब्य दिव पुरीम्। अलञ्चक्रुर्व र्धमानसूरयो भूरयः क्षमात् (क्रमात् प्र ) ॥१००॥ समये तत्र दुर्भिक्षोपद्रवैर्देशदोऽस्थ्यत। सिद्धान्तस्त्रुटिमायासीत्कुञ्चिका वृत्तयोऽस्य च ॥१॥ ईषत्स्थितं च यत्सूत्रं, प्रेक्षाक्षुनिपुणैरपि। दुर्बोधवेध्यमन्यार्थं,क्लिष्टं जज्ञे ततश्च तत् ॥२॥ निशीथेऽथ प्रभु धर्मध्यानस्य आसनामरी। नत्वा निस्तन्द्रमाह स्माभयदेवमुनीश्वरम् ॥३॥ श्रीशीलाङ्क पुरा कोट्याचार्यनाम्ना प्रसिद्धिभृ । वृत्तिमेकादशाङ्ग्या स, विदधे धौतकल्मष ॥४॥ अङ्गद्वय विनाऽन्येषां, कालादुच्छेदमाययुः। वृत्तयोऽत्र महानुग्रहायाय कुरुष्व मम् ॥५॥ सूरि प्राह ततो मात !, क्वोऽहमल्पमतिजड । श्रीसुधर्मकृतग्रन्थदर्शनेऽप्यसमर्थधी ॥६॥ अज्ञत्वात्कथितुत्सूत्रे, विशते कल्मषार्जनम्। प्राग्भैरनन्त समारमभिर्निर्दिशत महत् ॥७॥ अनुल्लङ्घ्या च त वाणी,तदादिश करोमि किम् ?। इति कर्तव्यतामूढो,न लेभे किञ्चिदुत्तरम् ॥८॥ देवी प्राह मनीषाज्ञ,(धीश प्र०) सिद्धान्तार्थविचारणे। योग्यता तव मत्वाऽहं,कथयामि विचिन्त्य ॥९॥ यत्र संदिह्यते चेत ,प्रष्ट

श्रीमान् सीमन्धरः स्वामी,तत्र गत्वा धृतिं कुरु ॥१०॥ आरभस्व ततो ह्येतन्माऽत्र संशय्यतां त्वया। स्मृतमात्रा
न्योऽत्र मया मदा। श्रीमान् सीमन्धरः स्वामी,तत्र गत्वा धृतिं कुरु ॥१०॥ आरभस्व ततो ह्येतन्माऽत्र संशय्यतां त्वया। आचामाम्लानि चारब्धग्रन्थसंपूर्णतावधि ॥१२॥
समायास्ये, इहार्थे त्वत्पदोः शपे ॥११॥ श्रुत्वेत्यङ्गीचकाराथ, कार्यं दुष्करमप्यदः। महाश्रुतधरैः सर्वाः,शोधितास्ताश्चिरन्तनैः।
अक्लेशेनैव संपूर्णा,नवाङ्ग्या वृत्तयस्ततः। निरवाह्यत देव्या च,प्रतिज्ञा या पुरा कृता ॥१३॥ प्रभो! मदीयद्रव्येण,विधाप्या
ऊरीचक्रे ततः श्राद्धैः, पुस्तकानां च लेखनम् ॥१४॥ ततः शासनदेवी च, विजने तान् व्यजिज्ञपत्। उत्तरीयां निजज्योतिःक्षतदृष्टिरुचि दधौ ॥१६॥
प्रथमाऽऽवृतिः (प्रतिः प्र०) ॥१५॥ इत्युक्त्वा सा समदधत्सरणोपरि हैमनीम्। चित्रीयितास्ततश्चित्ते,पप्रच्छुस्ते प्रभून्मुदा।
तिरोऽधत्त ततो देवी,यतयो गोचरादथ। आगता ददृशुः सूर्यबिम्बवत्तद्विभूषणम् ॥१७॥ अजानन्तश्च तन्मूल्यं, श्रावकाः
ते चाचख्युरुदन्तं तं, श्राद्धानाह्वाययंस्ततः ॥१८॥ आयातानां ततस्तेषां, गुरवः प्रेक्षयंश्च तत्। अत्र श्रीभीमभू-
पत्तनं ययुः ॥१९॥ अदर्शि तैश्च सा तत्र,स्थितरत्नपरीक्षिणाम्। अज्ञास्तेऽपि च तन्मूल्यमन्त्रं व्यदधुरीदृशम् ॥२०॥ मुमुचुः
पालपुरतो मुच्यतामियम्। तद्दत्तो निष्क्रयो ग्राह्यो, मूल्यं निर्णीयते न तु ॥२१॥ समुदायेन ते सर्वे, पुरो राज्ञस्तदद्भुतम्। प्रति-
किल शक्रेण, प्रणयात्प्राभृतं कृतम् ॥२२॥ तदुदन्ते च विज्ञप्ते, तुष्टः प्रोवाच भूपतिः। तपस्विनां विना मूल्यं, न गृह्णामि कोशा-
ग्रहम् ॥२३॥ ते प्रोचुः श्रीमुखेनास्य,यमादिशत निष्क्रयम्। स एवास्ति प्रमाणं नस्ततः श्रीभीमभूपतिः ॥२४॥ द्रम्मलक्षत्रयं चतुराश्व-
ध्यक्षाद्दापयति स्म सः। पुस्तिका लेखयित्वा च, सूरिभ्यो ददिरेऽथ तैः॥२५॥ पत्तने ताम्रलिप्त्यां चाशापल्यां धवलक्कके। सूरीणां प्रददुर्मुदा ॥२७॥
तुरशीतिः,श्रीमन्तः श्रावकास्तथा ॥२६॥ पुस्तकान्यङ्गवृत्तीनां,वासनाविशदाशयाः। प्रत्येकं लेखयित्वा ते, पुरं धवलकं प्रापुरथ संयमयात्रया।
युग्मं ॥ प्रावर्त्तन्त नवाङ्गानामेवं तत्कृतवृत्तयः। श्रीसुधर्मोपदिष्टेष्टतत्त्वतालककुञ्चिकाः ॥२८॥

॥४७॥ ततश्च मम्मदोत्तालैः, प्रक्रान्ता धार्मिकैस्तदा । यात्रा नवशती तत्र, शकटानां चचाल च ॥४८॥ अग्रे भूत्वा प्रभुर्वृद्धकौ-
लेयकपदानुगः । श्रावकानुगतोऽचालीत्, तृणकण्टकिना पथा ॥४९॥ शनैस्तत्र ययुः सेढीतीरे तत्र तिरोहितौ । वृद्धाश्वानौ तत-
स्तम्भुस्तत्राभिज्ञानतोऽमुतः ॥ ५० ॥ पप्रच्छुरथ गोपालान्, पूज्याः किमपि भोः किमु । जाल्यामत्रास्ति ? तेष्वेकः, प्रोवाच
श्रूयतां प्रभो! ॥५१॥ ग्रामे महीलणाख्यस्य, मुख्यपट्टकिलस्य गोः । कृष्णाऽऽगत्य क्षरेत्क्षीरमत्र सर्वैरपि स्तनैः ॥५२॥ गृहे रिक्तैव
सा गच्छेद्दुह्यमानाऽतिकष्टतः । मनाग् मुञ्चति दुग्धं न, ज्ञायतेऽत्र न कारणम् ॥५३॥ तत्र तैर्दर्शितं क्षीरमुपविश्यास्य सन्निधौ । श्री-
मत्पार्श्वप्रभोः स्तोत्रं, प्रोचे प्राकृतवस्तुकैः ॥५४॥ जयतिहुअणेत्यादिवृत्तैर्द्वात्रिंशता तदा । अवदत् स्तवनं तत्र, नासाग्रन्यस्तदृष्टयः
॥५५॥ बभूव प्रकटं श्रीमत्पार्श्वनाथप्रभोस्ततः । शनैरुद्भिद्य तेजस्वि, बिम्बं तत्प्रतिवस्तुकम् ॥५६॥ प्रणतं सूरिभिः सङ्घसहितैरेतदञ्जसा ।
गतो रोगः समग्रोऽपि, कायोऽभूत्कनकप्रभः ॥५७॥ गन्धाम्भोभिः स संस्नप्य, कर्पूरादिविलेपनैः । विलिप्य चार्चितः सौमनसैः
सौमनसैस्तदा ॥५८॥ चक्रे तस्योपरि च्छाया, सच्छाया प्रतिसीरया । सत्रादचारितात्तत्र, सङ्घो ग्राम्यानभोजयत् ॥५९॥ प्रासादार्थं
ततश्चक्रुः, श्राद्धा द्रव्यस्य मीलनम् । अक्लेशेनामिलल्लक्षं, ग्राम्यैरनुमता च भूः ॥६०॥ श्रीमल्लवादिशिष्यश्च, श्राद्धैरग्रेश्वराभिधः । महि-
क्षाख्यपुरानामः, समाह्वायि धियां निधिः ॥ ६१ ॥ अनुयुक्तः स सन्मान्य, कर्म्मान्तरविचक्षणः । अथ प्रासाद आरेभे सोऽचिरा-
त्पर्यपूर्यत ॥६२॥ कर्माध्यक्षस्य वृत्तौ यद्द्रम्म एको दिनं प्रति । विहितो घृतकर्षश्च, भुक्तौ तन्दुलमानकम् ॥६३॥ विहृत्य भोजनात्तेन,
तेन द्रव्येण कारिता । श्री(स्वा प्र०)देवकुलिका चैत्ये, सा तत्राद्यापि दृश्यते ॥६४॥ शुभे मुहूर्त्ते बिम्बं च, पूज्यास्तत्र न्यवेशयन् ।
तद्रात्रौ धरणाधीशस्तेषामेतदुपादिशत् ॥६५॥ स्तवनादमुतो गोप्यं, मद्वाच्या वस्तुकद्वयम् । कियतां हि विपुण्यानां, प्रत्यक्षीभूयते

ताः—मदनुरोधेनानयोः स्थितये दत्ताज्ञामित्युक्ते राजोपरोधेन चैत्यवासिभिराज्ञा दत्ता, स्थितौ च तौ तत्र वसतिवासेन, ततः कियत्कालानन्तरं पुनरपि धारानगर्यां प्राप्तौ, तत्र महेभ्यमहीधरधनदेव्योः सुतोऽभयकुमारनामा कुमारब्रह्मचारी समुत्पन्नवैराग्यः प्रव्राजितः, सोऽपि बहुश्रुतीभूतो वर्द्धमानसूरिवचसा श्रीजिनेश्वरसूरिणा सूरीकृतो वैराग्यनिधिः, तेन च शासनसुरीप्रेरितेन नवाङ्गवृत्तयो विहिताः, क्रियमाणासु च वृत्तिष्वाचाम्लतपसा रात्रौ जागरणाल्लेखनादिप्रयासाच्च रक्तदोषः शरीरे समुत्पन्नः, तद् दृष्ट्वा च मत्सरिभिःअहो उत्सूत्रफलं, यदस्य सूरेः शरीरे कुष्ठोत्पत्तिर्जातेत्यपभ्राजनामाकलय्य खिन्नः सूरिः शासनसुरीं प्रत्युक्तवान्, तया च श्रीस्तम्भनपार्श्वजिनप्रतिमाप्रकटनाद्युपायेन तदुपशान्त्युपायः प्रदर्शितः, सूरिश्च तत्तथैव कृत्वोपशान्तरक्तदोषः कियत्कालं प्रवचनं प्रभाव्य शुभध्यानपरायणोऽनशनेन स्वर्गमसाधयदिति श्रीअभयदेवसूरिचरित्रपिण्डार्थः, अत्र चरित्रे दुर्लभराजसभायां श्रीजिनेश्वरसूरेर्गमनमपि नाभूत्, तदभावात्कुतस्त्यः तत्र विवादो ?, विवादाभावाच्च खरतरबिरुदं वन्ध्यास्तनन्धयकल्पं संपन्नं, नचैवं संबन्धः श्रीप्रभावकचरित्र एवोपलभ्यते, नान्यत्रेति शङ्कनीयम्, अन्यत्रापि तथैवोपलभ्यमानत्वात्, तथाहि—वच्छा ! गच्छह अणहिल्लपट्टणे संपयं जओ तत्थ । सुविहिअजइप्पवेसं चेइअमुणिणो निवारिंति॥१॥ सत्तीए बुद्धीए सुविहिअसाहूण तत्थ य पवेसो । कायव्वो तुम्ह समो अन्नो न हु अत्थि कोऽवि विऊ ॥२॥ सीसे धरिऊण गुरूणमेयमाणं कमेण ते पत्ता । गुज्जरधरावयंसं अणहिल्लभिहाणयं नगरं ॥३॥ गीअत्थमुणिसमेया भमिआ पइमंदिरं वसहिहेऊ । सा तत्थ नेव पत्ता गुरूण तो समरिअं वयणं ।४॥ तत्थ य दुल्लहराओ राया रायव्व सवकलकलिओ । तत्थ (स्स) पुरोहिअसारो सोमेसरनामओ आसी ॥५॥ तस्स घरे संपत्ता (ते पत्ता) सोऽविहु तणयाण वेअअज्झयणं । कारेमाणो दिट्ठो सिट्ठो सूरिप्पहाणेहि ॥६॥ सुणु वक्खाणं वेअस्स एरिसं सारणीड परिसुद्धं । सोऽवि सुणंतो उप्फुल्ललोअणो विम्हिओ जाओ ॥७॥

रिं पत्ता मरतुर पयउम अनया इह उण्णो। इअ चिंततो विप्पो पयपउम वंदई तसि ॥८॥ सियसामणस्स जिणसासणस्स सार
गव्वर गरउअ। इअ आसीमा दिभा मूरीहि मफ्फसिद्धिकम ॥९॥ 'अपापिपादो यमनो ग्रहीता, पश्यत्यचक्षुः स शृणोत्यकर्णः।
न वत्ति विश्वं नहि तस्य वेत्ता, शिवो ह्यरूपी स जिनोऽवताद्व' ॥१०॥ तो विप्पो त जयइ चिट्ठइ गुरी तुमेहिं सह होइ। तुम्ह पसाया
वेअत्थपारगा हुंति म अ सुआ ॥११॥ आणामाया अम्ह पिआमो कत्थ इत्थ तुह नयर ?। चेइअवासिअमुणिणो न दिंति सुविहिअजणो
पर्मिउ ॥१२॥ नमवि मघन्माग उवरि ठाविउ सुद्धअसणेय। पडिलाभिअ मज्झण्हे परिक्खिआ सव्वमच्चेसु ॥१३॥ तत्तो चेइय
पामिअसुहा नभागया भणंति इमं। नीसरह नयरमज्झा चेइअवज्जा न इह ठंति ॥१४॥ इअ सुणंतं सोउ रण्णो पुरओ पुरोहिओ भणइ।
गयारि मयन्तरइअपार्मीस माइण पुरओ ॥१५॥ जइ कोऽवि गुणट्ठाण इमाण पुरओ विरूवय भणिही। त निअरज्जाउ फुडं
नाममि मक्किमिपमम्सु ॥१६॥ रण्णो आएसेणं वसहिं लहिउ ठिआ चउम्मासिं। तत्तो सुविहिअमुणिणो विहरंति जहिच्छिअं तत्थ
॥१७॥ इत्यादिरुद्रपल्लीयसङ्घतिलकसूरिकृतदर्शनसप्ततिकावृत्तौ, यद्यप्यत्रापि प्रभावकचरित्रेण सह भूयोऽसंगत तथापि स्वरत-
रगच्छ्रद्धतुः स्वरतरविरुद्धस्यात्रासिमि' सह विवादस्तत्र नास्तीत्यर्थे सम्मतमवेति दर्शित, यत्तु गणधरसार्द्धशतकवृहद्वृत्तौ
विवादः स च स्वस्तावलम्बनाय जिनपतिसूरिणा संगतिघटनाय विकल्पित, स एव तच्छिष्येण सुमतिनाम्नाऽत्र लिखितोऽपि
भिन्नमपर्यप चोप्प:,यतः सो भूतोऽपि भूतपूर्वीकृत्य लिखित,भूयांसि च तत्रान्यान्यप्यसंबद्धवाक्यानि,तथाभूतत्वं च प्रभावकच
गिरादावनुकम्पापि नत्र भवनात्, अन्यानामप्यसम्बद्धवाक्यानां मध्ये लेशम्-अस्यनाऽपास्त्वमि पश्चिमजिनेश्वरमूर्तिमिः सह
श्रीवर्द्धमानाचार्या गमने प्राप्ता' इत्याद्युक्त तत्र विचार्यमाण स्वरतराणामपि न सम्मत, यत एव मते श्रीवर्द्धमानाचार्यस्यैव गवर

तरविरुद्धं स्यात्, नान्यस्य, उच्यते च तैः श्रीजिनेश्वरसूरेरित्यसंगतिः, तथा तत्रैव चैत्यवासिमुख्यः सूराचार्य उक्तः, स च द्रोणाचार्यस्य भागिनेयः,स च शिष्यीभूतस्तदानीं नास्तीति महत्यसंगतिः स्वधिया भाव्येति, तेन प्रभावकचरित्रासंगतं यावत्तावत्सर्वमपि जिनपतिसूरिकल्पितमिति। किंच–एकं चित्रं यत् जिनेश्वरसूरिवर्णने काचपिच्यभूतान्यनेकानि वाक्यानि लिखितानि परं खरतरविरुद्धं न लिखितं, किंतु राजा तु न्यायवादी यावन्न किंचिज्जल्पतीत्येतावन्मात्रं भणितं, कुतो राज्ञा खरतरविरुद्धं दत्तं ?, मौने विरुद्धदाननिदानवाक्प्रवृत्तेरेवाभावात्,तस्माद् ज्ञायते गणधरसार्द्धशतकवृत्तिकरणकाले बाहुल्येन खरतरनाम्नः प्रसिद्धिर्नासीत्, किंतु, तदीयमुखाद्विधिसङ्घो विधिसमुदायो विधिधर्मो त्यादि लोकमुखाचौष्ट्रिक इति प्रसिद्धिः, अत एव जिनदत्तशिष्यो जिनचन्द्रस्तच्छिष्यो जिनपतिस्तत्प्रतिबोधितेन भाण्डागारिकनेमिचन्द्रेण षष्टिशतककारेण जिनवल्लभैकगुणानुरागेण जिनवल्लभस्तुतिं कुर्वताऽपि न क्वापि खरतरगच्छो भणितः, किंतु "पय पणमिअ सिरिवीरजिणु गणहरगोअमसामि" इत्यादि खरतरप्रसिद्धजिनवल्लभवर्णने 'नंदउ विहिसमुदाओ' इत्याद्युक्तम्, एवं तत्पक्षीयप्रासादप्रशस्त्यादौ क्वचिद्विधिपक्ष इत्याद्यपि लिखितं दृश्यते, लोकोक्त्या औष्ट्रिकशब्दप्रवृत्तिः स्तनिककृतशतपद्यां–हुं नन्देन्द्रियरुद्रकाल११५९ जनितः पक्षोऽस्ति राकाङ्कितो, वेदाभ्रारुणकाल१२०४ औष्ट्रिकभवो विश्वार्ककाले१२१३ऽञ्चलः। षट्त्र्यर्केषु च१२३६ सार्द्धपौर्णिम इति व्योमेन्द्रियार्के१२५० पुनः, काले त्रिस्तुतिकः कलौ जिनमते जाताः स्वकीयाग्रहात् ॥१॥ इत्यादिपुरातनकाव्यादौ यत्र क्वापि खरतराधिकारस्तत्रौष्ट्रिकनाम्नैवेति, यत्तु खरतरपट्टावल्यां यथा खरतरविरुद्धं लिखितं तथा सदसि वक्तुमप्ययुक्तं, तथाहि–सं० १०२४ वर्षे श्रीमदणहिल्लपत्तने दुर्लभराजसभासमक्षं विवदमानैः सरस्वतीभाण्डागारानीतदशवैकालिकपुस्तकवाचकत्वप्रतिज्ञया लब्धाऽऽत्मलघुत्वैरन्तराले पत्रं चोरयद्भि-

कि नमा रूवत्रुप फळम मसमा इव उण्णो । इअ चिंततो विप्पो पयपउमं वंदई तसि ॥८॥ सिवसामयस्स जिणसामयस्स मार
मच्चर मरळम । इअ आसीसा दिंसा सरीहिं मकजसिद्धिकए ॥९॥ 'अपाणिपादो ममनो ग्रहीता,पश्यत्यचक्षुः म शृणोत्यकर्णः ।
म वत्ति विश्वं नहि तस्य वेत्ता,शिवो ह्यरूपी स जिनोऽवताद् ॥१०॥ तो विप्पो ते जंपइ चिट्ठह मुद्दी तुमेहिं मह होइ। तुम्ह पसाया
वेअरयपारगा हुंति मे अ सुआ ॥११॥ ठाणाभावा अम्हे चिट्ठामो कत्थ इत्थ तुह नयर ? । चेइअवासिअमुणिणो न दिंति सुविहिअजणे
वसिउं ॥१२॥ तेमसि मज्झसाला उवरि ठाविंतु सुद्धअसणेणं । परिखासिअ मज्झणे परिकक्खिआ सयमन्थेसु ॥१३॥ तत्तो चेइय
वासिअमुडा तत्थागया मणंति इमं। नीसरह नयरमज्झा चेइअबज्झा न इह ठंति ॥१४॥ इअ सुणंत मोउं रण्णो पुरओ पुरोहिओ भणइ।
रायाविसयनयेइअवासीर्ण माइए पुरओ ॥१५॥ जइ कोऽवि गुणट्ठाण इमाण पुरओ विरूवय मणिही । त निअरजाउ फुड
नासमि मकिमियमणुइ ॥१६॥ रण्णो आएसेणं ससहिं लहिउ ठिआ चउम्मासिं। तत्तो सुविहिअमुणिणो विहरंति जहिच्छिअं सत्थ
॥१७॥ इत्यादिकप्रपञ्चीयमकलिकल्पितवर्णनसत्प्रतिकाप्रत्तौ, यद्यप्यत्रापि प्रभावकचरित्रेण सह भूपोऽसंगतं तथापि स्वरत
रपिल्कहेतुः खरतरविकल्पितमैत्यवासिभिः सह विवादस्तत्र नास्तीत्यत्रार्थे सम्मतमवेति दर्शितं,यस्तु गणधरसार्द्धशतकवृहद्वृत्तौ
विवादः स च खरतरमतप्रवर्त्तकद्वारेण जिनपतिसूरिणा संगतिघटनाय विकल्पित ,स एव तच्छिष्येण सुमतिनाम्नाऽत्र लिखितोऽकि-
ञ्चित्करस्तथैव बोध्य',यतः सोऽभूतोऽपि भूतपूर्वीकृत्य लिखित',भूयांसि च तत्रान्यान्यप्यसंबद्धवाक्यानि,तत्राभूतत्वं च प्रभावकच-
रित्रावचनानुकम्प्यापि अत्र भणनात्, अन्यानामप्यसंबद्धवाक्यानां सर्वं स्वेनम्—अस्मनाऽप्यस्माभिः पण्डितजिनेश्वरप्रभृतिभिः सह
श्रीवर्द्धमानाचार्या' गच्छन्ते श्राता' इत्याद्युक्त तच्च विचार्यमाणं खरतराणामपि न सम्मत; यत एवं सति श्रीवर्द्धमानाचार्यस्यैव स्वर

मानसूरित एवं पट्टपरम्परोक्ता, अत्र तु श्रीउद्योतनसूरिपट्टधरत्वेन श्रीवर्द्धमानाचार्यो भणितस्तत्र निदानं किं ?, सम्यग् न विद्मः, नहि श्रीउद्योतनसूरिशिष्यः श्रीवर्द्धमानाचार्यः, किंतु चैत्यवासिशिष्यः सूरिः सन्नेव चारित्राद्युपसंपदं गृहीत्वा विजहारेति प्रतिपादनाद्, उपसंपन्नस्तु स्वकार्यसमाप्तौ गन्तुक एव स्यात्, तस्य च दिग्बन्धादिकं न संभवति, तदभावे च न मण्डल्यादिना संभोगः, तदभावाच्च न पट्टधरत्वमिति प्राग् दर्शितमित्याद्यनेकप्रकारं खरतरलिखितं सुदृशां न सम्मतमितिगाथार्थः॥४४॥ अथ लोकदत्तमपि खरतरनाम जिनदत्तेन कथं विकल्पितमित्याह—

**खरयरनामं किरिआउग्गत्तणओत्ति चित्ततुट्ठीए। परिकप्पिअंति तदवच्चकप्पिअं तस्स मूलंपि ॥४५॥**

खरतरनाम क्रियोग्रत्वात्–क्रियाभिरुग्रत्वमस्माकमतः,खरतर इति नाम चित्ततुष्ट्यै–मनःसंतुष्टिनिमित्तं परिकल्पितमपि,अर्थाज्जिनदत्तेन तस्य नाम्नो मूलमपि श्रीजिनेश्वरसूरिलक्षणं तदपत्यकल्पितं–जिनपतिसूरिप्रभृतिभिः कल्पितं, जिनदत्तेन खरतरशब्दस्य क्रियोग्रत्वमित्यर्थः कल्पितः, तदपत्येन च तस्य मूलमपि जिनेश्वराचार्यः कल्पितः, तस्य च निमित्तं चैत्यवासिभिः सह विवाद इत्याद्यपि कल्पितमितिगाथार्थः ॥४५॥ अथोक्तकल्पनायां जनविश्वासः कथं भवतीति विकल्प्य यत्कृतं कुर्वन्ति च तदाह—

**जेणं जिणदत्तमए पुराणपाढाणमण्णहाकरणे। परलोअभयाभीआ अज्जवि दीसंति वेसहरा ॥४६॥**

जिनदत्तमते पुरातनपाठानामन्यथाकरणे–प्राचीनशास्त्रपाठपरावृत्तिकरणे येन कारणेन 'परलोकभयाभीताः' परलोकभयं–नरकादिपातभयं तस्मादभीताः–निश्शूकाः अद्यापि वेषधराः–जिनदत्तापत्यानि साध्वाभासरूपाणि दृश्यन्ते, यतः साम्प्रतमपि तपागच्छीयरत्नशेखरसूरिकृतश्रावकप्रतिक्रमणवृत्तौ श्रीअभयदेवसूरिरित्यत्र खरतरधुरीणश्रीअभयदेवसूरिरिति प्रक्षिप्य लिखितं, तच्च

जेसलमेरौ कूटलिखनं जनप्रसिद्धं जातं, तस्माद् बहु ख्यातं यथा स्यात्तथा खरतराः क्षीणस्वराः-मान्द्यरोगग्रस्ता इव उच्चैःस्वरेण वक्तुमशक्ताः संजाताः, तेन कारणेन कूटलिखनहेतुरिति गाथार्थः ॥४८॥ अथ चैत्यवासिविवादे दूषणान्तरमाह—

**किंच विवाओ चेइअवासीहिमसंभवीऽवि आयारे। तत्थवि खरयरबिरुअं जयवाए सव्वहा नेव ॥४९॥**

किंचेति दूषणाभ्युच्चये, चैत्यवासिभिः सह साधूनां विवादोऽसंभवी, अपिरेवार्थे, असंभव्येव, क ?—आचारे—आचारविषयो वि-वादो न संभवति, चैत्यवासिनां साधूनां चाचारः सर्वजनप्रतीत एव, सिद्धे वस्तुनि साधनायोगाद्, दशवैकालिकादिपुस्तका-नयनमयुक्तमेव, आचारे इत्युक्तौ कदाचित्पाण्डित्यपरीक्षानिमित्तं तार्किकवादो युक्तोऽपीति ज्ञापितं, तत्रापि—जयवादे खरतरबिरुदं सर्वथा नैव—न संभवत्येव, खरतरनाम्नोऽशुभार्थवाचकत्वादितिगाथार्थः ॥४९॥ अथाशुभार्थवाचकत्वेऽपि दूषणमाह—

**सद्दाणं दुब्भिक्खे खरयरबिरुअंपि अद्धजरईअं। खरसद्दो लोअमुहा तरसद्दो सद्दसत्थाओ ॥५०॥**

शब्दानां दुर्भिक्षे—शुभाशुभार्थवाचकानामन्यशब्दानामप्राप्तौ सत्यां खरतरबिरुदमर्द्धजरतीयम्—अर्द्धजरतीयन्यायमापन्नं, अर्द्ध-जरतीयन्यायस्त्वेवं—खरशब्दः सत्यवाचित्वेनाभ्युपगमे लोकमुखादेव खरशब्दस्य प्रवृत्तिः, तरशब्दः अतिशयार्थे प्रत्ययलक्षणः, स च शब्दशास्त्रादेवेत्यर्द्धजरतीयन्यायो, वैपरीत्यप्रवृत्तिमद्भ्यामुभाभ्यामेव खरतरशब्दस्य व्युत्पन्नत्वाद्, अथोभावपि शब्दौ व्या-करणनिष्पन्नावेव गृह्येते तर्ह्यतिशयेन खरः खरतरः इति व्युत्पत्त्या महान् गर्दभ उग्रतरो वा भण्यते, स च लोकानां मुखादसंभ-वीति, लोकमुखाच्च बिरुदसंभवे तरप्रत्ययप्रयोगोऽसंभवीति विचारणया स्वर्णगिर्यादौ क्रोधाविष्टवाक्श्रावणे खरतरोऽयमिति भणनं प्रसिद्धं तदेवात्र संभवीति गाथार्थः ॥५०॥ अथ जिनेश्वरसूरेः खरतरबिरुदं न जातं तत्र युक्तिमाह—

उमन्नयरी मात्मनंवाम्पुसगमेवेतिगाथाथ ॥४६॥ अथ प्राचीनपाठपराशपिकरणे मयराहिता अत' किं कठमित्याह—

तण महावीरचरिअप्पमस्थिपमुहेसु निम्मलापमुहं। चइऊण खरयरित्तिअ लिहिअं लेहाविअं च तहिं ॥४७॥

यत भवनन जिनदत्तापत्यानि परलोकमपामीतानि तेन कारणेन महावीरचरित्रप्रशस्तिप्रमुखेषु—गुणचन्द्रगणिकृतश्रीमहावीरचरित्रप्रशस्त्यादिषु निर्म्मलाप्रमुखं—निम्मलाइत्यादिशब्दप्रमुखं त्यक्त्वा—पराकृत्य खरयरीति च लिखितं लेखितं च तत्र—तत्स्थाने, निर्मलादिशब्दस्थाने से खरयरीतिकृतं कारितं चेत्यर्थः ॥ तत्कथमितिचेच्छृणु—मवजलहिमायसंभंतभविअसंताणतारणसमत्थो। बोहित्थो व महत्थो सिरिवीरजिणमरा परमो ॥१॥ गुरुसाराउ थवलाउ निम्मला साहुसंतई जाया। हिमवंताओ गंगुव्व निग्गया सयलजणपुज्जा ॥२॥ इतिश्रीमहावीरचरित्रप्रशस्तौ, अत्राय विचार—खरतराणामुत्पत्तिः १२०४ वर्षे सर्वेषामपि सम्मता, तच गणनराणामनिष्ट,मतस्तदपाकरणाय 'निम्मला साहुसंतइ जाया' इत्यत्र 'खरयरी साहुसंतई'ति लिखितम्, एतच्चरित्रं च 'नंदसिहिरुद्दसंखे वोक्कंते विक्कमाउ कालम्मि। जिट्ठस्स सुद्धतइआतिहिंमि सोमे समत्तमिणं ॥१॥' इतिवचनात् सं० ११३९ वर्षे निष्पन्नम्, एवं च मति यथ न जिनदत्तमूलस्य किंतु जीर्णा इति मुधाभ्यात्यर्थं विपरीतलिखनेनात्मा कदर्थित ,तत्सिद्धिरपि न संजाता, अतः 'कनम शीलविध्वंसो, न चान्नं श्रम गत' इतिन्यायः संपन्न इतिगाथार्थः ॥ ४७॥ अथ कूटलिखनात् सांप्रतं यज्जात तदाह—

पुत्थयरनिण्णयओ जेसलमेरेवि कूडलिहणाओ। खीणसरा संजाया खरयरगा तेण बहुवारं ॥४८॥

पुस्तकरत्नानिर्णयात्–स्वकल्पितपुस्तकादन्यस्मात्पुस्तकभाण्डागारादिभ्यः समानीतपुस्तकान् यो निर्णयस्तस्मात्पराजयाद्भीतः श्रीगन्नगरगृहीतभाद्रमतिक्रमणप्रगुणनिर्णयपि पूर्वाकारूपरस्थमाधर्वीयग्रामास्तु मिष्कोल्लीयवचनलिखनादेश तत्र भाग् प्रदर्शितं

एतच्च निजगुरोर्जिनेश्वरसूरेरिति कुतो निःस्पृहतावार्ताऽपि?, न च विस्मृतमिति संभावनीयं, चन्द्रकुलस्यापि तथात्वापत्तेः, तस्मात् य-
दि निजगुरो राजसभायां जयहेतुकं खरतरविरुदमभविष्यत्तर्हि सविस्तरं नवाङ्गीवृत्तिपञ्चाशकवृत्त्यष्टकवृत्त्यादौ श्रीअभयदेवसूरिशिष्याः
श्रीवर्द्धमानसूरिप्रभृतयः प्रशिष्याश्च तदनुजाताः श्रीपद्मप्रभसूर्यादयोऽप्यवर्णयिष्यन्, तैश्च लेशतोऽपि न लिखितं तथाहि–
चंदकुले चंदजसो दुक्करतवचरणसोसिअसरीरो। अप्पडिबद्धविहारो सूरुव्व विणिग्गयपयावो ॥१॥ एणपरिग्गहरहिओ विविहमारगसं-
गहो निच्चं। सयलक्खविजयपयडोऽवि एक्कसंसारभयभीओ॥२॥ इंदिअतुरिअतुरगमवसिअरणखुसारही महासत्तो। धम्मारामुल्लूरणम-
णमक्कडरुद्धवावाचारो ॥३॥ खमदमसंजमगुणरोहणो विजिअदुज्जयाणंगो। आसि सिरिवद्धमाणो सूरी सव्वत्थ सुपसिद्धो ॥४॥ सूरिजि-
णेसरसिरिबुद्धिसायरा सायरुव्व गंभीरा। सुरगुरुसुक्कसरित्था सहोअरा तस्स दो सीसा ॥५॥ वायरणछंदनिग्घंटुकव्वणाडयपमाणसमएसु।
अणिवारिअप्पयारा जाण मई सयलसत्थेसु ॥६॥ ताण विणेओ सिरिअभयदेवसूरित्तिनाम विक्खाओ। विजयक्खो पच्चक्खो कय-
विकयसंगहो धम्मे ॥७॥ जिणमयभवणब्भंतरगूढपयत्थाण पयडणे जस्स। दीवयसिहिव्व विमला सूई बुद्धी पवित्थरिआ ॥८॥ ढाणा-
इनवंगाणं पंचासयपमुहपगरणाणं च। विवरणकरणेण कओ उवयारो जेण संघस्स ॥९॥ इक्को व दो व तिण्णि व कहवि तु लग्गेण
जइगुणा हुंति। कलिकाले जस्स पुणो वुच्छं सव्वेहिवि गुणेहिं ॥१०॥ सीसेहिं तस्स रइअं चरिअमिणं वद्धमाणसूरीहिं। होउ पढंतसुणं-
ताण कारणं मोक्खसुक्खस्स ॥११॥ इति नवाङ्गवृत्तिकारकश्रीअभयदेवसूरिशिष्यश्रीवर्द्धमानसूरिकृतप्राकृतगाथात्मकश्रीऋषभदेव-
चरित्रप्रशस्तौ, एतत्पुस्तकं ताडीयं पत्तननगरे वृद्धशालिकतपागणभाण्डागारेऽस्तीति बोध्यं, तथा-पूर्वं चन्द्रकुले बभूव विपुले श्रीवर्द्धमां-

१ एतस्या वृत्तेः कर्त्ता यद्यपि श्रीजिनेश्वराचार्यः तथापि संशोधिता सा श्रीमद्भिरभयदेवसूरिभिः इति तत्र वर्णनलिखनप्रसङ्गः,

एतच्च निजगुरोर्जिनेश्वरसूरेरिति कुतो निःस्पृहतावार्ताऽपि?[1],न च विस्मृतमिति संभावनीयं,चन्द्रकुलस्यापि तथात्वापत्तेः, तस्मात् यदि निजगुरो राजसभायां जयहेतुकं खरतरबिरुदमभविष्यत्तर्हि सविस्तर नवाङ्गीवृत्तिपञ्चाशकवृत्त्यष्टकवृत्त्यादौ श्रीअभयदेवसूरिशिष्याः श्रीवर्द्धमानसूरिप्रभृतयः प्रशिष्याश्च तदनुजाताः श्रीपद्मप्रभसूर्यादयोऽप्यवर्णयिष्यन्, तैश्च लेशतोऽपि न लिखितं तथाहि—चंदकुले चंदजसो दुक्करतवचरणसोसिअसरीरो। अप्पडिबद्धविहारो सूरुव्व विणिग्गयपयावो ॥१॥ एणपरिग्गहरहिओ विविहमारगसंगहो निच्चं। सयलक्खविजयपयडोऽवि एक्कसंसारभयभीओ॥२॥इंदिअतुरिअतुरगमवसिअरणसुसारही महासत्तो। धम्मारामुल्लूरणमणमक्कडरुद्धवावाचारो ॥३॥ खमदमसंजमगुणरोहणो विजिअदुज्जयाणंगो। आसि सिरिवद्धमाणो सरी सवत्थ सुपसिद्धो ॥४॥ सूरिजिणेसरसिरिबुद्धिसायरा सायरुव्व गंभीरा। सुरगुरुसुक्कसरित्था सहोअरा तस्स दो सीसा ॥५॥ वायरणछंदनिग्घंटुकव्वणाडयपमाणसमएसु। अणिवारिअप्पयारा जाण मई सयलसत्थेसु ॥६॥ ताण विणेओ सिरिअभयदेवसूरित्तिनाम विक्खाओ। विजयक्खो पच्चक्खो कयविक्कयसंगहो धम्मे ॥७॥ जिणमयभवणब्भंतरगूढपयत्थाण पयडणे जस्स। दीवयमिहिव्व विमला सूई बुद्धी पवित्थरिआ ॥८॥ ठाणाइनवंगाणं पंचासयपमुहपगरणाणं च। विवरणकरणेण कओ उवयारो जेण संघस्स ॥९॥ इक्को व दो व तिण्णि व कहवि तु लग्गेण जइगुणा हुंति। कलिकाले जस्स पुणो वुच्छं सवेहिवि गुणेहि ॥१०॥ सीसेहि तस्स रइअं चरिअमिणं वद्धमाणसूरीहि। होउ पढंतसुणंताण कारणं मोक्खसुक्खस्स ॥११॥ इति नवाङ्गवृत्तिकारकश्रीअभयदेवसूरिशिष्यश्रीवर्द्धमानसूरिकृतप्राकृतगाथात्मकश्रीऋषभदेवचरित्रप्रशस्तौ,एतत्पुस्तकं ताडीयं पत्तननगरे वृद्धशालिकतपागणभाण्डागारेऽस्तीति बोध्य,तथा-पूर्वं चन्द्रकुले बभूव विपुले श्रीवर्द्धमा-

---

१ एतस्या वृत्तेः कर्त्ता यद्यपि श्रीजिनेश्वराचार्यः तथापि संशोधिता सा श्रीमद्भिरभयदेवसूरिभिः इति तत्र वर्णनालिखनप्रसङ्गः,

नयमुः,श्रीमद्गल्माजन सुमनमां सम्य सुखासदम्। शिष्यस्तस्य जिनेश्वर समजनि स्याद्वादिनामग्रणी ,प बन्धुस्तस्य च बुद्धिसागर इति त्रैविद्यपारङ्गम ॥१॥ सूरि श्रीजिनचन्द्रोऽभयदेवगुरुर्नवाङ्गवृत्तिकृत्। श्रीजिनभद्रमुनीन्द्रो जिनेश्वरविमोक्षयः शिष्या ॥२॥ चक्रे श्रीजिनचन्द्रसूरिगुरुभिर्धुर्य प्रमथ्याभिधस्तन प्र यचतुष्टयीस्फुरमति श्रीदेवभद्रप्रभु। देवानन्दमुनीश्वरोऽभवदवमारित्रिणामग्रणीः, मंमागमृषिसागमिजननाक्रमपु क्षमं मस्ता ॥३॥ य मुखावामवास्तव्या,व्यवस्यति सरस्वती। गन्तुं नान्यत्र स न्याय्य, श्रीमान्देव प्रभप्रभु ॥४॥ मुग्धतुलाम कुरयति वस्तुप्रतिबिम्बविशदमतिगुणम्। श्रीविबुधप्रभमथिष न विधत्ते वैपरीत्यं तु ॥५॥ तत्पदपद्मभ्रमरश्चक्रे पद्मप्रभमनिमवर्। विक्रमतोऽतिक्रान्ते वेदग्रहरवि २९४मिते समय॥६॥इति श्रीपद्मप्रभसूरिविरचितश्रीमुनिसुव्रतचरित्रप्रशस्तौ, तथा "स्वस्तिश्रीनृपविक्रमसंवत् २९३वर्षे वैशाखशुक्ल१५ शनावद्य श्रीअर्बुदाचलमहातीर्थे अणहिलपुरवास्तव्यप्राग्वाटज्ञातीय ठ०श्री चण्डप्रसादमहं०सोमान्वय ठ०आसराजसुतमहं श्रीमल्लदेव महं श्रीवस्तुपालयोरनुज महं-श्रीतेजपालेन कारितश्रीलूणसीहवसहिकायां श्री-नेमिनाथचैत्य इत्यादि पाठ ष०पत्तमपदप्रमुखकुटुम्बसमुदायेन श्रीशान्तिनाथबिंबं कारितं प्रतिष्ठितं च नवाङ्गीवृत्तिकारक श्रीअभयदेव-सूरिसंतानीयै श्रीपद्मप्रभसूरिभि"रिति श्रीअर्बुदाचलतीर्थे श्रीनेमिनाथचैत्यपश्चिमद्वार चतुष्किकादेवकुलिकाप्रशस्ति',एवमन्यत्रापीयमे-र रीतिर्ज्योत्स्यति,अपूर्व न तागमप्रमुखा जिन इमा इव सूरन्ति,यदुक्त "कु नन्दे न्द्रियरुद्रकाल ११५९ जनित पक्षोऽस्ति राकाङ्कितो, वदा-प्राग्म १२०४खरत औष्ट्रिकमता विभास्त्यालज्वला: १२१३। पट्स्यर्के १२३६गु च सार्धपौर्णिम इति व्योमेन्द्रियार्के १२५० पुन , ध्याने त्रिस्तुतिक पन्नौ जिनमत जाता स्वकीयाग्रहात् ॥१॥ एतत्काव्यं मन्त्रिवस्तुपालतेजपालकारक निष्पन्नप्रन्थेष्वपि सम्मतितया मपिनमिस्पशौष्टिरुगच्छ न स्तगो साध्य,परं गगानीमुक्तनाम्नैव प्रसिद्धिरिति,तथा "धर्मरत्नादिग्रन्थनेषतुभिरधिकृतैः,माधीचिन

मतो गच्छः,ख्यातः खरतराख्यया ॥१॥ इतिश्रीजिनसुन्दरसूरिकृते दीपालिकाकल्पे,एवं तपाप्रभृतीनां पट्टावलीष्वपि सं० १२०४ वर्षे खरतरमतोत्पत्तिरिति लिखितं,किंच—नवाङ्गीवृत्तिकारकसंताने ये श्रीधर्मघोषसूरिप्रभृतयः उक्तास्तेषां नामापि खरतरपट्टावल्यां नास्ति तदपि सूक्ष्मधिया पर्यालोच्यमितिगाथार्थः ॥५२॥ अथ खरतराभिमतस्यापि सम्मतिमाह—

**जिणवल्लहोऽवि कत्थवि खरयरबिरुअं जिणेसरा जायं । न वइंसु अहव तक्कुल जाओऽहं किंतु अण्णगुरुं ॥५३॥**

जिनवल्लभोऽपि, अपिशब्दादन्ये तु दूरे, जिनवल्लभोऽपि खरतरविरुदं जिनेश्वराज्जातमिति नावादीत् ,अथवा तत्कुलजातोऽहं—तदन्वयजातोऽहमित्यपि नावादीत्, किं त्वन्यगुरुम्—अन्यत् तत्कुलादन्यद्यत्कुलं तदुद्भवो गुरुर्यस्य सोऽन्यगुरुरेतादृशोऽहमस्मीति ज्ञापितमिति प्रसङ्गतोऽभिहितं बोध्यं, खरतरस्यानिष्टत्वादित्यक्षरार्थः, भावार्थस्त्वयं—खरतरास्तु श्रीअभयदेवसूरिशिष्यः जिनवल्लभः अत एव तत्पट्टधर इति ब्रुवन्ति, जिनवल्लभस्तु नेति ब्रूते,तथाहि—प्रथमं तावज्जिनवल्लभवचमा श्रीअभयवम्वरूपं यथा—न चकोरदत्तमलमदोषमतमोनिरस्तसद्वृत्तम् । नालिककृतावकाशोदयमपर चान्द्रमस्ति कुलम् ॥१॥ तस्मिन्न बुधोऽभवदसङ्गविहारवर्ती,सूरिर्जिनेश्वर इति प्रथितोदयश्रीः । श्रीवर्द्धमानगुरुदेवमतानुसारी हारीभवन् हृदि मदा गिरिदेवतायाः ॥२॥ अनेककविनायकस्तुतपदः मदाश्रयः, स्फुरद्वृषपरिग्रहस्तुहिनधाम रम्याकृतिः । प्रभूतपतिरद्भुतश्रुतविभूतिरस्तस्मरो, महेश्वर इवोदभूदभयदेवसूरिस्ततः ॥ ३ ॥ श्रीवीरान्वयवृद्धये गणभृता नानार्थरत्नैर्दधे,यत्स्थानादिनवाङ्गशेवधिगणः कैरप्यनुद्घाटितः । तद्वंश्यः स्वगुरूपदेशविशदप्रज्ञः करिष्यच्छुभां, तट्टीकामुदजीघटत् तमखिलं श्रीसंघतोषाय यः ॥४॥ मत्तर्कन्यायचर्चार्चितचतुरगिरः श्रीप्रसन्नेन्दुसूरिः सूरिः श्रीवर्द्धमानो यतिपतिहरिभद्रो मुनीड्देवभद्रः । इत्याद्याः सर्वविद्यार्णवकलशभुवः संचरिष्णूरुकीर्त्तेः,स्तम्भायन्तेऽधुनाऽपि श्रुतचरणरमाग-

जिनो यस्य शिष्या ॥५॥" इत्यादि जिनवल्लभकृतायां जिनवल्लभीयप्रशस्त्यपरनाम्न्यामष्टसप्ततिकायां, अत्र यदि जिनेश्वर सूरेः खरतरबिरुदमभविष्यत् तर्हि जिनवल्लभोऽपि चान्द्रकुलमिव बिरुदमप्यवर्णयिष्यत्, तच्च न वर्णितम्, अतस्तद्विषये जिनवल्लभोऽपि साक्षिक इत्यर्थः, तथा तच्छिष्यो नाहमभूवमित्यवादीत्, श्रीअभयदेवसूरिजिनवल्लभयोर्गुरुशिष्यसंबन्धो नासीदित्यर्थः, नहि श्रीअभयदेवसूरिणा जिनवल्लभोऽस्मदीयः शिष्य इत्युक्तम्, एतच्च खरतरस्यापि सम्मतं, यतो गणधरसार्द्धशतकवृत्तौ "चैत्यवासिशिष्योऽय"मित्याद्युक्तं, न पुनः प्रव्रज्यादानादिना वाऽऽदिनाऽस्माकमस्य इत्यपि भणितं, तथात्वे चैत्यवासिशिष्यत्वलम्यपदस्यासंभवात्, न वा जिनवल्लभेनाप्यहं श्रीअभयदेवसूरिशिष्य इत्युक्तं, प्रत्युत चैत्यवासिशिष्यत्वमेवोक्तं, यदुक्तं—"लोकाग्र्यकूर्चपुरगच्छमहाधनोत्थमुक्ताफलोज्ज्वलजिनेश्वरसूरिशिष्यः । प्राप्तः प्रथां भुवि गणिर्जिनवल्लभोऽत्र, तस्योपसंपदमवाप्य ततः श्रुतं च ॥१॥" इत्यष्टसप्ततिकायाम्, एष च श्रीअभयदेवसूरौ दिवं गते त्रिंशता चतुस्त्रिंशता वा वर्षैर्गतैः ११६४ वर्षे कृत्वा चित्रकूटे श्रीमहावीरप्रासाद् द्वारकच्छ शिलामुत्कीर्य लिखिता, अत्र विचारणीयं—श्रीअभयदेवसूरित्रिंशद्वर्षातिक्रमे चतुस्त्रिंशद्वर्षातिक्रमे वा यदि निजगुरुतया श्रीअभयदेवसूरिं नोक्तवान् तर्हि कदा वक्ष्यति ? कथं वा तत्पट्टधरो भवितेति ?, किंच—चैत्यवासं परित्यज्यापि चैत्यवासिनमेव निजगुरुतया श्रीजिनेश्वरसूरिं महता प्रबन्धेन वर्णितवान्, न पुनरन्यमपि कञ्चन श्रीवर्द्धमानसूरिप्रभृतिकमपि, एवं प्रश्नैकषष्टिशतकेऽपि, तथाहि—"पाकं धातुरवाप्ति कः क भवतो मीरोर्मनः प्रीतये, मात्लङ्कारविदग्धया वद कया रज्यन्ति विद्वज्जना । पाणौ किं मुरजिद्बिभर्ति सवि सं ध्यायन्ति के वा मता, के वा मद्गुरवोऽत्र चारुचरणाः श्रीसुगुरु विगुरु ॥?॥ एतेषां प्रश्नानामुत्तरं श्रीमदभयदेवा

१ एतत् प्रश्नोत्तरैकषष्टिशतक श्लोक१ नाकरे मकविके मतिले

चार्याः इत्येवंरूपेण श्रीअभयदेवसूरयः सद्गुरुत्वेन सर्वसाधारणवचसा वर्णिताः, न पुनर्निजगुरुत्वेनेति, चैत्यवासिनं श्रीजिनेश्वरा-
चार्यं च निजगुरुतयैव वर्णितवान्, तथाहि—कः स्यादम्बुधिवारिवायमचिते क्व दीपिनं हंत्ययं, लोकः प्राह हय प्रयोगनिपुणैः क्वः
शब्दधातुः स्मृतः । सूते पालयिताऽत्र दुर्धरतरः कः क्षुभ्यतेऽम्भोनिधेः, ब्रूहि त्वं जिनवल्लभस्तुतिपदं कीदृग्विधाः के सताम्? ॥१॥
अत्रोत्तर सद्गुरवो जिनेश्वरसूरय इत्येवोक्तवान् जिनवल्लभ इति, गुरुशिष्यसंबन्धः श्रीजिनेश्वरसूरिजिनवल्लभयोरेव, न पुनरभयदेव-
सूरिजिनवल्लभयोरपीति जिनवल्लभवचसैवावबोध्यः, ननु 'तस्योपसंपदमवाप्य ततः श्रुतं चे'ति चतुर्थचरणेन जिनवल्लभेनाप्यु-
पसंपदमधिकृत्य संबन्धः सूचित इति चेत् सत्यं, तथाविधसंबन्धस्याकिंचित्करत्वात्, तथाहि—उपसंपन्नत्वमपि श्रुतमधिकृत्य जिन-
वल्लभेनैवोक्तं, तच्च विचार्यमाणं प्रव्रज्यापूर्वकयोगाद्यनुष्ठानमन्तरेण सिद्धान्तवाचनामधिकृत्यासंभव्येवेतिकृत्वा पारिशेष्यात्कर्मग्र-
न्थादिप्रकरणव्याकरणादिकमधिकृत्य संभवति, न च चैत्यवासिना मताऽपि योगानुष्ठानं कृतं भविष्यतीति शङ्कनीयं, गणधरसार्द्ध-
शतकोक्तवर्णनविशिष्टस्य योगानुष्ठानासंभवात्, तेन तथाविधं किंचिच्छ्रुतमधिकृत्योपसंपन्नत्वे संभवत्यपि तत्रेदं विचारणीयम्,
उपसंपन्नोऽपि द्विधा—सांभोगिको विसंभोगिकश्च, तत्र सांभोगिको दिग्बन्धादिना समानः, स चैकस्मिन्नेव गणे विद्यमानोऽपि
प्रव्राजकाचार्यापेक्षया आचार्यान्तराश्रयी, तस्य च मण्डल्यादिव्यवहारः स्वशिष्यादिवदेव, विसंभोगिकस्तु गच्छान्तरीयो दिग्ब-
न्धादिना विसदृशः, तस्य च शिष्यत्वव्यवहारो विवक्षितकार्यमात्रहेतुकः श्रावकस्येवावगन्तव्यः, श्रावकस्याप्यागमे शिष्यत्वेन
प्रतिपादनाद्, यदागमः—"चंपाए पालिए नाम, सावए आसि वाणिए । महावीरस्स भगवओ सीसो सो उ महप्पओ ॥१॥" त्ति
श्रीउत्तराध्ययनसूत्रे (७५०*) आस्तामुपसंपद्, किंचिच्छिक्षामात्रेणाप्येकपाक्षिकाभ्युपगमेनापि गुरुशिष्यत्वव्यवहारः प्रवचन-

प्रतीता, यथा श्रीमहावीरमङ्खलिपुत्रयो, नहि मङ्खलिपुत्रः श्रीमहावीरेण प्रव्राजितो न चोपसंपन्नः, किन्तु कश्चित्तथाविध-प्रश्नोत्तरदानमात्रेण शिक्षित, प्रव्रज्या च त्वच्छिष्योऽस्मीति मङ्खलिपुत्रवचोमात्राभ्युपगमेनैवैकपाक्षिकाभ्युपगम', एवं श्रीअभय-देवसूरिजिनवल्लभयोरपि कथञ्चिदसंभावितोऽपि संभवश्चाप्यकिञ्चित्कर एव, तेन जिनवल्लभेनात्मनो भिन्नगणसंबन्धित्वमेव ज्ञा-पित तदुक्तमेव, आधुनिकास्तु पट्टपरम्परादिसंबन्धं च पूर्वेनाम्ना दत्तायत्ता एवावगन्तव्या इतिगाथार्थ ॥५३॥ अथ खरत-रनामोत्पत्तिमुपसंहरन्नाह—

तेण जइ नामचुग जिणदत्ता अइक्कमेण सजाय। तह जिणदत्तकवाले तइअ तिलय च विहिलिहिअ ॥५४॥

येन कारणेन खरतरव्यतिरिक्ता' जिनवल्लभ यावत्सर्वेऽपि जिनेश्वरात् खरतरविरुद्ं न वदन्ति तेन कारणेन यथा नामद्विक—चामु-ण्डिकौष्ट्रिकलक्षणमभिधानद्वयं जिनदत्ताद्यपाक्रमेण—क्रमस्यानतिक्रमेण प्रथम चामुण्डिकं पश्चादौष्ट्रिकमिति, तथा जिनदत्तक-पाले—जिनदत्तललाटे तृतीयमपि खरतरसंज्ञापि तिलकमिव तिलकं विधिलिखित—विधात्रा लिपीकृत जिनदत्तादेव प्राग़ुक्तयुक्त्या जात नान्यस्मादपीति कथापि पराकर्तुमशक्यम्, अत एव प्रतिक्रमणप्रान्ते जिनदत्तस्यैव कायोत्सर्गो विधीयते, तस्यैव तन्मताकर्षक-त्वादिति लिङ्गमपि बोध्यमितिगाथार्थ' ॥५४॥ अथ सिंहावलोकनन्यायेन प्रसङ्गागतविचारमाह—

जिणवल्लहो अ कत्थवि इअगाहाऽवरद्धमागंमि। नाइ तक्कुलजाओ तपि अ एअ विआरिज्ज ॥५५॥

'जिणवल्लहो अ कत्थवी'ति प्राग़ुक्तगाथायामपराद्धभाग उत्तर्द्धे नाऽहं तत्कुलजात इति जिनवल्लभेन यदुक्तं तदप्येवं—वक्ष्यमाणप्र-कारेण विचार्यं—सम्यग्धिया पर्यालोच्यमितिगाथार्थ ॥५५॥ अथ विचारमेवाह—

इगारससयचउसट्ठीए जिणवल्लहेण भणिअमिणं । तस्सऽणुरूवविआरे सड्ढसयं आलजालंव ॥५६॥

एकादशतचतुःषष्ट्या ११६४ वर्षैर्गतैः जिनवल्लभेनेदं प्रागुक्तमष्टसप्ततिगतं श्रीअभयदेवसूरिसंबन्धि स्वरूपं भणितं, सं० ११६४ अष्टसप्ततिका निर्मापिता, तत्र च प्रागुक्तं भणितमित्यर्थः; तस्य—तदुक्तस्यानुरूपः—अनुकूलो यो विचारस्तत्र तदनुसारेण विचारे क्रियमाणे सार्द्धशतकं—गणधरसार्द्धशतकमुपलक्षणाच्च तद्वृत्तिरालजालमिव—मुधाजल्पनमिव भवतीतिगाथार्थः ॥५६॥

अथ जिनवल्लभोक्तानुसारेण विचारमाह—

सूरिंमि दिवं पत्ते तीसं वासाइं जाव चउसूरी । तेसु सिरिवद्धमाणो पट्टहरो खरयरेणुत्तो ॥५७॥

सूरौ—श्रीअभयदेवाचार्ये दिवं गते सति त्रिशद्वर्षाणि यावच्चतुःसूरि—चतुर्णां सूरीणां समाहारश्चतुःसूरि, चत्वारोऽपि सूरयो वर्त्तन्त इत्यर्थः, तेषु श्रीवर्द्धमानः पट्टधरः खरतरेणोक्तः, श्रीअभयदेवसूरिपट्टधरः श्रीवर्द्धमानाचार्य इत्येवं गणधरसार्द्धशतकवृत्तौ खरतरेणापि भणित इत्यर्थः इतिगाथार्थः ॥५७॥ अथ जिनवल्लभः कीदृश इत्याह—

जिणवल्लहो अ चेइअनिवासिनिस्साइ वट्टमाणोऽवि । कहमंतरा पविट्ठो पट्टधरत्तेण सूरिपए ? ॥५८॥

जिनवल्लभश्च चैत्यनिवासिनिश्रया—श्रीजिनेश्वरसूरिनिश्रयैव वर्त्तमानोऽपि पट्टधरत्वेन सूरिपदे—श्रीअभयदेवसूरिपदे कथमन्तरा प्रविष्टः?, अवकाशाभावेऽपि खरतरैः कथं बलात्प्रक्षिप्तः, चम्पित इत्यर्थः, यथा विवाहमहोत्सवमनिच्छतोरपि वत्सावत्सयोरुद्वाहोत्सवो ब्राह्मणैर्विधीयते तथा श्रीअभयदेवसूरिजिनवल्लभयोस्तथाभिप्रायरहितयोरपि खरतरापत्यैः पट्टधरत्वव्यवहारः प्रवर्त्तित इतिगाथार्थः ॥५८॥ अथ खरतरस्य रीतिमाह—

एव जिणवल्लहओ पुव्विंपि अ पट्टसूरिणो तेसिं। ज उज्जोअणसूरी पुव्विं भेएवि कहमिक्को ? ॥५०॥

एवं-प्रागुक्तप्रकारेण जिनवल्लभवज्जिनवल्लभत पूर्वमपि पट्टधरा आचार्यास्तेषां-खरतराणां भवन्ति, यत्-यस्मात्तर्हि भेदे सति उद्योतनसूरिरेकः कथं, चकारादुद्योतनसूरेः पश्चादपि पट्टपरम्परापटनैव कृतत्पदार्थ, भावार्थस्त्वयम्-उद्योतनसूरेः पूर्वे ये सूरय प्रथमा तत्कथं घटते ?, खरतरपट्टावली ताावदेवं-'श्रीवीरस्तत्पट्टे' श्रीसुधर्मस्वामी तत्पट्टे२ श्रीजम्बूस्वामी तत्पट्टे३ श्रीप्रभव स्वामी तत्पट्टे४ श्रीशय्यम्भवस्वामी तत्पट्टे५ श्रीयशोभद्रसूरि तत्पट्टे६ श्रीसंभूतविजयस्तत्पट्टे७ श्रीभद्रबाहुस्वामी तत्पट्टे८ श्री स्थूलभद्र तत्पट्टे९ श्रीमहागिरिस्तत्पट्टे१० सुहस्तिसूरिस्तत्पट्टे११ श्रीशान्तिसूरिस्तत्पट्टे१२ श्रीहरिभद्रसूरिस्तत्पट्टे१३ श्री पदट्टे१४ श्रीमांडिलसूरिस्तत्पट्टे१५ श्रीरेवतीमित्रसूरिस्तत्पट्टे१६ श्रीधर्माचार्य तत्पट्टे१७ श्रीगुप्ताचार्यस्त पट्टे१८ श्रीसमुद्रसूरिस्तत्पट्टे१९ श्रीआर्यमङ्गुसूरिस्तत्पट्टे२० श्रीआर्यसुधर्मसूरिस्तत्पट्टे२१ श्रीगुप्तसूरिस्तत्पट्टे२२ श्रीवयर स्वामी तत्पट्टे२३ आर्यरक्षितसूरिस्तत्पट्टे२४ श्रीदुर्बलिकापुष्पमित्रस्तत्पट्टे२५ आर्यनन्दिसूरिस्तत्पट्टे२६ श्रीनागहस्तिसूरिस्त त्पट्टे२७ श्रीआर्यरेवतीसूरिस्तत्पट्टे२८ श्रीब्रह्मदीपिसूरिस्तत्पट्टे२९ श्रीसंडिलसूरिस्तत्पट्टे३० श्रीहिमवन्तसूरिस्तत्पट्टे३१ श्रीनागा र्जुनवाचकस्तत्पट्टे३२ श्रीगोविन्दवाचकस्तत्पट्टे३३ श्रीसंभूतदिन्नवाचकस्तत्पट्टे३४ श्रीलोहितसूरिस्तत्पट्टे३५ श्रीदूष्यसूरिस्तत्पट्टे३६ श्रीउमास्वातिवाचकस्तत्पट्टे३७ श्रीजिनभद्रगणिक्षमाश्रमण तत्पट्टे ३८ श्रीहरिभद्रसूरिस्तत्पट्टे ३९ श्रीदेवसूरिस्तत्पट्टे४० श्रीनेमि चन्द्रसूरिस्तत्पट्टे४१ उद्योतनसूरिस्तत्पट्टे४२ श्रीवर्द्धमानसूरिस्तत्पट्टे४३ श्रीजिनेश्वरसूरिस्तत्पट्टे४४ श्रीजिनचन्द्रसूरिस्तत्पट्टे४५ श्रीअ

भयदेवसूरिस्तत्पट्टे४६ श्रीजिनवल्लभसूरिस्तत्पट्टे४७ श्री जिनदत्तसूरिस्तत्पट्टे४८ श्रीजिनचन्द्रसूरिस्तत्पट्टे४९ श्रीजिनपतिसूरिर्यः खरतर-गच्छसूत्रणासूत्रधारो बभूव, भाण्डारिकनेमिचंद्रपरीक्षितश्च, तत्पट्टे५० श्रीजिनेश्वरसूरिस्तत्पट्टे५१ श्रीजिनप्रबोधसूरिस्तत्पट्टे५२ श्री-जिनचन्द्रसूरिस्तत्पट्टे५३ श्रीजिनकुशलसूरिस्तत्पट्टे५४ श्रीजिनपद्मसूरिस्तत्पट्टे५५ श्रीजिनलब्धिसूरिः,एतस्याचार्यपदं श्रीतरुणप्रभाचार्येण सं० १४०० वर्षे दत्तं, १४०६ दिवं गतस्तत्पट्टे५६ श्रीजिनचन्द्रसूरिस्तस्याप्याचार्यपदं तरुणप्रभेण सं० १४०६ वर्षे कृतं, तत्पट्टे५७ श्रीजिनोदयसूरिस्तत्पट्टे५८ श्रीजिनराजसूरिस्तत्पट्टे५९ श्रीजिनवर्द्धनसूरिस्तत्पट्टे६० श्रीजिनचन्द्रसूरिस्तत्पट्टे६१ श्रीजिन-हंससूरिर्विद्यमानः' इति खरतरपट्टावल्यां बहून्यसंबद्धानि, तथाहि—श्रीवज्रस्वामिन आरभ्य जिनदत्तं यावत्प्रायो बहूनां गुरुशिष्य-संबन्धाभावेऽपि अदत्तपट्टधारित्वेनैव पट्टानुक्रमो लिखितो दृश्यते, तथाहि—प्रथमं तावज्जिनदत्तो जिनवल्लभपट्टधरत्वेन संपन्नः, स चादत्तपट्टधार्येव, नहि जिनवल्लभेन जिनदत्तो निजपट्टे स्थापितो, न वा वाङ्मात्रेणानुज्ञातो, न वा दिग्बन्धादिना शिष्य-त्वेनाभ्युपगतः, किंतु जिनदत्तः स्वयमेव दृक्पथानवतीर्णोऽपि धूर्त्तवाक्यमिव जिनवल्लभपट्टधरोऽहमित्यादिवाक्यमुद्घोष्यादत्त-पट्टधरो जातः, न च स देवभद्राचार्येण तत्पट्टधरः कृत इति वाच्यं, तदीयपट्टधरत्वमधिकृत्य देवभद्राचार्यस्य दारिद्र्यात्कथं तद्दातुं शक्नोति ?, किंच—तस्यापि जिनवल्लभस्यानुज्ञाया अप्यभावेनादत्तमादायान्यस्मै दानमनुचितमित्यपि विचारणीयं, ज्ञात्वा त-द्ग्रहणे दाने चोभयोरप्यदत्तमेव, किंच—देवभद्रस्य किं याति यदेवंविधमदत्तमादाय तस्मै दत्तं ?, किंच—जिनवल्लभस्याचार्यपदं खरतरैरेव निजप्रकरणादौ लिखितं दृश्यते, तल्लिखनं त्वकिञ्चित्करतया दर्शितं दर्शयिष्यते चान्यतरदपि, यत्त्वन्यत्राप्याधुनिकैः क्वापि जिनवल्लभसूरिरिति लिखितं तत्तु जिनदत्तापत्यीयानामनुवादोऽनाभोगाल्लिखितः,तेन चतुरधिकद्वादशशतवर्षेभ्यो लिखिते

विश्वासो न कर्तव्य किन्तु तत प्राविष्यमग्रन्थस्तु लिखित इति, किञ्च—मदुक्तत प्रमतापि जिनवल्लभेन कोऽपि न प्रव्राजितोऽतो माऽस्मदीय कुमतमग्र प्रवर्त्ततामित्यप्यभिमायो जिनवल्लभस्यानुमेयो बोध्यः, न चैवमसंभवि, प्रायः पाप कृत्वा भूयात् जन पश्चात्तापवान् भवत्यव, यथा मङ्खलिपुत्र' मतश्च साम्प्रतमपि दृश्यत, यथा श्रीआमतीयेन धर्मदासेनाह चित्रकूट मत्वाऽस्मदीय ममवार्य प्रतिबोध्य श्रीआणंदविमलसूरि गुरुतया प्रपन्न इति प० श्रुतसमुद्रसाक्षिक प्रतिज्ञां कृत्वा चित्रकूटे गत', तमरूपेण त या स्वकीयममुनायेन सह विनाय श्रीआणंदविमलसूरि भपिप्य यमापोसपुर नवीये भावे' तदेव कृत पथा मौनमेवाश्रितवान्, तन मयर्त्तितं कुमत प्रवर्त्तकाधीनं न स्यात्, किन्तु ?, तत्प्रतिबोधितगुरुम्नायक्रमेणात एव सुपार्श्वमुप्यमर्पिसपर्श्नीप्रमुखे त्स्यकमपि मार्ग्य, कथमन्यथा जिनवल्लभे परलोक गत वर्षत्रयं यावत्निराश्रयीभूता' केवलश्रावका अपि श्रीअभयदेवसूरिसंतानीयबहु संविग्न विद्यमानेष्वपि सोमचन्द्रनामानं ग्रस्यालिङ्गिनमाचार्यीकृतयित्वा निजसमुदायं सस्वामिक कृतवन्तोऽद्य यावत्मवाहमागिति दिग्दर्शन न कर्षे स्वधिया बहु पर्यालोच्यं । तथा जिनदत्तवत् जिनवल्लभस्यापि श्रीअभयदेवसूरिपट्टधरत्वमवगमेय, विसंभोगस्य पट्टधरत्वा-संमवात्, विसमोगिकत्व च "सोऽठविउ जिनवल्लभ" इत्यादिवचोभिर्गोपमानंस्वायेषामपि प्रतीतमेव, यमन्तदीयाः—श्रीअभयदेव-सूरिपश्चे मणमप्यागमन्यत्र वृषकर्दमार्गो गत्वा कृतवान् जिनवल्लभ इति, परं जिनदत्तापेक्षया अयं विशेषः—यज्जिनवल्लभस्त दीपसपुराणेन पट्टधरतया कल्पितः, जिनदत्तस्तु स्वास्यनव तत्पट्टधरताममन उद्घोषयामासेति । तथा श्रीअभयदेवसूरि

श्रीजिनचन्द्रसूरिपट्टधरः कथितस्तदप्ययुक्त,यतः श्रीजिनचन्द्रेण प्रसन्नचन्द्रः स्वपदे स्थापितः, श्रीअभयदेवसूरिस्तु न शिष्यो न चाध्यापितो नवाऽऽचार्यीकृतः,किंतु जिनचन्द्रस्य गुरुभ्राता जिनेश्वरसूरिणैव जिनचन्द्रवद्दीक्षितोऽध्यापितः, सूरिकृतश्चेति, नहि सुधर्म्मस्वामी गोतमस्वामिपट्टधरः किंतु श्रीवीरस्यैव, तथाऽयमपि श्रीजिनेश्वरसूरिपट्टधरो युक्तो,न पुनस्तल्लिखितविधिनेति । तथा श्रीउद्योतनसूरेः पट्टधरतया श्रीवर्द्धमानाचार्यो लिखितस्तदप्ययुक्तं, श्रीउद्योतनसूरिणा निजशिष्यःश्रीसर्वदेवसूरिः पट्टधरतया व्यवस्थापितः, श्रीवर्द्धमानाचार्यस्तु चैत्यवासं परित्यज्य श्रीउद्योतनसूरिपार्श्वे चारित्रं गृहीत्वा विसंभोगिकः सन्नेव योगानुष्ठानपूर्वकसूत्रवाचना गृहीतवान, परं विहारस्तदाज्ञामात्रेणेति,अत एव श्रीवर्द्धमानसूरिसंतानीयैः श्रीअभयदेवसूरिश्रीवर्द्धमानसूरिप्रभृतिभिस्तथा तदनपत्यजिनवल्लभेनापि श्रीवर्द्धमानसूरिमवधीकृत्य स्वकृतग्रन्थप्रशस्त्यादौ श्रीवर्द्धमानसूरिपट्टपरम्परा लिखिता, न पुनस्ततः प्रागपि सूरिमवधीकृत्येति, तत्र किं निदानमितिचेच्छृणु, तदीयाः प्राचीनाचार्याश्चैत्यवासिनस्तेषामभिधानमयुक्तम्, उद्योतनसूरिस्तु विसंभोगित्वेनपट्टपरम्परायां लिखितुमशक्य इति बोध्यं, यत्तु जिनदत्तापत्यीयाः साम्प्रतं लिखन्ति तच्चैत्यवासिसंतानतानत्रपाकरेति मत्वा संबन्धमात्रेणापि पट्टधरत्वकल्पना बोध्या, तथा येषां श्रीउद्योतनसूरिः पट्टधरतया पट्टावल्यां लिखितस्तेषां सर्वेषामपि श्रीसुधर्मस्वामिन आरभ्य सदृश्येव पट्टावली दृश्यते, यथा मडाहडगच्छपट्टावली,तथा कुपाक्षिका अपि पूर्णिमीयकादयस्तदनु निर्गतास्तेषामपि श्रीउद्योतनसूरितः पूर्वं श्रीसुधर्मस्वामिन यावत् न पट्टावलीभेदः,खरतरस्य तु न तदनुकारगन्धोऽपि,किंतु ये ये युगप्रधानत्वादिगुणैर्विख्यातास्ते ते परस्पर गुरुशिष्यसंबन्धाभावेऽप्यनुक्रमतो व्यतिक्रमतोऽनुक्रमतोऽन्धयुद्धन्यायेन समुदायीकृत्य संख्यापूर्त्तिर्निहिता तैः, नन्वन्धन्यायः कथमितिचेच्छृणु,चान्द्रकुलं तावत्सर्वैरपि वर्ण्यते,तच्च श्रीचन्द्रसूरेर्जातं,स च श्रीवज्रसेनशिष्यः

द्वितीयोदयस्य च प्रथमाचार्य , तौ द्वावपि न लिखितौ,तथा कोटिकगणसंज्ञाहेतू सुस्थितसुप्रतिबद्धावपि नोक्तौ,तथा श्रीउमास्वातिवाचकपट्टे श्रीजिनभद्रगणिक्षमाश्रमणो लिखित , स च गुरुशिष्यसम्बन्धाभावेऽपि कालव्यत्ययेनोक्तः, एवं श्रीवज्रस्वामिनं पूर्वं श्रीआर्यसुहस्तिन यावत्पट्टधरास्त मर्मेऽपि विकल्पिता , न पारमार्थिका, तथा श्रीसंभूतविजयश्रीभद्रबाह्वोः श्रीमहागिरिश्रीसुहस्तिनोश्च गुरुभ्रातोयत् पृथक्पट्टधरत्वमुक्त तदप्यसंगत,तथा श्रीवज्रस्वामिनं आरभ्य श्रीउद्योतनसूरिं यावद्ये पट्टधरत्वेनोक्तास्ते विकल्प्य लिखिता ,परं महानुभावा अपि पट्टधरा न सन्तीति बोध्यं,किंच–प्रभावकचरित्रानुसारेण श्रीनागहस्तिप्रमुखय कियन्तो विद्याधरशाखासमन्विनस्तेऽपि निजपट्टावल्यां लिखिता', मक्ति चाह चन्द्रगच्छीय इत्यादि बहु वक्तव्यमस्तीति, तस्मात्खरतरपट्टावल्या विचारे क्रियमाणे दूषणानि कियन्तो वा दधिमाषभोजने कृष्णा विवेच्यन्ते इति न्यायमारूढानि बोध्यानीति, तस्मादुद्योतनसूरिमाश्रितानां बहु सम्मता अस्मत्पट्टावल्येव युक्तितिकृत्वा तत्पट्टावली यथा श्रीवर्द्धमानस्वामी१ तत्पट्टे श्रीसुधर्मस्वामी२ तत्पट्टे श्रीजम्बूस्वामी३ तत्पट्टे श्रीप्रभवस्वामी४ तत्पट्टे श्रीशय्यंभवस्वामी५ तत्पट्टे श्रीयशोभद्रसूरि६ तत्पट्टे श्रीसंभूतविजयश्रीभद्रबाहू७ तत्पट्टे श्रीस्थूलभद्र८ तत्पट्टे श्रीमहागिरिसुहस्तिनौ९ तत्पट्टे श्रीसुस्थितसुप्रतिबुद्धौ१० तत्पट्टे श्रीइन्द्रदत्तसूरि११ तत्पट्टे श्रीदिन्नसूरि१२ तत्पट्टे श्रीसिंहगिरि१३ तत्पट्टे श्रीवज्रस्वामी१४ तत्पट्टे श्रीवज्रसेन १५ तत्पट्टे श्रीचन्द्रसूरि१६ तत्पट्टे श्रीसामन्तभद्रसूरि १७ तत्पट्टे श्रीवृद्धदेवसूरि१८ तत्पट्टे श्रीप्रद्योतनसूरि१९ तत्पट्टे श्रीमानदेवसूरि२० तत्पट्टे श्रीमानतुङ्गसूरि२१ तत्पट्टे श्रीवीरसूरि२२ तत्पट्टे श्रीजयदेवसूरि २३ तत्पट्टे श्रीदेवानन्दसूरि२४ तत्पट्टे श्रीविक्रमसूरि २५ तत्पट्टे श्रीनरसिंहसूरि२६ तत्पट्टे श्रीविक्रमसूरि२७ तत्पट्टे श्रीमानदेवसूरि२८ तत्पट्टे श्रीविबुधसूरि २९

तत्पट्टे श्रीजयानन्दसूरिः३० तत्पट्टे श्रीरविप्रभसूरिः३१ तत्पट्टे श्रीयशोदेवसूरिः३२ तत्पट्टे श्रीप्रद्युम्नसूरिः३३ तत्पट्टे श्रीमा-
नदेवसूरिः३४ तत्पट्टे श्रीविमलचन्द्रसूरिः३५ तत्पट्टे श्रीउद्योतनसूरिः३६ तत्पट्टे श्रीसर्वदेवसूरिः३७ तत्पट्टे श्रीदेवसूरिः३८
तत्पट्टे श्रीसर्वदेवसूरिः३९ तत्पट्टे श्रीयशोभद्रनेमिचन्द्रौ सूरी४० तत्पट्टे श्रीमुनिचन्द्रसूरिः४१ तत्पट्टे श्रीअजितदेवसूरिः४२
तत्पट्टे श्रीविजयसिंहसूरिः४३ तत्पट्टे श्रीसोमप्रभसूरिश्रीमणिरत्नसूरी४४ तपट्टे श्रीजगच्चन्द्रसूरिः४५ तत्पट्टे श्रीदेवेन्द्रसूरिः
४६ तत्पट्टे श्रीधर्मघोषसूरिः४७ तत्पट्टे श्रीसोमप्रभसूरिः४८ तत्पट्टे श्रीसोमतिलकसूरिः४९ तत्पट्टे श्रीदेवसुन्दरसूरिः५० तत्पट्टे
श्रीज्ञानसागरसूरिः५१ तत्पट्टे श्रीकुलमण्डनसूरिः५२ तत्पट्टे श्रीसोमसुन्दरसूरिः५३ तत्पट्टे श्रीमुनिसुन्दरसूरिः५४ तत्पट्टे श्रीरत्न-
शेखरसूरिः५५ तत्पट्टे श्रीलक्ष्मीसागरसूरिः५६ तत्पट्टे श्रीसुमतिसाधुसूरिः५७ तत्पट्टे श्रीहेमविमलसूरिः५८ तत्पट्टे श्रीआणन्दविम-
लसूरिः५९ तत्पट्टे श्रीविजयदानसूरिः६० तत्पट्टे श्रीहीरविजयसूरिर्विद्यमानः। इति तपागणसंबन्धिनी पट्टावली, उद्योतनसूरिमा-
श्रिताना सर्वेषामपि समाना, श्रीउद्योतनसूरिपट्टे च श्रीसर्वदेवसूरिः, स च बृहद्गच्छसंज्ञाहेतुरित्यपि बहु सम्मतं, खरतरैस्तु स्वजात्युद्भ-
वस्वरेण श्रोतृणां श्रवणकटु रटितमिति बोध्यमिति गाथार्थः ॥५९॥ अथ जिनदत्तमते तात्पर्यमाह—

पायं जिणदत्तमए आयारो एस अण्णहा लिहणं। तंपिअ कत्थवि ऊणं अहिअं वा अहव विवरीअं ॥६०॥

जिनदत्तमते प्रायो—बाहुल्येनैष आचारो यद् अन्यथा लिखनं, लिखने पूर्वापरसंबन्धघटनाघटनविचारशून्यः खरतर इत्यर्थः, तदपि
च कचिदूनं वा अथवाऽधिकमथवा विपरीतं चेति त्रिधापि, एतच्चोत्सूत्रप्ररूपणोद्घाटनावसरे वक्ष्याम इति गाथार्थः ॥६०॥ इति
नामत्रयोत्पत्तिसिद्धौ खरतरः शङ्कते—

नणु जिणवल्लहसूरी पसंसिओ तुम्ह पुव्वसूरीहिं। तेण तदोसवयं अलिअं न विअत्ति वत्तव्वं ॥६१॥

ननु जिनवल्लभसूरियुष्माकं पूर्वसूरिभिः प्रशंसितः, तेन कारणेन तद्दोषवचनम्—तद्दोषाविष्करणवचनमलीकम्—असत्यं, पाप हेतुरित्यर्थः, 'न यिअ'त्ति नैवेतिवक्तव्यम्? अर्थात्कथनं न भवत्येवेति प्रश्नोत्तरवचनमिति गाथार्थः॥६१॥ अथ पराशङ्कावचन ममत्यमित्यत्र हेतुमाह—

जिणचन्दो अ सूरी पसंसिओ जो अ पुव्वसूरीहिं। सो खरयरअगिकया मिस्सो नियमेण विण्णेओ ॥६२॥

यस्तु जिनवल्लभसूरिः प्रसिद्धसूरिभिः श्रीमलयगिरिप्रभृतिभिः कर्मग्रन्थचूर्णौ प्रशंसितः, पूर्वं जिनदत्तमतोत्पत्तेः पूर्व, स जिनवल्लभः खरतरगच्छीकृताजिनवल्लभाद्भिन्न एव विज्ञेय इति गाथार्थः ॥६२॥ अथ भिन्नत्वे यो हेतु प्रयुक्तस्तत्र युक्तिमाह—

न तस्स रामदेवो सीसो छास चुण्णिकारो अ। कल्लाणगसत्थवणे पयेव जिणिंदवीरस्स ॥६३॥

यत्—स्यात्तस्य—भिन्नस्य खरतराभ्युपगतजिनवल्लभादितरस्य षडशीतिचूर्णिकारः—श्रीजिनवल्लभसूरिकृतषडशीतिकर्मग्रन्थस्य चूर्णेः कर्ता जिनवल्लभसूरेः रामदेवो—रामदेवनाम्ना शिष्य आसीत्, य उक्त षडशीतिचूर्णौ, एवंविधः शिष्यः खरतराभ्युपगतस्य चैत्य वासिशिष्यजिनवल्लभस्य कोऽपि नासीदिति खरतर एव द्वितीयो भणितो, नापरः कोऽपि प्रमाणितो मिलितो सति, किंच—तथा विवक्षितः शिष्य स विद्यमान कनाप्यज्ञातो विसंयोगिकः सोमचन्द्रनामा ग्रन्थलिखी जिनदत्तनाम्नाऽऽचार्यीभूय जिनवल्लभस्य पट्टधरः कथ मवदिति नेत्रे निमील्य पर्यालोच्य, तथा कल्याणकस्तवने—"सम्मं नमिऊण विणे चउवीसं तमि येय पवेअं। गुरुजु चुइ१ जम्म२ दिक्खा३ णाण४ निवाण५ कल्लाणे ॥१॥ कत्तिअबहुले १पमी" त्यादि कल्याणकस्तवने जिनेन्द्रवीरस्य—श्री

महावीरस्य पञ्चैव कल्याणकान्युक्तानि, खरतराभिमतस्य तु षट्कल्याणकव्यवस्थापकत्वं स्कन्धास्फालनपूर्वकं सर्वजनविदितं गणधरसार्द्धशतके सविस्तरं खरतरस्याप्यभिमतमिति सर्वजनप्रतीतयुक्तिभिर्भिन्नोऽयं जिनवल्लभ इति गाथार्थः ॥६३॥ अथ स जिनवल्लभः कीदृश इत्याह—

**सो अभयदेवसीसो संभोई अहव सम्मओ समग। तेणं तक्कयपगरणपमुहंपि पमाणपय त्तं ॥६४।**

स जिनवल्लभोऽभयदेवसूरिशिष्यः संभोगी स्वहस्तदीक्षितो न पुनरुपसंपन्नः, अथवोपसंपन्नोऽपि संभोगिकः सन् तीर्थसम्मतः, न पुनः खरतराङ्गीकृतजिनवल्लभवदुत्सूत्रप्ररूपणारसिकः. यत एवं तेन कारणेन तत्कृतप्रकरणप्रमुखं प्रमाणपदप्राप्तं, तीर्थेन प्रमाणीकृतमित्यर्थः, तत्कृतप्रकरणानि प्रकरणानि खरतराभिमतजिनवल्लभकृतानीति खरतरैराख्यायतेऽन्येषामपि तथैव प्रतीति रितिचेत्सत्यं, वितथजल्पने वितथलिखने च शङ्काराहित्यं खरतराणां स्वभाव एवेति प्राक्कथितं,वक्ष्यते च 'जिणवइसूरी'ति गाथायामिति, तथा स्वभावो यावद्यैः सम्यग् ज्ञातो न स्यात्तावत्तेषां तदनुवादेन तथा प्रतीतिर्दुर्निवार्यैव, अत एव तदीयमुखनिर्गतवाक्यानि श्रुत्वा तदनुवादभूतानि भूयांसि वाक्यानि प्रवचने प्रवृत्तानि यथा नवाङ्गीवृत्तिकारकश्रीअभयदेवसूरिः खरतर इत्यादीनि तथा प्रवृत्तानि यथाऽद्यापि सम्यग्विचारणाक्षमानां नापगच्छन्तीति, परमित्थं विचारणीयं—ये तु कर्णजापपरम्परया आचार्यीभूय तत्पट्टधरत्वमात्मन उद्घोषयन्तो न लज्जन्ते तेषां नामसाम्याद्यथा श्रीजिनेश्वरसूरिशिष्यत्वेन श्रीअभयदेवसूरेर्गुरुभ्राता जिनवल्लभ इति क्वचिल्लिखितं वदन्ति च केचित्तदीयाः सांप्रतमपि तथाऽन्यकृतानि प्रकरणानि स्वाभिमतजिनवल्लभकृतानि वदतां कियती लज्जेति स्वयमेव विचार्यं सुदृशैः, खरतरोक्तानुवादोऽपकर्णनीयः, एवमुक्तेऽपि यस्य सम्यगास्था न स्यात्तेन खरतरपट्टावल्येव प्रागुक्ता

स च जिनवल्लभस्य संभोगी गुरुबन्धुः, अत औण्ड्रिको, यस्माज्जिनशेखरो मूलं जातः, रुद्रपल्लीयसमुदायस्य मूलं जिनशेखरः, स च जिनवल्लभस्य संभोगी गुरुबन्धुः, अत एव तदनुजाना पट्टावली त्वेवं–चान्द्रकुले श्रीवर्द्धमानसूरिस्तत्पट्टे श्रीजिनेश्वरसूरिस्तत्पट्टे श्रीअभयदेवसूरिस्तत्पट्टे श्रीजिनवल्लभसूरिस्तत्पट्टे श्रीजिनशेखरसूरिस्तत्पट्टे श्रीपद्मचन्द्रसूरिस्तत्पट्टे श्रीविजयचन्द्रसूरिस्तत्पट्टे श्रीअभयदेवसूरिरित्यादि, किंच–सं० १४२२ वर्षे श्रीसंघतिलकसूरिकृतदर्शनसप्ततिकावृत्तिप्रशस्तौ जिनशेखरो महानुभावतया भणितः, यदुक्तं–"तच्छिष्यो जिनशेखरो गणधरो जज्ञेऽतिविज्ञाग्रणी"रित्यादि, यस्तु खरतरेण पामरोष्ट्रवद् बहिर्निष्काशनयोग्यो दुरात्मेत्यादिना वर्णितः स एव तावत् तत्रेत्थं वर्णितः,तेन "जिणवल्लहसरिसो पुण पुणोऽवि जिणवल्लहो चेव"त्ति वर्णनेन न तुष्टिर्विधेया, अयथार्थवर्णनस्याकिंचित्करत्वादिति प्राग्दर्शितमिति, एवं जिनवल्लभपट्टे जिनशेखरे विद्यमानेऽन्यस्य जिनदत्तादेः पट्टधरत्वकल्पनं कलङ्क एव, अत्रापि पट्टपरम्परा श्रीवर्द्धमानाचार्यत एव लिखिता, न पुनरुद्योतनसूरेरपीति प्रसङ्गतो जिनदत्तापत्यस्य वितथलिखनमप्यसूचि, किंच–रुद्रपल्लीयैरपि स्वगच्छोत्पत्तिश्चन्द्रकुलादुक्ता, न पुनः खरतरगच्छात्, यदि श्रीजिनेश्वरसूरेः खरतरविरुदमभविष्यत्तर्हि तत एव स्वीयोत्पत्तिरुक्ताऽभविष्यदित्यपि बोध्यमिति गाथार्थः ॥६७॥ अथ यदि खरतरमतोक्तं प्रायोऽसत्यमेव तर्हि तदीयप्रकरणादिषु सर्वेषामेकवाक्यता कथं स्यादिति पराशङ्कामपाकर्तुमाह—

**जिणवइसूरी खरयरमयमेराकरणसुत्तहारसमो । जह जिणसमए मेराकारो वयरो अ सुत्तेसु ॥६८॥**

जिनपतिसूरिरासीत्, दृष्टान्तमाह–यथा जिनसमये–जैनशासने सूत्रेषु सूत्रपाठरचनायां मर्यादाकारो वज्रस्वामी अपश्चिमश्रुतधरः,अयं भावः–विकल्पितमपि मतं बहुकालान्तरितं प्रायः खरतरमतमेराकरणसूत्रधारसमः–खरतरमर्यादाकरणे सूत्रधारकल्पः

कृता, मेघकुमारजमाल्यादीना नामानि प्राक्तननामपरावृत्त्या लिखितानि,प्रत्यवसर्पिणि चरमश्रुतधरः सूत्रपाठमर्यादां कुरुते, दश-
वैकालिकसूत्रं चाभिनवमातनोतीत्यनादिसंस्थितिः,तेन चरमश्रुतधरेण श्रीवज्रस्वामिना कृता मर्यादा सूत्रपाठरूपा सर्वेषामपि स-
म्मतेति वृद्धसंप्रदाय इति गाथार्थः ॥६८॥ अथ जिनपतिसूरिकृता मर्यादा कस्येव कस्य सम्मतेत्याह—

जह वयरसामिसुकया मेरा सुमयापि मासणे चेव । तह तम्मयकयमेरा तम्मयवासीण नन्नेसिं ॥६९॥

यथा श्रीवज्रस्वामिना शोभना कृता मर्यादा जैनशासन एवातिशयेन मतैव सम्मतैव,अत्रापिरेवार्थे, नान्यत्र,तथा खरतरमत-
मर्यादा खरतरमतवासिनां सम्मता, नान्येषां प्रवचनविदां शुद्धश्रद्धानवतामितिसमुदायार्थ इतिगाथार्थः ॥६९॥ अथ खरतरमतम-
र्यादास्वीकारे यत्स्यात्तदाह—

तीए पमाणकरणे अपमाणं सासणं समग्गंपि । कायव्वं विवरीया जेणं दोण्हंपि दो पंथा ॥७०॥

खरतरमतमर्यादायाः प्रमाणकरणे समग्रमपि जिनशासनमप्रमाणं कर्त्तव्यमापद्येतेतिगम्यं,येन कारणेन खरतरमर्यादाजैनप्रवच-
नयोर्द्वयोर्विपरीतौ पन्थानौ स्तः, नहि पूर्वाभिमुखमुद्व्रजन् पश्चिमाभिमुखमुद्व्रजन्तं मिलति, न वा तौ समभिलषितमेकं नगरं
प्राप्नुत इति, वैपरीत्यं च प्रवचने स्त्रीणां जिनपूजाऽभिमता तां च संप्रति निषेधयतीत्यादिकमग्रे वक्ष्यमाणं बोध्यमितिगाथार्थः
॥७०॥ अथात्मीयः कश्चिच्छङ्कते—

ननु वद्धमाणसूरी जह तह जिणवल्लहोऽवि संजाओ । सेसं जिणवइसुत्तणमिअ चे अइसुंदरं वयणं ॥७१॥

ननु भोः यथा श्रीवर्द्धमानसूरिश्चैत्यवासं परित्यज्य श्रीउद्योतनसूरिमुपसंपद्य विसंभोगिकः सन्नेव तदाज्ञया विजहार तथा जिन-

प्राचीनाचाय मह संगतीकर्तु अशक्यत,यो यत्र योजयितु शक्यते तत्रेन विकल्प्य२ नियोज्य लिखित, पश्चाच गणधरसार्द्धशतकवृत्त्यादिरूपण प्रवर्धितं,तत्कल्पना त्वय–यदि वय श्रीसुधर्मस्वामिनोऽच्छिन्नपरम्परागता न भवामस्तर्हि अन्येषाममिमतनीया न विष्याम इति विचिन्त्य पट्टावली विकल्पिता, सा च गुरुशिष्यत्वादिसंबन्धे भस्त्येव नान्यथेतिकृत्वा प्रत्यामभेद्याचार्येष्वस्वसंबन्धः कल्पनीय, तेन कथंचित्संबन्धो जिनवल्लभस्य श्रीअभयदेवसूरिणा मह विकल्पितस्तत्रापि सूरिपदमन्तरेण तत्पट्टधरत्वमसंभवीतिकृत्वा क्रमप्राप्तपरम्परागतमपूर्वमाचार्यपदं विकल्पित, विरुद्धमपि सद्धेतुकमितिहेतु', तत्र दुर्लभराजसभायां श्रीजिनेश्वरसूरेश्च यथामिमिः मह विवादः जयाक्षेपा लोके राज्ञा च खरतरबिरुदं दत्तं, तेनास्मदीयान्वय नवाङ्गीवृत्तिकृत' संजाता इत्यामनो मृषोत्कर्षमुद्घोषयंतोऽपि तीर्थेनोपक्षिता मन्तस्तीर्थममा इत्यास्था मुग्धजनेभ्यो लब्धवन्त', तथाऽपरजिनवल्लभकृतानि पिण्डविशुद्ध्यादीनि प्रकरणान्यप्यस्मदभिमतजिनवल्लभकृतानीति वचनेन जिनवल्लभोऽपि मुधा ख्यातिपदवीमारोपित , एवमाम्नाय पत्र,श्रीमद्भद्रबाहुस्वामिकृतं "उवसग्गहरं पासं मयत्र'मिति स्तोत्रमपि भ्रान्त नवीनगाथा प्रक्षिप्यास्मदीयश्रीअभयदेवसूरिकृत मित्युद्घोषितमित्यादि सर्वमपि 'यो यथा पृच्छते सन्तुस तथा बोधयत् बुध'' इति वाक्यं स्वरूपीकृत्य जिनपतिसूरिणा प्रमाण्डकल्पमवमत्वं विकल्प्य तदनुसारेण मयादा कृता सर्वेषां सम्मता जाता,प्रकरणानि तु प्रायस्तदन्वेष निष्पन्नानि,यानि च पूर्वं निष्पन्नानि तानि नाननुगतविचारनिष्काशनपूर्वकमनुगतविचारप्रक्षेपयुक्तानि कृतानि, अत एवैकवाक्यता प्रायो ग्रन्थेष्वपि दृश्यते,न पुनः सर्वथा,यत पौषधविधिप्रकरणे सामायिकोच्चार नमस्कारत्रयपूर्वकत्रिकवारोऽमपि तदुद्धाररूपे लिखित',स चासंगत एवस्त्याधनेकमसंगतमपि विकल्पितम ,अर्थेवमिथेऽपि मर्यादाकरणे प्रश्न दृष्टान्तमाह–'जह जिणे'त्यादि यथा सूत्रेषु–सूत्रपाठेषु श्रीवज्रस्वामिना मयादा

कृता, मेघकुमारजमाल्यादीनां नामानि प्राक्तननामपरावृत्त्या लिखितानि,प्रत्यवसर्पिणि चरमश्रुतधरः सूत्रपाठमर्यादां कुरुते, दशवैकालिकसूत्रं चाभिनवमातनोतीत्यनादिसंस्थितिः,तेन चरमश्रुतधरेण श्रीवज्रस्वामिना कृता मर्यादा सूत्रपाठरूपा सर्वेषामपि सम्मतेति वृद्धसंप्रदाय इति गाथार्थः ॥६८॥ अथ जिनपतिसूरिकृता मर्यादा कस्येव कस्य सम्मतेत्याह—

जह वयरसामिसुकया मेरा सुमयापि सासणे चेव । तह तम्मयकयमेरा तम्मयवासीण नन्नेसिं ॥६९॥

यथा श्रीवज्रस्वामिना शोभना कृता मर्यादा जैनशासन एवातिशयेन मतैव सम्मतैव,अत्रापिरेवार्थे, नान्यत्र,तथा खरतरमतमर्यादा खरतरमतवासिनां सम्मता, नान्येषां प्रवचनविदां शुद्धश्रद्धानवतामितिमसुदायार्थ इतिगाथार्थः ॥६९॥ अथ खरतरमतमर्यादास्वीकारे यत्स्यात्तदाह—

तीए पमाणकरणे अपमाणं सासणं समग्गंपि । कायव्वं विवरीया जेणं दोण्हंपि दो पंथा ॥७०॥

खरतरमतमर्यादायाः प्रमाणकरणे समग्रमपि जिनशासनमप्रमाणं कर्त्तव्यमापद्येतेतिगम्यं,येन कारणेन खरतरमर्यादाजैनप्रवचनयोर्द्वयोर्विपरीतौ पन्थानौ स्तः, नहि पूर्वाभिमुखमुद्व्रजन् पश्चिमाभिमुखमुद्व्रजन्तं मिलति, न वा तौ समभिलषितमेकं नगरं प्राप्नुत इति, वैपरीत्यं च प्रवचने स्त्रीणां जिनपूजाऽभिमता तां च संप्रति निषेधयतीत्यादिकमग्रे वक्ष्यमाणं बोध्यमितिगाथार्थः ॥७०॥ अथात्मीयः कश्चिच्छङ्कते—

ननु वद्धमाणसूरी जह तह जिणवल्लहोऽवि संजाओ । सेसं जिणवडसुत्तणमिअ चे अइसुंदरं वयणं ॥७१॥

ननु भोः यथा श्रीवर्द्धमानसूरिश्चैत्यवासं परित्यज्य श्रीउद्योतनसूरिमुपसंपद्य विसंभोगिकः सन्नेव तदाज्ञया विजहार तथा जिन-

पन्लभोऽपि मस्वत्रासं परित्यज्य श्रीअभयदेवसूरिसत्रोपसंपद्य विसंभोगिक एव सूरयाज्ञया चैत्यवासिनां समुदायं प्रतिबोधयन् विजहार तत्र तु षट्कल्याणकप्ररूपणादिकं सर्वं जिनपतिसूरिणा जिनदत्तेनैव प्रकाशितं सत् जिनवल्लभस्य मस्तके आरोपितं,आरोपितं, न पुनरग्र किञ्चिदपि तीर्थप्रतिकूलं प्ररूपितवानितितिचेद् अतिसुन्दरं वचनं, यद्येवं तर्हि अस्माकममीष्टमेवेति गाथार्थः ॥७१॥ अथास्के गर्म्पूर्वपक्षिणा मदवाभिमतमस्माकमपीत्यत्र दृष्टान्तमाह—

जह उसभाइजिणिंदा विगप्पिआ ससमयाणुसारेण । सवेहिं कुपक्खेहिं अ तह एसो एवमवि जुत्तं ॥७२॥

यथापि कुपाक्षिकैस्स्वस्वमतानुसारेण ऋषभादयो जिना विकल्पितास्तथा एषः, अपिगम्य, एषोऽपि जिनवल्लभोऽपि, एवं युक्तमपेस्यपयगाथ, भावार्थस्त्वयं-यथा कुपाक्षिका सर्वेऽपि यथाऽस्माभिः पूर्णिमापाक्षिकादिरूपो मार्गः प्ररूप्यत तथा तीर्थकरैरप्युक्तमिति स्ववचनानुसारेण तीर्थकरा कल्पिता, तथा जिनवल्लभोऽपि स्वस्वाभिमतमदानारोपणेन विकल्पितः,परं न तादृशः, किन्तु यथासूत्रस्वरूपप्ररूपणप्रत्याचार्यैर्जिनस्तथैव स भवेयः,अन्यथा "पंचहत्थुत्तरे होत्थ"त्ति सिद्धान्तवचनमुल्लङ्घ्य षष्ठं कल्याणकं व्यवस्थापयितुमर्थापत्तिवचनमत्र सिद्धान्तगम्भीराणामाव सूत्रयतीत्यग्रे वक्ष्यते इति गाथार्थः ॥७२॥ अथ सुष्ठुमति कश्चिदाह—

णणु एयं बहू णाणं जाण कह सवं अलीअमिण । जह परवयणाभिरत्ता विसपि पीअंतऽणाभोगा ॥७३॥

ननु भोः सर्वथा अलीकमिदं मतमेवं-इदमानस्वरूपेण बहुरूपस्यातं कथं जातम्,? यदो यथा तपागणसंबन्धिनः साधवस्तथाऽन्यीयानि मगलोकाः स्थानिमात्र कथमिति परायणा, उत्तरमाह-यथा परवचनाश्रिताः-परैर्मोहिता अनाभोगात्-सम्यक् तथाविध

थपरिज्ञानाभावात् विषमपि पिबति,जलमध्ये प्रक्षिप्तं विषमप्यनाभोगात् पिबन्तो बहवो दृश्यन्ते,तर्हि अन्यद्दूरे आस्तां, तथा इदमपि मतं शेषकुमतापेक्षया साधुप्रतिष्ठाचतुर्दशीपाक्षिकोपधानादिवाहनादिभिर्बहुभिर्धर्मैः साम्यदर्शनादनाभोगात्कथंचित् केषांचित्प्रवचन परमार्थानभिज्ञानां तथाप्रवृत्तिविषयीभूतमितिगाथार्थः ॥७३॥ अथानाभोगः सम्यग्दृशामपि स्यादिति दर्शयति—

**सम्मद्दिट्ठीणंपि अ अणभोगो जिणवरेहिं निद्दिट्ठो। सो अइआरो निण्णयवयणं जा तअणु विवरीअं ॥७४॥**

सम्यग्दृष्टीनामपि चानाभोगो जिनवरैः संदिष्टः,यदागमः—"सम्मद्दिट्ठी जीवो उवइट्ठं पवयणं तु सद्दहइ। सद्दहइ असब्भावं अणभोगा गुरुनियोगा वा ॥१॥" इति श्रीउत्तराध्ययननिर्युक्तौ (१६३) स चानाभोगो निर्णयवादं यावदतीचारः सम्यग्दृशां, परस्परं विवादे यावन्निर्णयो न भवति तावदतिचारः, तदनु निश्चये जाते विपरीतं, यदि सम्यग् श्रद्धाति तदा सम्यक्त्वं निरतिचारम्, अथ न तर्हि मिथ्यात्वमभिनिवेशरूपं, निर्णयेऽपि स्वकीयकदाग्रहामोचनादितिगाथार्थः ॥ ४७ ॥ अथ निर्णये विवादाभावे हेतुमाह—

**बहुकालदूरदेसंतरिआणं निण्णयंपि को कुणइ?। उप्पण्णंमि विवाए निण्णयवयणं जह इआणिं ॥७५॥**

बहुकालदूरदेशान्तरितानां—यस्योत्पन्नस्य कुमतस्य कालो भूयान् जातः अथवा दूरं गतः—स्वदेशं परित्यज्य विपक्षभूतात्तीर्थाद्दूरदेशं गतः तस्य निर्णयमपि कः करोति?, न कोऽपीत्यर्थः, एवं सत्यप्युत्पन्ने विवादे निर्णयवचनं भवत्येव,यथा इदानीं विवादे जाते खरतरमतं यथावत्स्वरूपं विचार्यमाणमसारतयैव प्रकटीभूतम्, असत्योक्तस्य तथास्वभावाद्, यदुक्तं—"यथा यथा विचार्यंत, विशीर्यंत तथा तथा। असत्योक्तं बहीरम्यं, नान्तः खरपुरीषवत् ॥" इतिगाथार्थः ॥७५॥ अथानाभोगादिकमाविष्कुर्वन्नाह—

कहमणगइ बारससयचउवरिसे खरयराणमुप्पत्ति। मासतावि नवंगीवित्तिकरो खरयरोत्ति यर्य ॥७५॥

कथमन्यथा-यथनाभोगो न सार्ताहि कथं द्वादशशतचतुर्वर्षे १२०४ चतुरधिकद्वादशशतसंवत्सरे खरतराणामुत्पत्ति भापमाणा नवाङ्गीवृत्तिकर' खरतर इति वचो, भापन्त इति गम्यम्, अथ भाव -खरतरमतसोत्पत्ति' सं० १२०४ जाता, श्रीअभयदेवसूरिणा श्रीस्थानाङ्गवृत्ति' सं० ११२० वर्षे कृता, यदुक्तं-"श्रीविक्रमादित्यनरेन्द्रकालात्, शतेन विंशत्यधिकेन युक्त। समासहस्रेऽतिगते विरूधा, स्थानाङ्गटीकाऽल्पधियोऽपि गम्या ॥१॥" इति श्रीस्थानाङ्गवृत्तिप्रशस्तौ, इति परस्परं विचारणा यदि कृतास्या तर्हि को नाम खरतरकलङ्कं नवाङ्गीवृत्तिकर्तुर्ददाति ?,अत एव प्राय' कृपाक्षिकानुवादस्त्रयाणामपि स्वीकारस्य स्यात्,यत्तु कश्चिदिदानीं १२०४ रुद्रपल्लीयखरतरोत्पत्तिरितिसम्यग्, यतो रुद्रपल्लीयसभा न जिनशेखरत एवोत्पन्ना, किंतु जिन खरतचतुर्थपट्टधरात् श्रीअभयदेवसूरित:, यदुक्तं रुद्रपल्लीयैरेव-"पट्टे तदीयेऽभयदेवसूरिरासीद् द्वितीयोऽपि गुणाद्वितीय'। जातो यतोऽयं जयतीह रुद्रपल्लीयगच्छ' सुतरामतुच्छ' ॥१॥" इति सूरिप्रशस्ताविति गाथार्थ ॥७६॥ अथ प्राय' प्रवचनादर्शोपयोगो भूयान् अत' खरतरवचनानामनुवादक एव दृश्यते अतस्तदनुवादापनोदनाय प्रथमं पृच्छां सूत्रत एव दर्शयन् गाथामाह—

ज पुण कत्थवि पुत्थयपलिहिअं दीसइ अ खरयरे गच्छे। सिरिअभयदेवसूरी तप्पट्टे वल्लहो लिहिओ ॥७७॥

यत् पुन: क्वापि पुस्तकपत्रादिषु मयस्कप्रकरणादौ वा लिखितं दृश्यते, तल्लिखितोल्लेखमाह—खरतरगच्छे श्रीअभयदेवसूरिस्तत्पट्टे श्रीजिनवल्लभसूरिरित्यादीतिगाथार्थ' ॥७७॥ अथ तल्लिखितं समर्थयमाह—

न खरयरवयणाण अणुवाओ मइयाणऽणाभोगा। जह कच्छापागच्छइ कत्थवि कप्पसम वक्खाणे ॥७८॥

तत्खरतरवचनानामनुवादः, उक्तवचनस्य वादोऽनुवाद इतिकृत्वा तत्खरतरवचनमेवानूद्योक्तं, न पुनस्तात्त्विकम्, अनाप्तवचना-
नामनुवादस्याप्यतात्त्विकत्वाद्, अनुवादोऽपि केषां भवतीत्याह-भद्रकाणां-प्रवचनानुपयोगे सत्यकुटिलानाम्, एतेऽपि सम्यग्व-
क्तारो भविष्यन्तीति सरलमतीनां, सरलमतयो हि प्रायः सरलमेव पश्यन्ति, यदुक्तम्-"सरलगतिः सरलमतिः सरलात्मा सरल-
शीलसंपन्नः। सर्वं पश्यति सरलं सरलः सरलेन भावेन ॥१॥" इति, अथासत्यानुवादे दृष्टान्तमाह-'जहे'त्यादि, यथा कल्पव्या-
ख्याने-पर्युषणाकल्पव्याख्याने क्वचित्कल्याणकपट्कं तत्खरतरकृतसंदेहविषौषध्युक्तानुवाद एव, पञ्चाशकादिग्रन्थानुपयोगादिति
गाथार्थः ॥७८॥ अथैवमनुवादः कथं स्यादित्याशङ्कापराकरणाय दृष्टान्तभूतां गाथामाह—

पढमंगदीविआए उज्जोअणसूरि खरयरे गच्छे। लिहिअं दट्ठुं सरलो को ण भासिज्ज अणुभासं? ॥७८॥

प्रथमाङ्गदीपिकायां-खरतरकृताचाराङ्गदीपिकाप्रशस्तौ "गच्छः खरतरस्तेषु,समस्ति स्वस्तिभाजनम्। यत्राभूवन्गुणजुषो, गुरवो
गतकल्पषाः ॥१॥ श्रीमानुद्योतनः सूरिर्वर्द्धमानो जिनेश्वरः। जिनचन्द्रोऽभयदेवो, नवाङ्गवृत्तिकारकः ॥" इत्यादौ खरतरगच्छे
श्रीउद्योतनसूरिरुक्तः,एवं जेसलमेरुप्रासादे शिलामुत्कीर्य लिखितं,तादृशं च दृष्ट्वा कः सरलः पुमान् भाषामनुवादं नो भाषेत-न व-
देद् ?,अपितु सरलो जनो वदेदेव,अयं भावः-यथा आचाराङ्गदीपिकादौ श्रीउद्योतनसूरिप्रभृतयः खरतरगच्छे लिखितास्तथा क्वचि-
च्छ्रीअभयदेवसूरिरित्याद्यपि, तच्च तथा दृष्ट्वा केनचिदस्मदीयेन लिखितं तत्खरतरवचनवदनुवदनमप्यकिञ्चित्करमेवेति बोध्यं,
यत्तु क्वापि "बारसवाससएसुं विक्कमकाला जलहिअहिएसुं। जिणवल्लहकोहाओ कुच्चयरगणाउ खरयरया ॥१॥" इति वृद्धसंप्रदायागता
गाथा पट्टावल्यादिषु लिखिता दृश्यते तत्तु युक्तमेव प्रतिभासते, यतोऽस्यां गाथायां पूर्वार्द्धेन १२०४ वर्षे खरतरमतस्योत्पत्तिर-

मिहिता, उत्तरार्धेन जिनवल्लभक्रोधादितिवचनेन जिनवल्लभो मूलोत्सूत्रप्ररूपको दर्शित', क्रोधशब्देन निजगुरुणा सह कलह' सूचित', तेनाथ निजगुरुणा चैत्यवासिजिनेश्वरेण सह कलह कृत्वा निर्गतो, न पुनर्वैराग्यरङ्गात्, कूर्चपुरादित्यनेन कूर्चपुरीयगणाभिर्गतो, न पुनर्मन्त्रादिसंविग्नात्, यत' क्रोधाविष्टोऽत एव न श्रीमभयदेवसूरिभिरपि स्वनिश्रां प्रापित', अत' उभयभ्रष्ट' सन् चित्रकूटे गत्वा नवीनमतं व्यवस्थापितवानित्यभिप्राय', अन्यथा पूर्वापरासंगतिरेव स्यात्, उक्तञ्च १२०४ जिनवल्लभकाले चोक्तसंवत्स-रार्ंसमधादिति पयालोच्य, यत्तु क्वापि "पाणाओ वडगच्छो कोरंटगमाउ पिसवालगणो। कूवयराउ नवंगी रायगुरू पुण्णतुल्लाओ ॥१॥"त्ति गाथा लिखिता तत्र कूर्चपुराभवश्रीजिनसूरिरिति यदुक्तं तत्खरतरानुवादात्सूक्ष्ममतिना गाथायां लिखितं, न पुनस्तात्त्विकम्, एतच्च खरतरस्यापि सम्मत, नहि खरतरैरपि नवाङ्गीवृत्तिकर' कूर्चपुरीय उच्यते, नवाङ्गवृत्तिपक्षस्तौ स्वयमेव चन्द्रगच्छस्योक्तत्वादिति गाथार्थ' ।७९॥ अथानाभोगतो ग्रन्थोक्तं पुरस्कृत्य पृच्छन्त खरतरं गाथाद्वयेन तिरस्कर्तु प्रथमगाथामाह—

ज पुण जेहि पउट्ठ आयवणो खरयरोत्ति सो सूरी। उवएससत्तरीए भणिओऽभयदेवनामेण ॥८०॥

'ज पुणजेहि'न्ति यस्य' प्रतिष्ठामापन्न' खरतरः स सूरिरभयदेवनाम्ना उपदेशसप्ततिकायां भणित', तथाहि "पुरा श्रीपत्तने राज्य, कुर्वाणे भीमभूपतौ। अभूवन् भूतलख्याता', श्रीजिनेश्वरसूरय ॥१॥ श्रीमदभयदेवाख्यास्तेषां पट्टे दिदीपिरे। येभ्य प्रतिष्ठामापन्नो, गच्छ खरतराभिध ॥२॥" इतिश्रीरत्नशेखरसूरिराज्ये श्रीसोमसुन्दरशिष्यसोपाध्यायश्रीचारित्ररत्नस्य शिष्येण प० सोमधर्मगणिना विरचितायामुपदेशस ।ितिगाथार्थ' ॥८०॥ अथोपदेशसप्ततिकृत् कीदृगित्याह—

गच्छारोऽनाभोगी पयकम्म जेणऽणतसंसारी। भणिओवि तेण मुणिऽभो जिणप्पहो धम्मपरिचक्कमो ॥८१॥

उपदेशसप्ततिकाकारकः पं० सोमधर्मः प्रत्यक्षमनाभोगी येन कारणेनानन्तसंसारी भणितोऽपि -श्रीमुनिसुन्दरसूरिभिः स्तनिका-दिपंक्तौ निवेश्यौष्ट्रिकोऽनन्तसंसारीति कथितोऽपि तेन सोमधर्मेण स्तुतः, अनन्तसंसारीभणितः, तथाचाह—"आज्ञाभङ्गान्तरायो-त्थानन्तसंसारनिर्भयैः। सामाचार्योऽपि पाश्चात्यैः, प्रायः स्वैर प्रवर्त्तिताः ॥१॥ उपधानप्रतिक्रान्तिजिनार्चादिनिषेधतः। न्यूनिता दुष्षमादोषात्, प्रमत्तजनताप्रियाः॥२॥ यत्तत्प्रासुकमिष्टाम्बुप्रवृत्त्यादिसुखावहाः॥" इत्यादिना गुर्वावल्यां भणितं,तत्रोपधानप्रतिक्रा-न्तिनिषेधकौ यथा पूर्णिमीयकाञ्चलिकौ तथा आज्ञाभङ्गान्तरायोत्थानन्तसंसारनिर्भयत्वेन स्त्रीजिनार्चानिषेधकः खरतरोऽप्युक्तः,तद-न्तर्गतो जिनप्रभोऽप्यनन्तसंसारी भणितः सोमधर्मगणिना 'म्लेच्छाधिपतिप्रतिबोधको जिनप्रभसूरिर्जिनशासनप्रभावक' इत्यादिवच-नैरुन्नतिं प्रापितः, स च कीदृशः ?—धर्मप्रतिपक्षः—धर्मद्वेषी, यतस्तदीयवाग्विलासस्त्वेवं—"बाह्यक्रियादर्शनेन, मोहयन्तो जगज्जनम्। तपोभृता अटन्तीति, तपोऽटाः परिकीर्तिताः ॥१॥ तपोटानां मतं चैव,मुद्गलानां मतं तथा। शाकिनीनां मतं चैव, प्रायस्तुल्यानि वक्ष्यते ।।२॥ संक्लिष्टपरिणामित्वात्तुल्यमेतन्मतत्रयम्। तस्माद् दूरतर त्याज्यं, भावशुद्धिमभीप्सता ॥३॥ अयुक्तमुक्तमथवा,मिथ्या-दुष्कृतमस्तु नः। शाकिनीमुद्गलेभ्योऽपि,यत्तपोऽटा दुराशयाः ॥४॥ शाकिनीमुद्गलाद्यानां, दृश्यतेऽप्यायुपक्रमः। तपोटेनार्दितानां तु, चिकित्सा स्यादृशा भृशम् ॥५॥ हिनस्ति जन्मन्येकत्र, शाकिनीमुद्गलग्रहः। तपोटकुग्रहस्त्वेष,प्राणिहन्ति भवे भवे ॥६॥ विपर्यस्तधियः क्रूराः, परर्द्धिमसहिष्णवः। गुरुलाघवविज्ञानवन्ध्याः शासननिदिनः ॥७॥" इत्यादि तपानिन्दनवाक्यानि,तथा "ज्ञानमुष्णपयःपानं. दर्शनं मुखमुद्रणम्। चारित्रं तर्कयाम्येषा, केवलं मलधारणम् ॥१॥" तथा "वर्णान्तगदिप्रासं मत्,प्रासुकं च श्रुते स्मृतम्। न्यवारि शिशिर वारि, तदपि नेति गेहिनाम् ॥९॥ अप्कायमात्रहिमोत्थं, निरस्य प्रासुकोदकम्। प्राक्पि गृहिणामुष्णं, वाः षट्कायोपमर्द-

उम् ॥२॥' इत्यादि' सदाचारोऽपि तेन पापात्मना निन्दित एतच्च जिनप्रभसूरिकृते तपागणदूषणशतके, नचैवमनेनैव सदा चारो निन्दित', किन्त्वेतत्कुलक्रमस्त्वयमेव, तथाहि "मुद्धाणायणणगया मुक्का० ममाउ जायसंडेहा। मइजणपिट्ठिविलग्गा दुहिणो हुआ समाहूआ॥१॥" इतिगणधरसार्द्धशतके, अत्र तपो-पौर्णमीपक्षादिदूषणप्रस्तावे तपो दूषणीय', यथा लिखितं तथा चाह, अथवा मलिनगात्रदुर्गन्धपात्रासमारम्भतन्दुलधावनादिपायिनां गुरुकुलवासत्यागिनां तपस्विनामित्यादि भणितं, तच्च मचेतनानां श्रोतॄणां धर्मप्राप्तिहेतुरप्येतेन विपरीतधिया परिभाव्य लिखितं तथायुक्तमेव, यतो मलादिधारणं तु साधूनामुचितमेव, यदागम—"सिणाणं अदुवा कक्कं, लुद्धं पउमगाणि अ। गायस्सुव्वट्टणट्ठाए, नायरंति कयाइवि ॥२॥ इति दशवै० (२७२०) तथा "किलिन्नगायमेहावी, पंकेण व रएण वा। घिंसु वा परितावेण, साय नो परिदेवए ॥१॥ वेएज्ज निज्जरापेही, आरियं धम्मणुत्तरं। जाव सरीरभेउत्ति, जल्लं काएण धारए ॥२॥ इति उत्तरा० (८४–८५०) तथा "आयामगं चेव जवोदणं च, सीअं सोवीरं जवोदगं च। नो हीलए पिंड नीरसं पन्तं, कुलाइं परिवए जे अ भिक्खू ॥१॥ इति श्रीउत्तरा० (५०६०) तथा पर्युषणाकल्पेऽपि "चउत्थभत्तियस्स" इत्यादि प्र वीतमेव, एवमागमोक्तं तन्दुलधावनादिपानं तु साधूनां युक्तमेव, यथोक्तं 'गुरुकुलवासत्यागिनां' तथाप्ययमाधिस, सत्कुरेवानास्‍ श्रीमुनिसुन्दरसूरिभि प्रागुक्तप्रकारेण स्तनिकाव् सरतरोऽप्यनन्तसंसारोऽयम्, तन्मध्यपतितो जिनप्रभोऽपि म्लेच्छाधिपतिप्रतिबोध कोऽपि प्रवचनोपघात्येव, उत्सूत्रभाषिणां प्रवचनोपघातकत्वनियमात्, न पुन' प्रवचनप्रभावक',अन्यथा दिगम्बरादीनामपि प्रव चनप्रभावकत्वं स्यात्, यतस्तत्प्रबोधिता राजानोऽद्यापि दक्षिणस्यां विद्यन्ते, तस्मात् म्लेच्छाधिपतिबोधनोद्भावनमकिञ्चित्करमेव,

यतस्तत्प्रतिबोधितोऽपि स्त्रीपूजानिषेधादिलक्षणमौष्ट्रिकमार्गमेव श्रद्धत्तवान् , न पुनस्तीर्थङ्करभाषितं तीर्थसम्मतं मार्गम् , उपदेशस-
प्रतिकाकारस्तु निजपूर्वाचार्यविरचितप्रकरणानुपयोगेनौष्ट्रिककृतप्रकरणादिविश्वासेन च प्रवचनोपघातकमपि जिनप्रभं म्लेच्छप्र-
तिबोधकमात्रेणापि प्रवचनप्रभावकतया वर्णितवान् , अत एव पं० सोमधर्मस्यानाभोगः स्फुट एव—अध्यक्षसिद्धः, ननु जिनप्रभेण
तपागणः प्रशंसितोऽपि दृश्यते, तथाहि—"पुरा श्रीजिनप्रभसूरिभिः प्रतिदिननवस्तवननिर्मापणपुरस्सरं निरवद्याहारग्रहणाभिग्रहवद्भिः
प्रत्यक्षपद्मावतीदेवीवचसा अभ्युदयिनं तपागच्छं विभाव्य भगवतां श्रीसोमतिलकसूरीणां स्वशैक्षादिपठनविलोकनार्थं यमकश्ले-
षचित्रच्छन्दोविशेषादिनवनवभङ्गिसुभगाः सप्तशतीमिताः स्तवा उपदीकृताः निजनामाङ्किताः, तेष्वयं सर्वसिद्धान्तस्तवो बहूपयोगि-
त्वाद्विवियते इति जिनप्रभसूरिकृतसिद्धान्तस्तवावचूर्णौ, तथा क्वापि—"श्रीशत्रुञ्जययात्रार्थं गच्छता जिनप्रभेण सिद्धपुरे तपाग-
णनायकाः श्रीसोमतिलकसूरयो बह्वाडम्बरेण वन्दिता इत्यपि लिखितं दृश्यते तत्कथं घटत इतिचेदुच्यते, यत्सिद्धान्तस्तवावचूर्णौ
लिखितं तत्तु तदीयैरेव,न पुनः केनाप्याप्तभूतेन सम्मतेनास्मदीयेन पूर्वजेनेत्थं लिखितम् .अतः कथं सम्यगास्थापूर्वकनिर्णयः?,किंच-
यत् स्तवावचूर्णौ प्रत्यक्षपद्मावतीवचसेत्युक्तं तत्र स्वप्नेऽपि नास्माकं श्रद्धानविषयः, यतो नह्यस्मत्सापिस्सर्पिः सम्यग्दृष्टिदेवता प्रादु-
र्भवति. किंतु ततो दूरत एव नश्यति, तस्माद् यथा मम स्वप्ने शासनदेवतया भणितं यत् श्राद्धप्रतिष्ठा पूर्णिमापाक्षिकं चानादि-
सिद्धं त्वया न मोच्यमिति सद्धस्य पुरश्चन्द्रप्रभाचार्येण भणितं तथा यथाऽऽञ्चलिकमताकर्षकनरसिंहोपाध्यायेन पावकगिरौ सिद्धायिका
कालिकादेवी आराधिता लोकानां च पुरो मम चक्रेश्वरी प्रत्यक्षीभूतेति निजमतविश्वासोत्पादनाय स्वप्रौढिमज्ञापनाय चोक्तं. तथा
जिनप्रभोऽपि किंचित्क्षेत्रपालादिकदेवविशेषमाराध्य मम पद्मावती प्रत्यक्षीभूतेति प्रोक्तवानितिश्रद्धेयं.यत्तु सिद्धपुरे सोमतिलकसूरयो

वान्गाम्नम परम एव, यतः प्रापा लिङ्गिन परस्परं वन्दनादिक्रिया कुर्वाणाः संप्रत्यपि दृश्यन्ते,तर्हि संविमत्वेन सर्वत्र सर्वज्ञ नवमिदान् श्रीमामतिलकसूरीन् कथं न वन्दते ?, परमतवन्दनादिकं मुत्वा न किंचिदुत्साहनीय, नवा तदनुकूलतया प्रवर्तनीयं, 'मदिरा गीरे परिनिव्रतो'त्ति सिद्धान्तवचनाच्छ्रीमहावीरं वन्दित्वा गतोऽपि संगमकामरः श्रीसौधर्मेन्द्रेण स्वर्गान्निर्वासितः,न पुनः श्रीमहावीरवन्दन यतमि शुभ्मा प्रशंसित',एवमुत्सूत्रभाषिणो वन्दनादिक्रियां कुर्वाणा अप्युपेक्ष्य यथाशक्ति तिरस्करणीया इति, किंच -यद्यपि ग्रोऽप्युत्सूत्रभाषी तथाविधप्रकृत्या भद्रको निश्चयतः सम्यक्त्वभागपि तथापि 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इतिन्यायात् यावन्तस्तमामपाक्षम्न मर्वे मक्लिष्टपरिणामा एव भाव्यन्ते, तर्पा दर्शनमपि सम्यक्त्वभ्रमभूमव घटेत , यदागमः-"उम्मग्गदे मग्गए परमं नामति जिणवरिदाण। पावण्णदंमणा मतु नहु लब्मा तारिसा दट्ठुं॥"॥" इतिश्रीवन्दनकनिर्युक्तो(११५४)अस्या-श्चूर्णी "मतु मग्ग उप्पन्न निव्वयविदीए अवावण्णदंसणा वह्रवि मावण्णादंसणा इव दट्ठुं, ते य दट्ठुंपि न लब्मा, किमंग पुण मंवामो संभुजणा संयमो य"त्यादि श्रीआव० पृ०,अयं भाव -यद्यप्यवसरविशेष जिनप्रभसूरिरपि सुविहितानुरागीभवेत्तथाप्या गमदृग्दर्शीनां यावन्माम मग नात्सूत्रद्भुमध्यकल्प' कथ प्रभावकतया स्तवनाह' ?, उपदशसप्ततिकाकारेण तु तथा वर्णित', अना-भोग एव तत्र कारणं बोध्यमितिगाथार्थः ॥८१॥ अथोपदशसप्ततिकाविषय किं संपन्नमित्याह—

पण्ण मुद्रमाण गये भणिअंति सयणमय्ऽणुत्तं। अणाभोगोऽवि पमाणीकओ अ इय्मा अमिणिवमो ॥८२॥

एतेन-प्रागुक्तप्रकारेणानाभोगसिद्धौ युष्माकं ग्रन्थ उपदेशसप्ततिकालक्षणे श्रीमत्परनेषरिम्य खरतरगच्छ' प्रतिष्ठां प्राप्त इत्याभ्यिनमपि मग्गगणामपूर्ण, तत्र हेतुमाह-यत इति गम्यं, यत' कारणादनाभोगोऽपि प्रमाणीकृत' अनाभोगोऽपि नित्र

पक्षीयैः ग्रन्थे भणितं तदप्यस्माकं प्रमाणमिति स्वीकारोऽप्यभिनिवेशो भवेत्, अन्यथा जमाल्यादिशिष्याणामप्यभिनिवेशा न भवेत्, स्वकीयगुरुणोक्तस्यैव प्रमाणीकरणाद्, अनाभोगस्तु छद्मस्थमात्रस्यापि संभवेद्, यदागमः-"नहि नामानाभोगश्छद्मस्थस्येह कस्यचिन्न स्यात् । ज्ञानावरणीयं हि ज्ञानावरणप्रकृति कर्म ॥१॥" इति, एतेन उपदेशसप्ततिकामादाय तथाविधमन्यदपि किञ्चि-दादाय च खरतरेण न पूत्करणीयमिति दर्शितं, किंच-उपदेशसप्ततिकाभ्युपगमे श्रीमुनिसुन्दरसूरिश्रीजिनसुन्दरसूरिपं०हर्षभूषणप्रभृ-तिकृतगुर्वावलीदीपालिकाकल्पश्राद्धविधिविनिश्चयप्रमुखा ग्रन्था अप्रमाणीकर्त्तव्या भवेयुः, तथा सकलसिद्धान्तोऽपि, यतस्तत्रो-त्सूत्रभाषिणां निषिद्धं कुतोऽप्यनुकूलवर्णनमिति गाथार्थः ॥८२॥ अथ खरतरमतभाषितमात्रस्योपसंहारमाह—

तम्हा तम्मयलिहिअं तप्पडिमं अहव लिहिअमण्णेणं । उभयंपि अप्पमाणं जमभिनिवेसा अणाभोगा ॥८३॥

तस्मात्कारणात्प्रागुक्तयुक्तिप्रकाराद्वक्ष्यमाणहेतोश्च तन्मतलिखितं-तदीयमतवासिना जल्पितं सत् क्वापि लिखितं तदुभयमप्य-प्रमाणं, तत्र हेतुमाह-यस्मात् खरतरेण यल्लिखितं तदभिनिवेशात् तदृष्ट्वाऽन्येनाविदिततन्मतस्वरूपेण लिखितं तदनाभोगादेवेति गाथार्थः ॥८३॥ अथ खरतरलिखिते सर्वथा विश्वासाभावः कथमित्याशङ्कापराकरणाय गाथायुग्मे प्रथमगाथामाह—

सव्वेहि कुवक्खेहि अ निब्भंतो खरयरो सहावेणं । जिब्भादोसदुगेणं भासणभक्खणसरूवेणं ॥८४॥

उस्सुत्तं भासित्ता दिज्जा अलिअंपि सम्मट्टं मूढो । पज्जूसिअविदलाई भक्खंतो भणइ मुणिमप्पं ॥८५॥

सर्वेभ्यः कुपाक्षिकेभ्यश्च खरतरः स्वभावेन जातिमहसमुद्भवेन गुणेन निर्भ्रान्तो-निःशङ्कः पारत्रिकभयरहितः, केन ?-भाषणभक्षणस्वरूपेण जिह्वादोषद्विकेनेतिगाथार्थः ॥ ८४ ॥ अथ प्रागुक्तं कथमित्याह—उत्सूत्रभाषित्वात् मूर्खः सम्मति—

ग्रन्थान्तरनिरसनमलीकं योऽप्यथ स्वमतव्यवस्थापनार्थं असतीमपि वदति, यथाहि—"चउरंगुलप्पमाणं ठवणायरिअं ठवित्तु मुणिवसमा। विहिणा कुणंति किरिअं सयमावेदंडग यावि ॥१॥ गाणमए आयरिए मुट्ठिपमाणे मुवट्टपायार। पणवीसं पडिलेहा हवंति मुत्तो अ तेयेसो ॥२॥ पडिलेहणा उ पुण्णा न तहा अक्खाइएसु सुसिरसु। लब्भति मरिअमज्झे तण उ कत्थवि विसेसामि ॥३॥ सुत्तुवेयिडु ठवणायरिए किरिआसु पुव्वसूरीहिं। पडिलेहणाविसेसं दट्ठूणं दंमिआ कइवि ॥४॥" इति श्रीउमास्वातिवाचक-कृतायां विचारचक्रमायां, तथा "तिहिपडणे कयवा पुवा ज्जुत्तधम्मकज्जेसु। चाउद्दसीविलोवे पुण्णमिअं पक्खपडिक्कमणं ॥१॥ तस्सव पोसहविही कयवा मायगेहिं सुहहेऊ। नहु तरसीइ कीरइ जम्हा पाणाइणो दोसा ॥२॥ सुगेढयपडिआविअ तरसि हुता न पक्खिअं हुआ। चाउम्मासिअकरणे एस विही दंमिआ समए ॥ ३ ॥ तिहीवुद्धीए पच्मा गहिआ पडिपुण्णभोगसंजुत्ता। इअराबि माणपिआ परं न थोवत्ति सजुत्ता॥४॥ इति श्रीहरिभद्रसूरिकृत तत्त्वतरङ्गिणीग्रन्थ, तथा "तदविच्छिन्न वामगजा सुमिणत्तर ठविय मुहपत्ति। रयहरणमज्झमागे ठमए पुस्तपायजुग ॥१॥ आवस्सयकिअकम्म दीहरपुत्तीइ कम्मसत्तपहेऊ। जो कुणइ मणिसुत्तो मो पावइ परमनिव्वाणं ॥२॥ ॥इति प्रतिक्रमणभाष्ये ॥अत्रच विचारवल्लभा च त त्वरङ्गिणी चेतिग्र ग्रन्थयमुक्तकर्त्तृ स्वन स्वपुण्यभिधामठम निजमतस्थिरीकरणाय मुग्धजनविप्रतारणाय च विकल्प्य मुम्मातितपा लिखित प्रतिक्रमणभाष्यं स्वम्या म्यानकर्तॄहितं, यत्रोक्तगाथाऽयगन्धस्याप्यभावात, यथा "से णं लवण गाहावई समणोवासए अहिगयजीवाजीवे" इत्यादि वृत्ती पाक्षस्वलेयस्य इत्तिरिय "तथा चतुर्दश्यष्टम्यादिषु तिथिषूद्दिष्टासु–महाकल्याणकतया पुण्यतिथित्वेन प्रख्यातासु तथा पौर्णमासीषु च तिसृष्वपि चतुर्मासकतिथिष्वित्यर्थ" इति सूत्रकृदङ्गवृत्तौ एवंविध पाठ विद्यमानेऽपि पपुपमाणेपध्यग्रहणाय सुरतरूप

इत्यर्थः इत्येवमन्यथापाठं कृत्वा सूत्रकृदङ्ग-
प्रभाचार्येण षडावश्यकबालावबोधे पौर्णमासीषु चतसृष्वपि चतुर्मासकपर्युषणातिथिष्वित्यर्थः इत्येवमन्यथापाठं कृत्वा सूत्रकृदङ्ग-
वृत्तावुक्तमित्यादिवचसा वृत्तिः सम्मतितया दर्शिता, एवं "उद्दिट्ठट्ठमिचउद्दसी" इत्यादिगाथा संदेहदोलावल्यां सप्तत्रिंशत्तमा,
संदेहदोलावलीसूत्रं च जिनदत्तसूरिकृतं, तद्व्याख्याने चोद्दिष्टा-विशेषपर्वत्वेन प्रवचने प्रसिद्धास्तिथयः, यदुक्तं सूत्रकृदङ्गवृत्तौ
"चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु"त्ति आलापकं विवृण्वता शीलाङ्काचार्येणोद्दिष्टासु-महाकल्याणकसंबन्धितया-पुण्यतिथित्वेन
प्रख्यातास्विति, ताश्चतुर्मासकसांवत्सरिकमहाकल्याणकदिनान्युच्यन्ते इत्याद्यसंबद्धमेव भाषितं, तथा 'माहूणं गोअरओ वुच्छि-
ण्णो दूसमाणुभावाओ। अज्जाणं पणवीसं सावयधम्मो अ वुच्छिण्णो॥९॥ इति तीर्थोद्गारगाथायाः क्वापि व्याख्यानुपलम्भेऽपि
श्रावकधर्मश्चात्र प्रतिमारूपो ज्ञेयः, ततः संप्रत्यपि ये श्रावकेभ्यो भिक्षां ग्राहयन्ति तदागमबाधितमित्यादि षष्टिशतकवृत्तौ स्वमता-
नुरागेण विकल्प्यार्थो लिखितः, यतः संप्रति काले विशेषतः प्रतिमावहनेन तुलनां विधाय प्रव्रजतीति पञ्चाशकवृत्तौ श्रीअभय-
देवसूरिभिर्व्याख्यातमित्यग्रे दर्शयिष्यते इत्यादि पर्यालोच्य खरतरोक्तौ तदुक्तसम्मतौ च न विश्वसनीयमेव, ननु राकास्तनिका-
भ्यामपि तथोक्तं दृश्यते, तथाहि-"कालगज्जेहिं कारणिआ चउत्थी पवत्तिआ, तव्वसेण य चउम्मासिआणि चउद्दसीए आयरिआ-
णि"त्ति ग्रन्थकारोक्ते विद्यमानेऽपि "तव्वसेण य पक्खिआणि चउद्दसीए आयरिआणि"त्ति क्वापि परावृत्य लिखितं, तथा "इत्तो
अ अहिगस्स य निष्फत्ति मे निसामेह"त्ति प्रमुखगाथात्रयात्मके ज्योतिष्करण्डसूत्रे२ प्राभृतके (गा० ८९) सूच्यग्रे मुग्धप्रवेश इति
न्यायमवगणय्य "छट्ठिसहिआ न अट्ठमि तेरसिसहिअं न पक्खिअं होइ। पडवइसहिअं कइआवि इअ भणिअं वीअरागेहिं॥१॥ इत्या-
दिगाथादशकं पूर्णिमापाक्षिकाभ्युपगन्त्रा प्रक्षिप्तं, गाथाबन्धोऽपि गोपालवाक्यसमुद्भव इव प्रतिभाति, एवमसत्यग्रन्थसम्मतिदर्शनेन

सिद्धान्तफलहरानन च मौष्ट्रिकमभाविमापि तर्हि कथमौष्ट्रिक एव निस्तूफ इति चेत्सत्यं, यद्यप्येवमविज्ञपस्तथाप्यय विज्ञपः, यग्राक्षरदीनां मध्ये केनचित्तथा प्रक्षिप्योक्त सच्चज्ञुचैस्तथैव सत्यतयाऽभ्युपगम्य प्रवर्त्यत, खरतरस्तु न केवलं प्राचीनोक्त- मात्रेण विभास्यति, किन्तयापि नवीनरप्रक्षेपोपतोऽप्यप्रसिद्ध एव, यतो जेसलमेरौ तपाकृतप्रतिक्रमणवृत्तौ नवाङ्गीवृ- त्तिकारश्रीअभयदेवसूरिश्रीहेमचन्द्रसूरिरित्यादि स्वयं सिद्धे पाठे खरतरधुरीयेति मत्ताक्षराण्यन्तरा प्रक्षिप्य नवीनपुस्तक लिखित, यत्र लिखनसंवत्सरोऽपि पुरातनो लिखितः, विवाद च सम्पमिर्णीय मुग्धेन केनचित्प्रक्षिप्तं भविष्यति तर्हि खिमित्यादि वदन्तोऽपि क्षीणप्राणप्राया संजाता, नचैवमत्र किञ्चिच्चित्र संभावनीयं, प्रायः खरतरः पूर्वापरसंबन्धमनालो च्यैव पृच्छन्, अत एव स्वयं चतुर्दशीपाक्षिकाभ्युपगन्तापि केनचित् प्रक्षिप्तं गाथाद्वयकं कण्ठगतं कृत्वा यत्र क्वापि "तेर सिसरिसं न पक्खिअ होइ"त्ति मुधावो म ऊअते, न चेति यात्र 'पमरसंमि अ दिवसे फयर्व पक्खिअ तु पाएम'मिति पञ्चयां गाथायां क्रियुक्तं कथं पाठं वच्मि केन चेदं गाथाद्वयकं कृतम्, एवं राक्षरक्ककतदुण्डिकां रक्षाऽप्युक्तान्त खरतरः पूर्णिमाऽपि पाक्षिकं सत्यमेवेति स्वपदे प्रचारं कुर्वन् दृश्यते, न तथाऽन्ये, कुपाक्षिक इति खरतरोऽतिभ्रान्त इति समर्थितमिति वाग्दोषो विहासस्वरूपः, तथा भक्षणमविकृत्याह–"पज्जुसिअ"त्ति पर्युषितं–रात्र्यन्तरितं द्विदलादि, द्विदल–मुद्गादि, मादिशब्दात्पोलि कादि, मानकल्पनिन्यमपि भक्षयन्–स्वात्मात्मानं मुनिं भणति, पर्युषितद्विदलपोलिकादि भक्षानोऽप्यहं साधुरित्यर्थः, पर्युषित- द्विदलादिभक्षणमनुचितमिति पुरो वक्ष्यते इतिगाथार्थः ॥८५॥ अथ प्राशुकप्रकारम नवाङ्गलपिकः खरतरो न भवतीति सिद्धेऽपि पुनः पार्श्वस्थन शब्दार्थमाह–

अह पायं बहु खाय खरयरवयणाओ खरयरो सूरी। नवअंगिवित्तिकारो तमसच्चं भिन्नमवि वोच्छं ॥८६॥

अथेतिप्रागुक्तयुक्त्यपेक्षया पार्थक्यसूचकः खरतरवचनात्-नवाङ्गवृत्तिकारोऽस्मदीयः खरतर इत्येवंरूपेण खरतरवचनान्नवाङ्गवृत्ति-
कारः खरतर इति बहु ख्यातं प्रायः,प्रायोग्रहणात्प्रवचनपरमार्थवित्स्वस्मदीयप्राचीनाचार्येषु न ख्यात इत्यर्थः, तद्बहु ख्यातमसत्यं,
भिन्नमपि वक्ष्ये इतिगाथार्थः ॥८६॥ अथोक्तसमर्थनाय युक्तिमाह —

जइ सिरिजिणेसरो सो खरयरनामेण होइ सुपसिद्धो। ता कहमम्हायरिआ खरयरनामेण धिक्कुज्जा ॥८७॥

यदि श्रीजिनेश्वरसूरिः खरतरनाम्ना सुप्रसिद्धो भवेत् ता-तर्हि अस्मदाचार्याः-श्रीसोमसुन्दरसूरिप्रभृतयः खरतरनाम्ना कथं तान्
धिक्कुर्युः-धिकार कुर्वीरन्?, धिकारोल्लेखमाह-"हुं नन्देन्द्रियरुद्रकाल११५९ जनितः पक्षोऽस्ति राकाङ्कितो, वेदाभ्रारुण१२०४-
काल औष्ट्रिकभवो विश्वार्क१२१३ कालेऽञ्चलः। षट्त्र्यर्केषु१२३६ च सार्द्धपौर्णिम इति व्योमेन्द्रियार्के१२५० पुनः, काले त्रिस्तु-
तिकः कलौ जिनमते जाताः स्वकीयाग्रहात् ॥१॥" इत्यत्र राकास्तनिकादिवत्खरतरोऽपि कलौ स्वकीयाग्रहाद्-अभिनिवेशाज्जात
इत्युक्तं,तथा "आज्ञाभङ्गान्तरायोत्थानन्तसंसारनिनिर्भयैः। सामाचार्योऽपि पाश्चात्यैः, प्रायः स्वैरं प्रवर्तिताः॥१॥ उपधानप्रतिक्रान्ति-
जिनार्चादिनिषेधकाः। न्यूनिता दुष्षमादोषात्प्रमत्तजनताप्रियाः॥२॥"इत्यत्र स्त्रीजिनार्चानिषेधकः खरतरः सोऽप्यनन्तसंसारी भणित
इत्यादि प्रागुक्तं श्रीजिनेश्वरसूरेः खरतरत्वे कथं संभवति ?, न संभवतीति न खरतरचिह्नं तस्येतिगाथार्थः ॥८७॥ अथास्मदीया
आचार्याः न केवलं खरतरोऽनन्तसंसारीत्येवमुक्तवन्तः, किंतु श्रीअभयदेवसूरिं प्रभावकमपीत्याह—

पभणंतावि पभावयचरिएऽभयदेवहेमचंदाई। उस्सुत्तमग्गवड्डिओ पभावगो होइ न विरोहा ॥८८॥

प्रभावकचरित्र श्रीअभयदेवसूरिश्रीहेमचन्द्रसूरिप्रभृतीन् जिनशासनप्रभावकत्वेन प्रमन्त एव खरतरं स्वनिकपक्षो प्रथितवन्तः, यत एव तस्मादुत्सूत्रमार्गपतितः प्रभावको न भवति, कुतो ?–विरोधात्, विरोधस्त्वेवम्–उत्सूत्रमार्गपतितो यद्यपि कदाचिदन्य तीर्थिकेऽपि महासंभविनमपि जयमवाप्योन्नतिमवाप्नोति तथापि न प्रवचनप्रभावकः, किंतु स्वाभिमतमार्गस्यैवोद्दीपकः,स चोद्दीपितो मार्गो विरुद्धत्वं प्रवचनोपघाती स्यात्, यथा दिगम्बरपक्षीयो जयी जातः सन् गर्वितात्मा श्वेताम्बरपक्षमुच्छेत्तुमेव समीहते, त स्मादुत्सूत्रमार्गाभिमतस्वप्रवचनप्रभावकत्वयोरन्योऽन्य शीतोष्णस्पर्शयोरिव सहानवस्थानलक्षणो विरोध, तथा च कुतः खरतर-नामाभिरूढः स सूरिरिति गाथार्थः ॥८८॥ अथैवमुक्तो कोऽप्यन्यथाभावमापन्नोऽपि कीदृग् स्यादिति प्रदर्शनाय गाथायुग्ममाह–

गणण कोइ मूढो मच्छरगसिओ हु कोइ वायालो। अब्भासपतिओ वा नेहत्तो तमि मुहरि सिआ ॥८९॥

एसो न दूसिअव्वो न दूसिओ जेण पुव्वसूरीहिं। सोऽवि मुहमुहिओ खलु आणा भगाइवयणेहिं ॥९०॥

एतेन–प्रागुक्तयुक्तिप्रकारेण सोऽपि मुखमुद्रितो भवतीतिसंबन्धः,सः कः ?, यः कोऽपि मूढः–प्रवचनपरमार्थानभिज्ञः अथवा मत्स रग्रस्तः यदन्यैरयं तिरस्क्रियते तर्हि मयाऽप्युपष्टम्भनीय इत्येवं मत्सरग्रस्तः वाचालो भवेत्, अथवा खरतरं सहाध्यापकत्वादि नाऽभ्यासमग्रस्तस्मिन् खरतरे स्नेहयन् खरतरो मां मित्रं जानातिति धिया मुखरीस्यात्, वाचालत्वं चोछिक्षयाह–'एसो ने'त्यादि एष–खरतरो न दूषयितव्य , येन कारणेन पूर्वसूरिभिः कैश्चिदपि न दूषित इत्येवं वक्ता मुख मुद्रितं जातं यस्येति मुखमुद्रितो जातो विधेय , तदुपचारणे, यदुभवक्त भवेत्यर्थः, कैः ?–आज्ञाभङ्गादिवचनैः–"आज्ञाभङ्गान्तरायोरनानन्तसंसारनिर्भये" रित्या दिभिः श्रीमुनिसुन्दरसूरिप्रमुखैःसम्मतिवचनैः प्रागुक्तैः,अय भावः–न हि स्वयमेव कृतमिस्कृत्रिमनिमित्ताद्‌व्यामः, किंतु सुविहि

ताग्रणीश्रीमुनिसुन्दरसूरिप्रभृतिभिः पूर्वाचार्यैरनेकशो दूषिता इतिगाथायुग्मार्थः ।८९।९०॥ अथ प्ररूपणयापि भेदं दर्शयन्नाह—

**ज पुण परूवणाए भेओऽभयदेववल्लहाणंपि । वल्लहजिणदत्ताणं तमणंतर वुच्छमुस्सुत्ते ॥९१॥**

यत्पुनः प्ररूपणया अभयदेववल्लभयोः—पदैकदेशे पदेतिन्यायाच्छ्रीअभयदेवसूरिजिनवल्लभयोरपि पुनर्जिनवल्लभजिनदत्तयोश्च भेदः—पार्थक्यं तदनन्तरमुत्सूत्रे—उत्सूत्रोद्घाटनावसरे वक्ष्ये इतिगाथार्थः ॥९१॥ इति श्रीअभयदेवसूरिः खरतरनाम्ना कलङ्कितो नास्तीति प्रसङ्गतो भणितमिति, अथ खरतरमतोत्सूत्रदिदर्शयिषया प्रथममुत्सूत्रभेदानाह—

**अह उस्सुत्तं दुविहं किरिआविसयं च वयणविसयं च । किरिआविसयं तिविहं दुविहं पुण वयणविसयंति ॥९२॥**

'अथे'ति नामादिव्यवस्थापनानन्तरमुत्सूत्रं द्विविधं—क्रियाविषयं वचनविषयं च, क्रियैव विषयो यस्य तत्क्रियाविषयं, यद्यपि यत्क्रियाविषयं भवति तद्वचनविषयमपि भवत्येव तथापि मुख्यवृत्त्येतिबोध्यम्, एवमग्रेऽपि, वचनं विषयो यस्येति तद्वचनविषयं चेति द्विप्रकारं स्यात्, तत्र क्रियाविषयं त्रिविधं द्विविधं पुनर्वचनविषयमितिगाथार्थः ॥९२॥ अथ त्रिविधं द्विविधं च व्यक्तीकरोति—

**अहिअं१ ऊणं२ अजहट्ठाणं३ चुस्सुत्तमेव किरिआहिं । उम्मग्गदेसणामग्गनासणेहिं दुहा वयणं ॥९३॥**

अधिकं१ ऊनं२ अयथास्थानं३ च उत्सूत्रमधिकारात्क्रियाविषयमेवकारो व्यवहितः संबध्यते क्रियाभिरेव स्याद्, अयं भावः—तीर्थकृदुक्तक्रियासु निजबुद्ध्या किञ्चिदधिककरणं तदधिकमुच्यते, एवं न्यूनकरणमपि, या क्रिया यत्र स्थाने भणिता तस्यास्तदतिरिक्तस्थाने करणमयथास्थानमिति, तथोन्मार्गदर्शनमार्गनाशाभ्यां वचनं—वचनविषयमुत्सूत्रं द्विधा भवति, एतच्च तीर्थकृद्भाषितादधिकन्यूनभाषणाभ्यामेवेति गाथार्थः ॥९३॥ अथ द्वारगाथायुग्ममाह—

सूत्रेऽपि–पर्युपणाकल्पसूत्रेऽपि, अपिरेवार्थे, सूत्र एव लभ्यत,
ल्याणकमस्ति, तच्च 'पंचहत्थुत्तरे' त्तिवचनैः सिद्धान्तप्रकटाक्षरैः
इत्येवं निजवचनचातुर्येतिगाथार्थः ॥९७॥ अथ जिनवल्लभं दूषयितुं प्रतिबन्दीमाह—

**न मुणइ गअं वयण उसभेणं पंच उत्तरासाढे। अभिईछट्टेत्ति समं हविज्ज रज्जाभिसेओऽवि ॥९८॥**

जिनवल्लभो न जानात्येतद्वचनं–वक्ष्यमाणागमवाक्यं, कीदृशमित्याह–'उसभे ण' मित्यादि "उसभे णंअरहा कोसलिए पंचउत्त-
रासाढे अभिइछट्ठे होत्थ' त्ति(२५-२३) श्रीजम्बूद्वीपप्रज्ञप्तौ समं–तुल्यमर्थात् पंचहत्थुत्तरे इत्यादिवचनेन, तथा सति राज्याभिषेकोऽपि–
शक्रकृतश्रीऋषभराज्याभिषेकोऽपि भवेत्, किं?–कल्याणकमितिगम्यमित्यक्षरार्थः। भावार्थस्त्वयं–"समणे भगवं महावीरे पंचह-
त्थुत्तरे होत्था, तंजहा–हत्थुत्तराहि चुए चइत्ता गब्भं वक्कंते" इत्यादिश्रीपर्युषणाकल्पवाक्यमवलम्ब्य कल्याणकप्रतिबद्धत्वाच्छक्रजी-
तत्वाच्च गर्भसंहरणमपि कल्याणकमिति जिनवल्लभविकल्पितवचः, तत्रैवं वक्तव्यं–ननु भो जिनवल्लभ! यदि कल्याणकाधिकार-
प्रतिबद्धत्वाच्छक्रजीतत्वाच्चेति संहरणस्यापि कल्याणकत्वं तर्हि सुतरामद्भुतपुण्यप्रकृतिजन्यस्य श्रीऋषभराज्याभिषेकस्यापि कथं न
कल्याणकत्वं?, तत्राप्येवंविधव्यतिकरस्य सद्भावात्, तथाहि–"उसभे णं अरहा कोसलिए पंचउत्तरासाढे अभीइछट्ठे होत्थ" त्ति
सूत्रस्य व्यक्तिर्यथा 'उत्तरासाढाहि चुए चइत्ता गब्भं वक्कंते, उत्तरासाढाहिं जाए, उत्तरासाढाहिं रायाभिसेअं पत्ते, उत्तरासाढाहिं
अगाराओ अणगारिअं पव्वइए, उत्तरासाढाहिं अणंते जाव समुप्पण्णे, अभिइणा परिणिव्वुए" त्ति श्रीपर्युषणाकल्पपाठसादृश्यं श्रीजम्बूद्वी-
पप्रज्ञप्तावपि, अत्र यथा गर्भसंहरणं शक्रजीतस्तथा प्रथमतीर्थकृद्राज्याभिषेकोऽपि शक्रजीत एव श्रीहारिभद्र्यामुक्तः, तस्माज्जन्मादि-
वदनाश्चर्यभूतस्य श्रीऋषभराज्याभिषेकस्यापि त्वया कल्याणकत्वमभ्युपगन्तव्यं स्यादितिगाथार्थः ॥९८॥अथ खरतरः शङ्कते—

णणु कप्प णो भणिओ रज्जभिसेओ अ उसभस्सामिस्स । संहरणं पुण सव्वत्थ वीरचरिए कहं तुज्झ? ॥९९॥

ननु ऋषभस्वामिनो राज्याभिषेकः 'कप्पे'त्ति पर्युषणाकल्पे न भणितः, तथाहि 'तेणं कालेणं तेणं समएणं उसमे अरहा कोसलिए चउउत्तरासाढे अभीईपंचमे होत्थ'त्ति, संहरणं पुनः सर्वत्र—यावन्ति वीरचरित्राणि तेषु सर्वेष्वपि गर्भसंहरणस्योक्तत्वात् कथं तौल्यं ऋषभचरित्रेण महति ?, नाभाक राज्याभिषेके कल्याणकत्वापीतिपूर्वपक्ष इतिगाथार्थः ॥९९॥ अथ तौल्यं दर्शयन् सिद्धान्तयति—

इअ चे सुणाहि सुंदर! पंचासगसुत्तमुत्तजुत्तीए । हत्थुत्तरजोगेणं चउरो तह साइणा चरमो ॥१००॥

इति चेत्—यदि प्रागुक्तं तर्हि हे सुन्दर! शृणु पञ्चाशकसूत्रं श्रीहरिभद्रसूरिकृतं पर्युषणाकल्पोक्तऋषभचरित्रवदुक्तयुक्त्या भणितमिति, तद्भणति—'हत्थुत्तरे'त्यादि, तथाहि—पंच महाकल्लाणा सव्वेसिं जिणाण होंति नियमेण । भुवणच्छेरयभूआ कल्लाणफला य जीवाणं ॥१॥ गब्भे१ जम्मे अ तहा२ निक्खमणे३ चेव णाण४ निव्वाणे५। भुवणगुरूण जिणाणं कल्लाणा हुंति णायव्वा ॥२॥ तेसु अ दिवसेसु धण्णा देविंदाई करिंति भत्तिनया। जिणजत्तादि विहाणा कल्लाण अप्पणो चेव ॥३॥ इअ ते दिवसा पसत्था ता सेसेहिंपि तेसु कायव्वं। जिण जत्तादि महरिसं न अ इमे वद्धमाणस्स ॥४॥ आसाढसुद्धछट्ठी १ चित्ते तह सुद्धतेरसी २ चेव । मग्गसिरकिण्हदसमी ३ वेसाहे सुद्धदसमी य ४ ॥५॥ कत्तिअकिण्हे चरिमा गब्भाइदिणा जहक्कमं एत्थ। हत्थुत्तरजोएणं चउरो तह साइणा चरमो ॥६॥ अहिगयतित्थविहाया भग वंति निद्दंसिआ इमं तस्स। सेसाणवि एवं चिअ निअनिअतित्थेसु विण्णेआ ॥७॥ इतिश्रीयात्रापञ्चाशके, तद्वृत्तिर्यथा 'पंच'त्ति पञ्चैव महाकल्याणानि—परमश्रेयांसि सर्वेषां सकलकालनिखिलनरलोकभाविनां जिनानाम्—अर्हतां भवन्ति नियमेन—अवश्यम्भावेन, तथा वस्तुस्वभावत्वात्, भुवनाश्चर्यभूतानि—त्रिभुवनजनानन्दहेतुत्वात्, तथा कल्याणफलानि—निःश्रेयससाधनानि, च भवन्ति, जीवानां—

समुच्चये तथेतिवाक्योपेक्षे निष्क्रमणे—अगारवासान्निर्गमने चेवत्ति समुच्चयाव-
प्राणिनामिति॥ गर्भे—गर्भाधाने जन्मनि—उत्पत्तौ च: समुच्चये तथेतिवाक्योपेक्षे निष्क्रमणे—अगारवासान्निर्गमने चेवत्ति समुच्चयाव-
धारणार्थावुत्तरत्र संभन्त्स्येते, ज्ञाननिर्वाणे समाहारद्वन्द्वत्वात्केवलज्ञाननिर्वृत्त्योरेव च, केषां गर्भादिष्वित्याह—'भुवनगुरूणां' जगज्ज्ये-
ष्ठानां जिनानाम्—अर्हतां, किमित्याह—कल्याणानि—स्व:श्रेयाणि भवन्ति—वर्त्तन्ते ज्ञातव्यानि—ज्ञेयानीतिगाथार्थ:। ततश्च 'तेसु'त्ति
गाहा, तेषु पुनर्दिनेषु—दिवसेषु येषु गर्भादयो बभूवु: धन्या—धर्मधनं लब्धार: पुण्यभाज इत्यर्थ: देवेन्द्राद्या:—सुरासुरेन्द्रप्रभृतय:
कुर्वन्ति—विदधति भक्तिनता:—बहुमाननम्रा:, किमित्याह—जिनयात्रादि—अर्हदुत्सवपूजास्नात्रप्रभृति, कुत इत्याह—विधानाद्—विधिना,
अथवा जिनयात्रादिविधानानि, अथ कथंभूतं जिनयात्रादीत्याह-'कल्याण' स्व:श्रेयसं, कस्येत्याह-आत्मन:-स्वस्य, चैवशब्दस्य समुच्चयो-
ऽर्थ:, नन्वपरेषां चेति गाथार्थ:॥ यत एवं-'इअ'त्ति गाहा, इतो हेतो: पूर्वोक्तात् जीवानां कल्याणफलत्वादिलक्षणात् ते इति येषु जिनगर्भा-
धानादयो भवन्ति दिनानि-दिवसा:, दिनशब्द: पुल्लिङ्गोऽस्ति, प्रशस्ता:-श्रेयांस:, तत: किमित्याह-'ता' इति यस्मादेवं तस्माच्छेषैरपि—
देवेन्द्रादिव्यतिरिक्तैर्मनुष्यैरपि, न केवलमिन्द्रादिभिहेवेत्यपिशब्दार्थ:, तेषु गर्भादिकल्याणकदिनेषु कर्त्तव्यं जिनयात्रादि वीतरागोत्स-
वपूजाप्रभृतिकं वस्तु महर्ष—सप्रमोदं यथा भवति, कानि च तानि दिनानीत्यस्यां जिज्ञासायां सर्वजिनसंबन्धिनां तथा वक्तुमशक्यत्वाद्व-
र्त्तमानतीर्थाधिपतित्वेन प्रत्यासन्नत्वादस्यैव श्रीमहावीरस्य तानि विवक्षुराह—'ते अ'त्ति तानि पुनर्गर्भादिदिनानि इमानि—वक्ष्यमा-
णानि वर्द्धमानस्य—महावीरनाजिस्य भवन्तीतिगाथार्थ:। 'आसाढ' गाहा, आषाढशुद्धषष्ठी—आषाढमासशुक्लपक्षे षष्ठीति थिरेकं दिनं१
एवं चैत्रमासे तथेतिसमुच्चये शुद्धत्रयोदश्येवेति द्वितीयं२ चैवेत्यवधारणे, तथा मार्गशीर्षकृष्णदशमीति तृतीयं३ वैशाखशुद्धदशमीति
चतुर्थं४, चशब्द: समुच्चयार्थ:, कार्तिककृष्णे चरमा—पञ्चदशीति पञ्चमं५, एतानि किमित्याह—गर्भादिदिनानि—गर्भजन्मनिष्क्रमणज्ञा-

नानिशानदिवसा यथाक्रमं—क्रमणैव तान्यनन्तरोक्तानि,एषां च मध्ये 'हस्तोत्तरायोगन' हस्त उत्तरो यासां हस्तोपलक्षिता वा उत्तरा-उत्तरफल्गुन्यस्तासामियोगः—संबन्धमेति हस्तोत्तरायोगस्तेन करणभूतेन चत्वार्येतानि दिनानि भवन्ति, तथेति समुच्चये, स्वातिना—स्वातिनक्षत्रेण युक्तः परमोऽसि—परमकल्याणकदिन इति प्रकृतस्याऽऽख्यायार्थः॥ अथ किमिति महावीरस्यैवैतानि दर्शितानी त्यत्राह—'अहिगय'गाहा, अधिगततीर्थविधाता—वर्धमानप्रवचनकर्ता भगवान् श्रीमहावीर' इतिहेतोर्निदर्शितानि उक्तानीमानि कल्याणकदिनानि तस्य—वर्धमानस्य, अथ शेषाणां तान्यतिदिशन्नाह—शेषाणामपि—न वर्धमानस्यैव, ऋषभादीनामपि वर्धमानाव स्था विधेयतयेति। इह यान्येव गर्भादिदिनानि जिनानां तान्येव सर्वभारतानां सर्वैरावतानां च, यान्येव चैतेषामस्यामवसर्पिण्यां तान्येव च भ्यस्यमनोत्सर्पिण्यामपीति गाथार्थः॥ इति श्रीअभयदेवसूरिकृतगाथात्रयभावार्थवृत्तौ,अत्र पञ्चानामेव कल्याणकानां मासा पक्षास्तिथयो नक्षत्राणि प्रोक्तानि, तत्र यदि गर्भसंहरणदिनोऽपि कल्याणकतया आराध्योऽभविष्यत् तर्हि तस्यापि मासादिकमवक्ष्यत्, तत्र नोक्तमतो गर्भापहारो न कल्याणकमिति सिद्धं श्रीऋषभचरित्रसाम्ये श्रीमहावीरचरित्रस्यापि, यथोपलक्ष पार्श्वीर्षाभिमतजिनवल्लभकृतकल्याणकस्तवनेऽपि—"सिअनवमि सुविहिसुक्खो नेमिस्सासोअमावसा नाण पुण्णिमि चुइ नमि जिणवल्लह पयं देसु पणयाय ॥१॥" इत्यत्राश्विनमासे त्रयोदश्यां कल्याणकं नोक्तम्, अत श्रीमहावीरस्य पञ्चैव कल्याणकानि तत पञ्चकल्याणकवादी तीर्थंकराय एवेतिगाथार्थः॥१००॥ अथ पञ्चपञ्चाशकव्याख्यानेनापि गर्भसंहरणस्य कल्याणकभाव दूषयन्नाह—

वक्खाणं पुण पज्जोसवणाकप्पस्स चुण्णिवण्णेसु। छण्हं वत्थूणं चिअ अण्णत्थवि तयणुसरणंति ॥१०१॥
व्याख्यानं पुनः पर्युषणाकल्पस्य चूर्णिवर्णेषु—"छण्हं वत्थूणं 'चिअ'त्ति अवधारणे छण्हं वत्थूणमेव, तथाहि—'जो भगवया उस-
भसामिणा सेसतित्थगरेहि अ भगवतो वद्धमाणसामिणो चयणाईणं छण्हं वत्थूणं कालो णाओ दिट्ठो वागरिओ अ तेणं कालेणं"
इत्यादि श्रीपर्यु० चू०,एवं दशाचूर्णावप्ययमेव पाठः, अन्यत्रापि—आचाराङ्गादौ तदनुसरणं—चूर्ण्यनुसारेणैव बोध्यं, तथाहि—"पंच-
हत्थुत्तरे होत्थ"त्ति आचाराङ्गसूत्रं, तत्र टीका यथा—हस्त उत्तरो यासामुत्तरफाल्गुनीनां ता हस्तोत्तरास्ताश्च पञ्चसु स्थानेषु गर्भाधान-
संहरणजन्मदीक्षाज्ञानोत्पत्तिलक्षणेषु संवृत्ताः अतः पञ्चहस्तोत्तरो भगवानभूदिति, अत्र पञ्चसु स्थानेष्वित्येव व्याख्यातं,तच्च चूर्ण्य-
नुसार्येव, न पुनः पञ्चसु कल्याणकेष्विति, एतेन क्वचित् कल्पावचूर्णौ संदेहविषौषध्यनुवादेन कल्याणकपट्कव्याख्यानं तदना-
भोगादेवेति प्रदर्शितं बोध्यम्, अनाभोगस्तु ग्रन्थान्तरानुपयोगे महतामपि न विरुद्धः, यदागमः—"नहि नामानाभोगश्छद्मस्थस्ये-
ह कस्यचिन्न स्याद्। ज्ञानावरणीयं हि ज्ञानावरणप्रकृति कर्म ॥१॥" इत्यादि, नचैवं क्वचिदंशे श्रुतानुपयोगो लाघवाय,गौतमस्वामि-
नोऽपि श्रुतानुपयोगस्यागमे प्रसिद्धत्वात्,तस्मादनाभोगादन्यत्र तीर्थसम्मतपुरुषसम्मतिमनादृत्य सूत्रव्याख्याने प्ररूपणे च तीर्थाशा-
तना तीर्थबाह्यता च स्यादेव, नचैवं जिनप्रभस्याप्यनाभोगः शङ्कनीयः,कुपाक्षिकसमुदायान्तर्वर्त्तित्वेन जिनप्रभस्याप्यभिनिवेशस्य
विद्यमानत्वात्. यतो यत्र कुपाक्षिके यो वर्त्तते स तन्मूलभूताचार्यगतमिथ्यात्ववान भवति, यथा अत्र यावत् दिगम्बरसमुदाया-
न्तर्वर्त्ती शिवभूतिगताभिनिवेशमिथ्यात्ववान्,कल्याणकपट्कप्ररूपणामधिकृत्य तु इवे मूलभूतो जिनवल्लभो बहु विख्यातः, सच
सङ्घेन निवार्यमाणोऽपि षष्ठं कल्याणकं प्ररूपयन् शिवभूतिवदभिनिवेशवानेव, अतएव तत्स्थापितसमुदायावलम्बी खरतरमताक-

र्यको जिनदत्तोऽपि घुणाक्षरन्यायेन जिनवल्लभमभिनिवेशमन्तं व्यक्तितवान्, तथाहि,—"असहाएणावि विही पसाहिओ सो न सेस सूरीहिं। लोअमयहऽवि भयइ पुच्छ सुय जिणमयण्णू। हिं ॥१॥" इतिगणधरसार्द्ध०१२२ गाथा, तद्वृत्तिर्यथा—ततो येन भगवताऽस हायेनापि एकाकिनापि परकीयसहायनिरपेक्षम्, अपिर्विस्मये, अतीवाश्चर्यमेतद्, विधि—मागमोक्त' षष्ठकल्याणकरूपचैत्यादिविषय' प्रमदर्शितम प्रकार-प्रकर्षेण इदमित्थमेव भवति योऽत्रार्थेऽसहिष्णु स यावदीत्सिति स्कन्धास्फालनपूर्वकं भाषितः-सकललोकप्रत्यक्ष प्रकाशित', यो न शेषसूरीणाम्, अज्ञातसिद्धान्तरहस्यानामित्यर्थः, लोचनपथेऽपि दृष्टिमार्गे, आस्तां श्रुतिपथे, भजति—याति, उच्यते पुन जिनमतज्ञः—भगवद्वचनवेदिभिरिति गा० वृत्तो, एवंविधवक्ता स्वनाभोगवान् न भवति, किन्त्वभिनिवेशवानेवेति जिनदत्तेनापि यत्पित, तदृच्छाभ्युपगन्तव्येनात्मनोऽपि "पूयइ मूलपडिमंपि साविआ चिइनिवासिसम्मयं। गब्भावहारकल्लाणगंपि नहु होइ वीरस्स ॥१॥" इत्युत्सूत्रपदोद्घाटनलक्षणमा तथा भाषित, किंच—जिनवल्लभ एव तावदित्थं प्रष्टव्य —भो जिनवल्लभ! पञ्चकल्याणकवादिन श्रीहरिभद्रसूरिप्रभृत्य तीर्थसम्मता उत नेति, नेति वक्तुमशक्यत्वेन तीर्थसम्मतत्व सिद्धं तीर्थमपि पञ्चकल्याणकवाचेव सिद्धं, तथा च अनुशासनाविधि निष्ठुरवचसा भवानपि पूर्वाचार्यान् तिरस्कृत्य तीर्थासम्मतं षष्ठं कल्याणकं प्ररूपयन् कथं स्व तीर्थसपर्य-मीति स्वयमेव पर्यालोचय, एतेन सिद्धान्तपारगामी जिनवल्लभसूरिरिति यज्जिनदत्तापत्यीयानां वचस्तदपि निरस्तं, 'पंचहत्थुत्तरे' इत्यादिवचनेन षष्ठ कल्याणकं व्यवस्थापयन् सिद्धान्तगन्धेनापि शून्यो जिनवल्लभ इत्येव प्रवचनविरामप्युपसिद्धत्वादित्यलं प्रपञ्चेनेतिगाथार्थः॥१०१॥ अथ श्रीवीरचरित्रे सर्वत्रापि गर्भसंहरणपाठनियम युक्तिप्रदर्शनपुरस्सरमुपसंहरन्नाह—

गम्भा उ साहरणं चरिए निअमेण संगहं गहणं। तत्थाणुरूपम वीरं तिम्मला पसत्थसि ॥१०२॥

तस्मात्प्रागुक्तप्रकाराच्चरिते—श्रीमहावीरचरिते नियमेन गर्भसंहरणमथात्तद्भणनं यत् तत् सगतिघटनं—पूर्वापरसंबन्धघटकमित्यर्थः
तदेवाह—'देवाणंदे' इत्यादि, यतो गर्भसंहरणमत एव देवानन्दोत्पन्नं—देवानन्दाया ब्राह्मण्याः कुक्षाववतीर्णं श्रीवीरं त्रिशला प्रसूते-
तिअ संगतिः,अन्यथा यस्याः कुक्षौ समुत्पन्नः सैव प्रसूतेति वक्तव्यं स्यात्,तच्च न जातमिति संगतिघटनाय गर्भसंहरणभणनमाव-
श्यकमितिगाथार्थः ॥१०२॥ अथ राज्याभिषेकेऽप्येवमास्तामिति पराशङ्कामपहरति—

नेवं रज्जभिसोए भयणा भणिआ य तेण तक्कहणे। तेणोभयंपि कल्लाणगव्वएसेण रहिअंति ॥१०३॥

राज्याभिषेके तावदेवं न भवति—असंगतिर्न भवति तेन कारणेन तत्कथने भजना भणिता, क्वचित् "चउउत्तरासाढे" क्वचिच्च
'पंचउत्तरासाढे'त्ति, तेनोभयमपि—गर्भसंहरणं राज्याभिषेकश्चेति द्वितयमपि कल्याणकव्यपदेशेन रहितमिति गाथार्थः ॥ ३ ॥
अथ पुनरप्यधिकोत्सूत्रमाह—

रयणीपोसहिआणं सामइअं सुवणऽणंतरं भणिअं। जिनवल्लहेण विहिणा सुत्ते सामइअं न हवे ॥१०४॥

रात्रिपौषधिकानां स्वपनानन्तर—निद्रावमाने जिनवल्लभेन सामायिकदण्डोच्चारादि विधिना भणितं,तथाहि—"तओ राइअचरम-
जामे उट्ठिऊण इरिआवहिअं पडिक्कमिअ सक्कत्थएण चेइए वंदिअ पुव्वं व पोत्ति पेहिअ नमुक्कारपुव्वं सामाइअसुत्तं कड्ढिअ संदिसा-
विअ सज्झायं कुणइ, जाव पडिक्कमणवेल"त्ति जिनवल्लभेन पौषधविधिप्रकरणे भणितं, तत्र युक्तिमाह—'सुत्ते'त्ति येन
कारणेन सुप्ते सामायिकं न भवेत्, सामायिकं कृत्वा यदि स्वप्यात्तर्हि सामायिकरहितो भवेदितिगाथार्थः ॥ १०४ ॥ अथो-
क्तयुक्तिं निराकरोति—

न मुणइ गर्भ पासहपज्जवसाण तहेव उच्चारो। ज पोसहमि कप्पइ कप्पइ तं तस्स सामइए ॥१०५॥

न जानाति जिनसमय इतिगम्यं, किं न जानाति?—एतत्सामायिकं पौषधसहचरितं पौषधपर्यवसानं—पौषधसमानकालीनमेव, तथपायारोऽपि "जाव पोसह प ज्जुवासामी"ति पाठात्, तेन न स्वल्पकालीनं, येन यत्पौषधे कल्पते तदेव तस्य पौषधसंबन्धिनि सामायिकेऽपि कल्पत इतिगाथार्थः ॥१०५॥ अथ कल्पते प्रवचनमाह—

सणेरागमवयण उद्दिट्ठकडपि मुजई सड्ढो। कपसामइओजवि निसीहभासचुण्णिप्पमुहगंथे ॥१०६॥

यत कारणेन यत्पौषधे कल्पते इत्यादि तत कारणेन उद्दिष्टकृतमपि—पौषधिकमुद्दिश्य निष्पादितमप्यशनादिक कृतसामायिकः श्राद्धो भुङ्क्ते इत्यागमवचन, निशीथभाष्यचूर्णिप्रमुखग्रन्थ, यत—"कामी मयरंगणओ पूलपइण्णा सि होइ दट्ठवा। छेअणमेअणक-रण उद्दिट्ठकडपि सो भुंज ॥१॥" इतिश्रीनिशीथभाष्य उद्दे१५, एतच्चूर्णिस्तु राजसमवक्तव्यताधिकारे लिखितेतिबोध्यम्, एतनाधुनिकैः पौषधिकानां भोजन निषिध्यत तदपि निराकृतमिति बोध्य,कृतसामायिकस्य भोजनस्य निशीथचूर्ण्यादावुक्तत्वादिति-गाथार्थ ॥१०६॥ अथ व्यतिरेके दोषमाह—

भण्णाहऽवहिमपुण्णे लोव वयभंगपावय पयइ। सण तम्मयसावयसामइए पोसहे असुहे ॥१०७॥

अन्यथा-कल्प्याकल्प्य आश्रित्य यदि पौषधसाम्यं न स्यात्, किंतु निद्रानन्तरमपि पौषधस्थिति, न पुन सामायिकस्येति, तमपरो अपूर्ण सामायिकेऽपि मनसइत्यादिक भङ्गमेव स्यात्, तेन कारणेन तन्मतभावकस्य पौषधे सामायिकमशुभं स्यात्, पौष धावधिकेऽपि सामायिकेऽभ्युपगतेऽपि निद्रोदये विनाशात्, पापकहेतुत्वादितिगाथार्थ ॥१०७॥ अथ जिनाज्ञया निद्राऽपि संयम

हेतुः कुतः सामायिकविलोपकारिणीतिदर्शयति—

निद्दाविअ गुरुआणापुव्वं सा चेव धम्मअणुकूला। जह संथारापोरसिपढणंतरसाहुनिद्दत्ति ॥१०८॥

निद्राऽपि च पौषधसामायिकव्रतो रात्रिप्रथमपौरुष्यनन्तरं गुर्वाज्ञापूर्वं स्यात्, सा च धर्मानुकूलैव, प्रकृतधर्मप्रसाधनीत्यर्थः,

तत्र दृष्टान्तमाह—यथेत्यादि, यथा संस्तारकपौरुषीपठनानन्तरं साधुनिद्रा, सा च संयमाधारशरीरस्थितिहेतुरेव, यदुक्तं—यद्यपि

क्वचिदाचार्यानुज्ञाता द्वितीयपौरुष्यादौ दीर्घसंयमाधारशरीरस्थित्यर्थं निद्रावशोपगता भवन्ति तथापि सदा जागरा एवेति श्रीआचा-

राङ्गे शीतोष्णीयाध्ययने प्रथमोद्देशके, एवंविधा निद्रा कथं पौषधिकानां सामायिकविगमहेतुः ?, न कथमपीत्यर्थः, तेन जिनवल्ल-

भेन रात्रिपौषधिकानां पश्चिमे यामे यत्सामायिककरणं निर्दिष्टं तद् दुष्टमेवाधिकक्रियारूपत्वादितिगाथार्थः ॥१०८॥ अथ सामायिक-

पौषधयोर्नमस्कारत्रयपूर्वकं त्रिर्दण्डकोच्चारणं यत् तदपि खरतरमतेऽधिकमुत्सूत्रं यथा स्यात्तथा दर्शयति—

सामाइअपोसहेसुं उच्चारो सावयाण तिक्खुत्तो। जुत्तोत्ति अ जिणदत्तो भणइ जहा अणुवउच्चारो ॥१०९॥

सामायिकपौषधयोरुच्चारः 'तिक्खुत्तो'त्ति त्रिकृत्वः—त्रीन् वारान् युक्त इति जिनदत्तो भणति, तत्र दृष्टान्तमाह—यथेत्यादि, यथा

श्रावकाणामणुव्रतोच्चारः—स्थूलप्राणातिपातविरमणादौ "अहण्णं भंते! तुम्हाणं समीवे थूलगं पाणाइवायं" इत्यादिवारत्रयमुच्चार्यते तथा

सामायिकमपीतिगाथार्थः ॥१०९॥ अथ जिनदत्ताभिप्रायं तिरस्कुर्वन्नाह—

न मुणइ मूढो लोगट्ठिइंपि बहुकालसज्झ मह कज्जं। तत्तुल्लं कहमिअर तिहिरिक्खपलोअणाईहिं ॥११०॥

मूढः—अभिनिवेशी जिनदत्तो लोकस्थितिमपि न जानाति, यतस्तिथिनक्षत्रप्रलोकनादिभिः बहुकालसाध्यं यत् महत्कार्यं तत्तुल्य

मदितरद् अन्यप्रलमायमल्पं च कथं स्यात्? न कथमपीत्यर्थः, अयं भाव —महत्कार्ये तावद् दूरग्रामान्तरगमनोद्वाहादिक, तच्च गुमतिथिनक्षत्रमन्त्रादिफलविलोकनपुरस्सरमेव क्रियते, न तथा तदितरद् आपणादिगमनभोजनादिकार्यमपि, एवं यावज्जीवाभिग्रह रूप विषयनियतादिक प्रतिपत्तुकामो मुहूर्तादिपुरस्सरं प्रतिपद्यते, न तथाऽल्पकालीनं सामायिकमपीतिगाथार्थः॥ ११० ॥
अथातिप्रसङ्गमाह—

भण्णइ थासन्नसेयप्पमुहे उववासमाइउच्चारे। मुण्डइ तम्मइ मग्गे भण्णंपि मसवयाइव ॥१११॥

अन्यथाऽल्पकालीनस्यापि सामायिकस्यदि त्रिरुच्चारोऽभ्युपगम्यते तर्हि अणुमतोच्चारादिकम् आस्तामन्यत्, उपवासाद्युच्चार पामक्षपणमुख—चामक्षपणादि समग्रोऽपि नन्दिविधिपूर्व्यते—अधिकृतस्यो भवेत्, किंच—यथा सामायिकाद्युच्चारेऽणुमतोच्चारो दृष्टान्ती क्रियते तथाऽणुव्रतोच्चारे महाव्रतोच्चारोऽपि दृष्टान्तीकर्तव्यः स्यात्, तथा च अन्नपि—अन्यदपि शिरोमुण्डनादिकमपि तन्मते मार्गे जिनदत्ताभिमतप्ररूपणालक्षणे पुंक स्यात्, तथाऽस्याप्यनभिमततो पत्रिकाशिरोमुण्डनाद्यसामायिकमपीतिगाथार्थः ॥१११॥
अथ जिनवल्लभोक्तमस्यत्या दूषयितुमाह—

पोसहविहिंमि जिणवल्लहेण इगवयणभणणओ इक्को। सइगमाउच्चारो परिभसतो तेण पगडोऽवि ॥११२॥

पौषधविधौ—पौषधविधिप्रकरणे जिनवल्लभेन—विधिधर्मनामसतारूपकेण एकवचनभणनतः 'नमुक्कारसुचरिअ' इत्यादिद्वितीये कसमनमणनेन दनकोच्चाराऽप्यक्कार प्रकट", तथाहि "पोसहमुहणत्ति पडिलेहिमीति भणिअ बीअखमासमणपुव्वं पोत्ति पडिलेहिअ समासमणेण पोसहं संदिसाविय बीअखमासमणेण ठाएमित्ति भणिता खमासमणं दाउ उद्धठिओ ईसिमोणयकाओ गुरुवयणमणु

भणंतो नमोक्कारमुच्चरिअ भणइ- करेमि भंते। पोसहं इत्यादि यावद्वोसिरामित्ति, एवं सामायिकेऽपि पंचमंगलं पढित्ता करेमि भंते !,' इत्याद्येवंविधोऽपि तेन जिनदत्तेन त्यक्तः, एकवारमुच्चारं परित्यज्य त्रिवारमभ्युपगत इत्यत्र द्विरुच्चरणमधिकमितिगाथार्थः ॥११२॥

अथ पुनरप्यधिकमुत्सूत्रमाह—

**साहूणं उवहाणं गिहिव्व अहिअंति जेण तक्किच्चं । आवस्सयजोग्गं सिद्धं सिद्धंतबुद्धीणं ॥११३॥**

गृहिवत्—श्रावकवत् साधूनामप्यावश्यकश्रुताराधनार्थमुपधानवहनं यत् तदधिकं, येन कारणेन तत्कृत्यं षडावश्यकाराधनलक्षणं श्रीआवश्यकयोगेनैव सिद्धं, केषां ?—सिद्धान्तबुद्धीनां तत्त्वविदां, न पुनः कुपाक्षिकाणामपि, ननु स्वयमुपधानोद्वहनमन्तरेण कथं श्रावकाणामुद्वाहयितुं शक्यते इति चेत् मैवं, यतः सामायिकपौषधद्वादशव्रतोच्चारादिष्वपीयमेव रीतिः प्रसज्येतेति स्वयं विचारणीयमितिगाथार्थः ॥११३॥ अथ पुनरपि तदाह—

**उस्सग्गेण कसेल्लयजलगहणं साहुणावि ही मोहा । तंचिअ मट्टिअभायणसंगइअं कह णु तसजयणा?॥११४॥**

उत्सर्गेण—मुख्यवृत्त्या कसेल्लकजलग्रहणमुपलक्षणात् काथजलादिपरिग्रहः, ही इति खेदे, मोहात्—चारित्रमोहनीयोदयात् तथा श्रद्धानपुरस्सर तथाविधजलग्रहणं साधोरपि, श्रावकाणां सुतरामित्यपिशब्दार्थः, तथापि—कसेल्लकादिजलग्रहणमपि च मृत्तिकाभाजनसंगतिकं—कुण्डादौ प्रक्षिप्तं, नु इति वितर्के, कथं त्रसजन्तुयतनेति ?, न कथमपीत्यर्थः, यतस्तथाविधं शीतलजलं कुम्भादिमृत्तिकाभाजनगतं प्रायः शीघ्रमेव त्रसादिजन्तुयोनिः स्यात्, तद्यतना साधूनां न संभवति, ननु शुद्धविकटमुष्णोदकं वर्णान्तरादिप्राप्तं शुद्धजलं वा इति श्रीकुलमण्डनसूरिकृतपर्युषणाकल्पावचूर्णौ तथा संदेहविषौषध्यां चोक्तं कथं कसेल्लादिनीरं न गृह्यते इति-

चेद्, उच्यते, सिद्धान्तेऽदृश्यमानत्वात् तथा वीर्थे तथाप्रवृत्तेरनुपलम्भाच्च, यत्तु श्रीकुलमण्डनसूरिवचनं तत्तु सन्देहविषौषधी लिखितमेव लिखितं तदनुवादरूपं, न पुनस्तत्कृतं व्याख्यानं, संदेहविषौषधिकारस्तु जिनप्रभसूरिः स्वमतप्रवृत्त्यनुसारेणैव व्याख्यातवान्, न पुनरागमानुसारेण, यतः पर्युषणाकल्पचूर्णौ शुद्धविकटग्रहणेनोष्णोदकमेव व्याख्यातं, न तु वर्णान्तरादिप्राप्तं चेति, तथा श्रीअभयदेवसूरिणा स्थानाङ्गवृत्तावपि तथैव व्याख्यातम्, एवं निशीथचूर्णावपि बोध्यं, "अण्णयरं वा तहप्पगारं पाणगजायं" इत्यस्य श्रीआचाराङ्गसूत्रस्य वृत्तौ अन्यतरशब्देन आचाराङ्गोक्तमेव द्राक्षापानीयादि व्याख्यातमस्ति, न तु क्वाथकाञ्जिकादिनीरमपि, तथा "वण्णंतरयाइपत्तं फासुअसलिलं च तयभावे" इति श्रीदेवसूरिकृतयतिदिनचर्यायां, प्रवचनसारोद्धारे तु सामान्यतो वर्णान्तरादिप्राप्तमचित्तं, न तु व्यक्तमिति, तदपि च तदभावे इति वचनादपरेषां सर्वजलानामभावे सत्येव ग्राह्यं, न पुनर्मुख्यतया तद्ग्राह्यमुक्तम्, अपवादतोऽपि येन केनापि वस्तुना यथा तथा वर्णान्तरापादितं उदकं ग्राह्यं यदि तर्हि प्रथमवृष्ट्यादौ रजोगडुलनदीतटागादिगतमपि जलं ग्राह्यं स्यात् तस्यापि वर्णान्तरादिप्राप्तत्वाविशेषात्, अथवा देवकुसुमभस्मकर्पूरादिद्रव्ययोगतोऽपि तथाभूतं जलं ग्राह्यं भवेत्, तच्चानुचितमिति तत्रापि सम्मतं, ननु तर्हि वर्णान्तरादिप्राप्तशब्देन किमुच्यते इति चेद्, उच्यते, ओघनिर्युक्तौ यावन्निष्पन्नं यत्रौदनाद्युदकमुक्तमस्ति तदेव गृहीतं ग्राह्यं, किञ्च–यत्र क्वापि नीरविचारस्तत्र सर्वत्रापि प्रायः काञ्जिकादिव्याख्या न प्रयुक्तम्, न पुनः क्वाथकसल्लकादिना तथाभूतमपि, खरतरैस्तु सत्यपि काञ्जिकादिनीरे मुख्यवृत्त्या तदग्राह्यं स्यादलाम्पट्यात्, किञ्च–मुख्यवृत्त्या कसेल्लकादिनीरग्रहणे आयामाम्लशब्दनिष्पत्तिरपि न संभवति, यतः श्रीआवश्यकवृत्तौ आयाम–अवश्रावणं अम्लं–तुर्यो रसस्ताभ्यां निर्वृत्तमायामाम्लमित्यायामाम्लशब्दव्युत्पत्तिरस्ति, तथा योगशास्त्रवृत्तावप्युक्तम्–आयामः–अव

श्रावणमाम्लं च तुर्यो रसः ते एव प्रायेण व्यञ्जने यत्र भोजने ओदनकुल्माषसक्तुप्रभृतिकं तदाचामाम्लं समयभाषयोच्यते, किंच—
काथकसेल्लकादिना जलपरिणमनकालोऽपि स्वबुद्ध्या सम्यक्कथं ज्ञातुं शक्यते?, यतः "वण्णरसगंधफासा जह दव्वे जम्मि उक्कडा
हुंति,। तह तह चिर न चिट्ठइ असुभेसु सुभेसु कालेसु ॥१॥ इति बृहत्कल्पभाष्यं,तद्वृत्तिर्यथा—यस्मिन् द्रव्ये यथा यथा वर्णग-
न्धरसस्पर्शा उत्कटा उत्कटतरा भवन्ति तथा तथा तेन तेन द्रव्येण सह मिश्रितमुदकं चिर न तिष्ठति, क्षिप्रं क्षिप्रतर परिणमत
इति भावः, किमविशेषेण ?, नेत्याह—ये अशुभा वर्णादय उत्कटास्तेष्वेव क्षिप्रं परिण मते, ये तु शुभा वर्णादयस्तेषूत्कटेषु कालेन
परिणमते,चिरादित्यर्थः॥ इति कल्पवृत्तौ चतुर्थखण्डे पत्र१७५,शुभद्रव्यं च काथकसेल्लकादि,अतस्तत्प्रक्षेपणे नीरस्य परिणम-
नकालो न ज्ञायतेऽनुकूलत्वादेव,किंच—काञ्जिकादिजलग्रहणे जिनाज्ञैव कारणं दृश्यते, न पुनः स्वादसुखलम्पटतेति सर्वजनप्रतीतं,
काञ्जिकजलं चागमोक्तं परित्यज्य काथकसेल्लकादिजलग्रहणं तु स्वादसुखपरत्वमेव व्यञ्जयति तद्ग्राहिणां, ननु शुभद्रव्यप्रक्षेपे
परिणमनकालापरिज्ञाने सितापानीयस्याप्यग्रहणप्रसङ्ग इति चेन्मैवं, सितापानीये तु स्वादार्थं पित्तोपशमनाद्यर्थं वा सिताप्रक्षेपः
क्रियते, सा च नाल्पा संभवति, किंतु बह्वेव,अन्यथा स्वादपित्तोपशमनाद्यसंभवात्, काथकसेल्लकादिनीरं तु स्वल्पेनैव चूर्णेन क्रि-
यते, ततो न तत्परिणतिशुद्धिरल्पस्वादेऽपि गृह्यते, ततो न सितापानीयसाम्यं,किंच—किंचिद्द्रव्यं तथाविधमेव भवति यन्मधुरं स्वल्पं
च सदपि वर्णं परावर्त्तयति यथा मष्यादि, एवं छगणादिपानीये योज्यं, किंच—सिद्धान्तोक्तायामकाञ्जिकादिजलहीलनां कुर्वतः
खरतरस्य नाम्नाऽपि भिक्षुत्वासंभवः,यतः—"आयामगं चेव जवोदणं च,सीअं सोवीर जवोदगं च। नो हीलए पिंडं नीरसं तु,पंत-
कुलाइं परिवए जे स भिक्खू ॥१॥" इति श्रीउत्तरा० तादृक्पानीयग्रहणं भिक्षोर्लक्षणमुक्तं तच्च खरतरेण नाभ्युपगतं, न चान-

भ्युपगम एव,किंतु तद्ग्राहिणां शीलनाशोऽपि,यदुक्त–"मुद्धाणायपवगया" इत्यादि गणधरसार्द्धशतके १०५ गाथा,तद्वीक्ष्यपां
सपागममाधूनां वर्णनं यथा मलमलिनगात्रशौच ध्यपाश्रावभावपतन्दुलधावनाद्यिप्राहिणामेकाकिविहारिणां गुरुकुलवासत्यागिनां तप
स्विनामित्यादिवर्णन कर्मभात्मन' स्नानादिकर्म वर्णितवान् ,अवश्रावणादिशीलनेन च सिद्धान्तानभ्युपगन्तृत्वमपि,यतः सिद्धान्ते
तदनुपालनात्, तथाहि–"सेजं पुण पाणगजायं जाणेजा, तंजहा–उस्सेइम१ संसेइम२ चाउलोदगं वा३ अण्णयरं वा तहप्पगारं
पाणगजाय" इत्यादि यावत् फासुयं जाव पडिगाहेजा ॥ ५ भिक्खू२ वा समाणे सेजं पुण पाणगजाय जाणेजा, तंजहा–तिलोदग
वा४ तुसोदग वा५ जवोदग वा६ आयामं वा७ सोवीरं वा८ सुद्धवियडं वा९ अण्णयरं वा तहप्पगारं पाणगजाय" इत्यादि
यावत् भिक्खुस्स भिक्खुणीए वा सामग्गियं" इतिश्रीआचा० द्वि० श्रु० प्रथमाध्ययने सप्तमोद्देशके एतद्वीक्षकृद्यो यथा
'से' इत्यादि सुगम,पानकाधिकार एव विशेषार्थमाह–स भिक्षुर्गृहपतिकुलं प्रविष्टो य' पुन' पानकजातमेव जानीयात् ,तद्यथा 'तिलो
दकं' तिलः केनचित्प्रकारेण प्रासुकीकृतमुदकम् ,एवं तुषोदकं,तथा आचाम्लम्–अवश्यायं सौवीरम्–आरनाल शुद्धविकटं–प्रासुकम्
अन्यद्वा तथाप्रकारं द्राक्षापानादि पानकजातं–पानीयसामान्यं पूर्वमेवावलोकयेत्–पश्येदित्यादि"अत्र शुद्धविकट प्रासुकमुदकमुक्तं,
तच चूर्णिकारादिभिरुष्णोदकमेव व्याख्यातम्, अत' सामान्येन प्रासुकोक्तावपि उष्णोदकमेव ग्राह्यं, ग्रन्थान्तरसम्मतेस्तथैव द-
र्शनात्, प्रासुकस्यापि तथात्वेन विशेषितत्वाच, यदागम'–"उसिणोदग तत्तफासुयं'ति दशवै० (अ० ५उ–१–७७ सू०) अन्यच्च–
द्दन तु यस्यमाणोऽक्रमर्पितानि पानीयानि गृहीतानि, तानि चेमानि–से भिक्खू वा२ जाव समाणे से ज पाणगजायं जाणेजा
तंजहा–अंबपाणग वा१० अंबाडगपाणग वा११ कविट्ठपाणगं वा१२ मातुलुंगपाणगं वा१३ मुद्दिआपाणग वा१४ दालिमपाणगं वा१५

खज्जूरपाणग वा १६ नालिएरपाणगं वा १७ करीरपाणगं वा १८ कोहलापाणगं वा १९ आमलगपाणगं वा २० चिंचापाणगं वा २१ अण्णयरं वा तहप्पगारं पाणगजायं" इत्यादि, न पुनः कसेल्लकादीनि क्वाप्युक्तानि, तथा "वासावासं० निच्चभत्तिअस्स भिक्खुस्स कप्पंति सव्वाइं पाणाइं पडिगाहित्तए त्ति, वासा० चउत्थभत्तिअस्स० तओ पाणगाइं पडिगाहित्तए, तं०—उस्सेइमं वा संसेइमं वा चाउलोदगं वे'त्यादि" श्रीपर्यु०, इत्याद्यागमोक्तजलेषु आस्तां तावत्तन्दुलधावनादिकं जलम्, उक्तजलेष्वेव यच्छुद्धविकटशब्देनोष्णजलं यदुक्तं तदप्यवगणय्य नामग्राहेण क्वाप्यनुक्तमपि कसेल्लकग्रहणं सिद्धान्तानंगीकारकत्वसूचकं, यस्तु तन्दुलधावनादिपानीयपानविषये गृहस्थानां प्रत्याख्यानं कारयति स सिद्धान्तानभिज्ञ एव, प्रतिवर्षं सभासमक्षं वाच्यमानकल्पसूत्रे तन्दुलधावनादिजलस्य स्पष्टोपलम्भात्, न च तद्ग्रहणं साधूनामेवेति वाच्यं, श्रावकाणां तु क्वाप्यागमे पार्थक्येन जलविभागानुपलम्भाद्, अचित्तभोजिनस्तु श्रावका अप्यतस्तेषामप्येतान्येव पानार्हाणि, पानागाराणामपि साधुसमानत्वाद्, यथा चावश्यके वन्दनकस्य कः कर्त्तेतिद्वारे "पंचमहव्वयजुत्तो अणलससमाणपरिवज्जिअमईओ। संविग्गनिज्जरट्ठी किइकम्मकरो हवइ साहू ॥१॥" इति वचनात्साधुरेव वन्दनककर्त्ता प्रोक्तो, न च श्राद्धादिः, स चानुक्तोऽप्यागमाविरोधेनोपलक्षणाद् गृहीतः, तेनैव विधिना यथा वन्दनकं ददाति तथा तन्दुलादिपानीयमप्यनुक्तानां श्राद्धानां युज्यत एव, अन्यथा श्राद्धानां पानार्थं पानीयविभागो दर्श्यतामित्यलं विस्तरेण, ननु 'अदुवा वारधोअण'मित्यादिदशवैकालिकवचनात् "कंजिअआयामासइ संसट्ठुसिणोदगस्स वा असति। फासुअजलं तमजढं तस्सासइ तसेहि जं रहिअं॥१॥" श्रीनिशीथभाष्ये संसट्ठशब्देन 'गवंगरसभायणनिक्केअणं'ति तच्चूर्णौ जरत्पानीयमुक्तमित्यागमवचनाच्च मुख्यतः साधूनां जरत्पानीयमेव युज्यते, न पुनस्तद्वदुष्णोदकमपीति ननु तद्ग्रहणं भवतामपि स्यादलाम्पट्यादेवेति चेन्नैवम्, उष्णोदकस्यापि मुख्य-

तया बहुषु स्थानेषु भणनात्, तथाहि 'उसिणोदगतत्तफासुर्अं, पडिगाहिज्ज संजए'त्ति श्रीदशवै०, तथा 'उसिणोदगतत्तभोइणो धम्म ठिअस्स मुणिस्स हीमउ''त्ति श्रीसूत्रकृदङ्गे वैतालीयद्वितीयाध्ययने, तथाऽन्यत्राप्युष्णोदक साधूनामुत्सर्गतः प्रवचनोक्तमप्येष्य, न पुनरेवं क्वापि कसेल्लकजलमिति, अधिकृत्य चोत्सर्गपदेष्वनुक्तस्यापि भणनात्, इद च विवक्षया न्यूनोत्सूत्रेऽपि पतत्य त्सर्गपदेभ्यः परित्यक्तत्वादिति गाथार्थ ॥१४॥ अथ कसेल्लकपानीयग्रहणे त्रसयतनाया अभावे यत्स्यात्तदाह—

तमजयणाइअभावे संजमलेसोऽवि दूरतरवडिओ। एवंविहोऽवि मग्गो उम्मग्गो केरिसो हुज्जा ? ॥११५॥

त्रसयतनाया अभावे सम्यक्त्वमपि न संभवति, तस्य लक्षणस्याप्यभावात्, सम्यक्त्वलक्षणं त्वेवं—''शमसंवेगनिर्वेदानुकम्पास्तिक्य लक्षणैः । लक्षणैः पञ्चभिः सम्यक्, सम्यक्त्वमुपलक्ष्यते ॥'' इति श्रीयोगशास्त्रे, सम्यक्त्वाभावे च कुत संयमगंधोऽपि ?, आस्तां सर्वविरतिसंयमः, देशविरतिपरिणामोऽपि दूरतरपतित —अतिदविष्ठतरः तद्गुणस्याप्यभाव इत्यर्थः, अय भावः—सम्यग्दृष्टि देशविरतिर्वा त्रसयतनापरायणो भवति, अयं तु यतिलिङ्गधरोऽपि न तथेति कथं साधुः ?, एवं सत्यपि यदि इ त्वरतर! त्वदभि मत पूतरादित्रसजन्तुविराधनाहेतु शीतलकसल्लकजलग्रहणमपि मार्गो—ज्ञानादिरूपो मोक्षस्य भवेत् तर्हि कीदृश उन्मार्ग ?, अयमेवो मार्गो, नान्य इति गाथार्थ ॥१५॥ अथ पुनरप्यधिकमुत्सूत्रमाह—

सावयकुलपडिसिद्ध पज्जुसिअविदलमाइ ज रद्द। सिद्धतवयणमक्खिअ भणिऊण भक्खणा मुद्धण्णो ॥११६॥

श्रावककुलप्रतिषिद्ध—नाम्नापि च श्रावक इति ख्यातिमान् तदीयकुले प्रतिषिद्ध रात्रिभोजनवद्विदमप्यकल्प्यमिति वचनमयाहृष्ट

१ अपीवं परिणयं णच्चेति पिण्डैषणाप्रथमो द्देशके सप्तमसप्तितमाया गाथाया पाठान्तरमिदं, तत्रोष्णोदकाधिकारात्

जुगुप्सितं यद् राद्धं मदर्थादार्द्रमिति गम्यं पर्युषितं–रात्र्यन्तरितं द्विदलं मुद्गमाषादिधान्यविशेषः, आदिशब्दात्पौलिकादिपरिग्रहः, तादृशमलीकम्–अनुक्तमप्युक्तमित्यसद्भ्याख्यानेनासत्यं सिद्धान्तवचनं भणित्वा मूर्खो भक्षयतीतिगाथार्थः॥११६॥ अथ पर्युषितं द्विदलादिकं कीदृशं भवतीत्याह—

**रत्तंतरिअं विदलं चलिअरसं पोलिआ उ लालजुआ। ओसन्नं तेण नयं न भुंजई साणुकंपमई ॥११७॥**

रात्र्यन्तरितं द्विदलं चलितरसं–विनष्टं संभवेत, पोलिका च लालायुता–द्वीन्द्रियजन्तुविशेषसंयुक्ता भवेद्, यदागमः–"मिच्छत्तमसंचइए विराहणा तत्थ पाणजाईओ। संमुच्छणा य तक्कण दवे अ दोसा इमे हुंति ॥१॥ इति श्रीकल्पभाष्ये,तद्वृत्तिर्यथा अशनादिकं रजन्यां परिवास्यमानं दृष्ट्वा शैक्षोऽन्यो वा मिथ्यात्वं गच्छेदुड्डाहं वा कुर्याद्–अहो अमी असंचयिका इति, तथा परिवासिते संयमात्मविराधना भवति, तत्र संयमविराधना भाव्यते–सक्तुकादिषु धार्यमाणेषूरणिकादयः प्राणजातयः संमूर्च्छन्ति, पूपलिकादिषु लालासंमूर्च्छना च भवति, उन्दरो वा तत्र तर्कणम्–अभिलापं कुर्वन् पार्श्वतः पार्श्वतः परिभ्रमन् मार्जारादिना भक्ष्यते, एवमादिका संयमविराधना, आत्मविराधना तु तत्राशनादौ लालाविषसर्पो लालां मुञ्चेत् त्वग्विषो वा जिघ्रन् निःश्वासेन विषीकुर्याद् उदरो वा लालां मुञ्चेद्,द्रवे चाहारे रात्रौ परिवास्यमाने एते वक्ष्यमाणा दोषा भवन्तीति श्रीकल्पवृत्तौ। तथा "चलितरसं कुथितान्नं पर्युषितद्विदलपूपिकाद्यनेकजन्तुसंसक्तत्वाद्,उपलक्षणात्पुष्पितोदनपक्वान्नादिदिनद्वयातीतदध्याद्यपि चेति श्रावकप्रतिक्रमणसूत्रवृत्तौ 'ओसन्नं'ति ओसन्नं–प्रायेण तेन तकं–कुत्सितं तत् तकं द्विदलादि सानुकम्पमतिः–त्रसानुकम्पान्वितबुद्धिर्न भुंक्त इतिगाथार्थः ॥११७॥ अथ परः शङ्कते—

सदा यद्‌ मानत् भमनान, नचादि 'उसिणोऽगतत्तकामुअं, पडिगाहिज्ज संजए'त्ति श्रीदशवै०, तथा 'उसिणोदगतत्तमोइणो धम्म ठिअस्स मुणिस्स हीमउ'त्ति श्रीसूत्रकृताङ्ग वैतालीयद्वितीयाध्ययने, तथाऽन्यत्राप्युष्णोदक साधूनामुत्सर्गतः प्रवचनोक्तमेव शाप्य न पुनरेवं शपि क्रमाद्धयत्वनमिति, भपिरत्वं चोत्सर्गपदस्यनुक्तस्यापि मननाद्, इदं च विवक्षया न्यूनोत्सर्गेऽपि पतस्य पराङ्‌परस्य परिभ्यक्तस्यादिति गाथार्थ ॥१४॥ अथ पसेलाकृपानीयप्रहण ग्रमयतनायमावे यस्यापदाह—

सम्मत्तणाइअभावे संजमलेसो'वि दूरमरयडिओ। एयविहोऽवि मग्गो उम्मग्गो केरिसो हुज्जा ? ॥११५॥

रमयतनायमावे सम्यक्त्वमपि न संभवति, तस्य लक्षणस्याप्यभावात्, सम्यक्त्वलक्षणं त्वेव—"शमसंवेगनिर्वेदानुकम्पास्तिक्य लक्षणैः। लक्षणैः पञ्चभिः सम्यक् सम्यक्त्वमुपलक्ष्यते ॥" इति श्रीयोगशास्त्रे, सम्यक्त्वाभावे च कुतः संयमगंधोऽपि ?, अन्ता सर्वविरतिरूपस्य, देशविरतिपरिणामोऽपि दूरतरपतित-अतिव्यवहितः तद्‌गुणस्याप्यभाव इत्यर्थ, अयं भावः—सम्यग्दृष्टि देशविरतिरा ग्रमयतनापरायणा भवति, अयं तु यतिलिङ्गधरोऽपि न तथेति कथं साधुः ?, एवं सत्यपि यदि हे सरतर! त्वदभि मत रागद्विष्टजन्तुविराधनात्‌ शीतलस्यासृकजलग्रहणमपि मार्गो—ज्ञानादिरूपो मोक्षस्य भवेत् तर्हि कीदृश उन्मार्ग ?, अथ मया मार्गो, नान्य इति गाथार्थ ॥१५॥ अथ पुनरप्यधिकमुत्सूत्रमाह—

सागारकुम्भसरिसमिह पज्जुसिअभणिदन्नमाइ ज दह। सिद्धमचगणमलिअ भणिऊण सहस्साग मुक्कम्मो ॥११६॥

साकारस्नवनिरिद—साम्नापि च श्रावक इति ख्यातिमान् मदीयकुल प्रतिषिद्ध रात्रिभोजनवदिदमप्यकल्प्यमितिवचनप्रमाद्य

---

* अर्धार्धे परिणय नमति सिद्धगणाप्रथमा सक समसमतिमाया गाथाया पाठान्तरमिद, सत्रोष्णोदकाधिकारात्

जुगुप्सितं यद् राद्धं मदर्थादार्द्रमिति गम्यं पर्युषितं–रात्र्यन्तरितं द्विदलं मुद्गमाषादिधान्यविशेषः, आदिशब्दात्पौलिकादिपरिग्रहः, तादृशमलीकम्–अनुक्तमप्युक्तमित्यसदभ्याख्यानेनासत्यं सिद्धान्तवचनं भणित्वा मूर्खो भक्षयतीतिगाथार्थः॥११६॥ अथ पर्युषितं द्विदलादिकं कीदृशं भवतीत्याह—

**रत्तंतरिअं विदलं चलिअरसं पोलिआ उ लालजुआ। ओसन्नं तेण तयं न भुजई साणुकंपमई ॥११७॥**

रात्र्यन्तरितं द्विदलं चलितरसं–विनष्टं संभवेत, पोलिका च लालायुता–द्वीन्द्रियजन्तुविशेषसंयुक्ता भवेद्, यदागमः–"मि-च्छत्तमसंचइए विराहणा तत्थ पाणजाईओ। संमुच्छणा य तक्कण दवे अ दोसा इमे हुंति ॥१॥ इति श्रीकल्पभाष्ये,तद्वृत्तिर्यथा अशनादिकं रजन्यां परिवास्यमानं दृष्ट्वा शैक्षोऽन्यो वा मिथ्यात्वं गच्छेदुड्डाहं वा कुर्याद्–अहो अमी असंचयिका इति, तथा परि-वासिते संयमात्मविराधना भवति, तत्र संयमविराधना भाव्यते–सक्तुकादिषु धार्यमाणेपूरणिकादयः प्राणजातयः संमूर्च्छन्ति, पूपलिकादिषु लालासंमूर्च्छना च भवति, उन्दरो वा तत्र तर्कणम्–अभिलाप कुर्वन् पार्श्वतः पार्श्वतः परिभ्रमन् मार्जारादिना भ-क्ष्यते, एवमादिका संयमविराधना, आत्मविराधना तु तत्राशनादौ लालाविपसर्पो लाला मुञ्चेत् त्वग्विषो वा जिघ्रन् निःश्वासेन विषीकुर्याद् उदरो वा लालां मुञ्चेद्,द्रवे चाहारे रात्रौ परिवास्यमाने एते वक्ष्यमाणा दोषा भवन्तीति श्रीकल्पवृत्तौ। तथा "चलि-तरसं कुथितान्नं पर्युषितद्विदलपूपिकाद्यनेकजन्तुसंसक्तत्वाद्,उपलक्षणात्पुष्पितोदनपक्वान्नादिदिनद्वयातीतदध्याद्यपि चेति श्रावक-प्रतिक्रमणसूत्रवृत्तौ 'ओसन्नं'ति ओसन्नं–प्रायेण तेन तकं–कुत्सितं तत् तकं द्विदलादि सानुकम्पमतिः–त्रसानुकम्पान्वितबुद्धि-र्न भुंक्त इतिगाथार्थः ॥११७॥ अथ परः शङ्कते—

नणु पज्जुसिअविदलप्पमुहं पाएण नीरसं भणिअं । नं चिअ मुणीणमुचिअं तप्पडिसेहो न सिं सेओ ॥११८॥

ननु भो पर्युषितद्विदलप्रमुखं प्रायेण नीरसं भणितमागमे इति गम्यं, 'त चिअ'त्ति तदेव मुनीनां—जितेन्द्रियाणामुचित-योग्य, तत्प्रतिषेध 'सिं'ति तेषां मुनीनां न श्रेयानिति पूर्वपक्ष इति गाथार्थः ॥११८॥ अथोत्तरमाह—

मन्नो जुत्त अरत्ता गहिअव्व त इचिअ साहूण । जं संजमउवगारी बाहाकारी न कइआवि ॥११९॥

तत्प्रागुक्तं न युक्तं यत्—यस्मात्साधूनां तदेवोचितं यत्संयमोपकारी—चारित्रक्रियापुष्टिकरं, न पुनर्बाधाकारि—संयमक्रियोपहन्तृ कदाचिदपीतिगाथार्थ ॥११९॥ व्यतिरकतिअमत्राविशेषमाह—

भण्णइ भूइप्पमुहं गहिअव्व न उण घयगुलप्पमुहं । एव चिआगिऊणं पवयणमेरा न मोत्तव्वा ॥१२०॥

अन्यथा नीरसाहारग्रहणमात्राग्रह भूतिप्रमुख—भस्मादिकमादिशब्दात्घटितपतितशुष्कपत्रादिग्रह तदेव ग्रहीतव्यं—भोज्य स्यात्, सर्वेष्वपि तथाविधवस्तुषु सम्भावेन नीरसत्वात्, न पुनर्घृतगुडप्रमुखं—घृतगुडदधिदुग्धपक्वान्नादि, उष्णेभ्योऽपि कूरादिभ्यो जिनो न भवन्ति, द्विदलादिकं तु पर्युषितं प्रायो विनष्टस्वमापमनन्तकायादिमहमस्पमिति ज्ञात्वा वर्जनीयमितिगाथार्थ ॥१२०॥ अथ तस्मात्किं कल्प्यमित्याह—

पज्जुसिअविदलमाइ भक्ख पाएण कुहिअलालजुअं । तेण तव्वइरित्त जुत्त साहूण कुराइ ॥१२१॥

पर्युषितद्विदलादि भक्ष्यं—मक्षणीयं, न पुन शुष्कमपि, प्रायेण—बाहुल्येन कथितं च भवेत, मापादि अपि चलितरसं पुष्पितादि

कं तु लालाः-संमूर्च्छिमद्वीन्द्रियजीवविशेषास्ताभिर्युतं-संसक्तं स्यात्, तेनैव कारणेन तद्व्यतिरिक्तं कूरादि साधूनां सर्वसावद्यवर्जकानां ग्रहीतुं भोक्तुमिति गम्यं युक्तमितिगाथार्थः ॥ १२१ ॥ अथ कदाचित् कूराद्योदनोऽपि चलितरसो दृश्यते तत्र किं कर्त्तव्यमित्याह—

**कूराई पुण पायं न उत्तदोसेहिँ दूसिअं जम्हा। तेण निरिक्खिअ मुणिणो दूसिअसेसं पभुजंति ॥१२२॥**

कूराद्योदनजातिः पुनः प्रायो-बाहुल्येन पर्युषितमिति प्रकरणाद्बोध्यं, नोक्तदोषैर्दूषितं स्याद्, यथा हि द्विदलादि विनश्वरस्वभावं न तथैवोदनाद्यपीत्यर्थः, यस्मादेवं तस्माद्बाहुल्यग्रहणात् कदाचित्तथाविधसामग्रीवशाच्चलितरसं भवेदपीति संभावितदोषपरिहाराय निरीक्ष्य-वस्त्वन्तरालिप्ते पात्रे प्रथमं स्वल्पं गृहीत्वा चक्षुषा निरीक्ष्य जिघ्रति पश्चाद्यथोपयोगि गृह्णातीत्यादि निशीथचूर्ण्याद्युक्तविधिना सम्यक् पर्यालोच्य मुनयो दूषितशेषं-कदाचिच्चलितरसं स्यात्तत्परित्यज्य शेषं प्रभुञ्जते-गृहपतिदत्तं मदादायाभ्यवहरन्तीतिगाथार्थः ॥१२२॥ अथ तदपि कीदृशमित्याह—

**तंपि जइ केवलेणं जलेण रद्धं हविज्ज जहजायं। अम्हेहवि णो घिप्पइ विअलं जह वुड्ढवयणाओ ॥१२३॥**

तदपि-कूरादिकमपि पुनर्यदि केवलजलेन राद्धं स्यात्तद्यथाजातं तक्रादिनाऽसंस्कृतं वृद्धवचनान्नास्माभिर्गृह्यते, अस्माकं वृद्धसंप्रदायस्त्वेवं-तक्रादिना राद्धं मिश्रं वा कूरादि ग्राह्यम्, इतरद् द्विदलवद्विनश्वरस्वभावं परिहार्यमिति गाथार्थः ॥ १२३ ॥ अथ तादृग्विदलभक्षणमुपसंहरन्नाह—

**केवलजलेण रद्धं तंदुलमाईवि पाय चलिअरसं। विदले सुराणुभावो किं जाओ जेण णो चलिअं ? ॥१२४॥**

मन्दूलापि कालमसेन यद प्रापमलितरस स्याद्, पवषाम्पथसिद्ध, विवले किं सुरानुभावो आवो येन तम चलितरसम् ?, एव पपिकादापि माप्यमिति गाथार्थ ॥१२४॥ अथ प्रवचनमर्यादास्वरूपमाह—

ज ज बहुलसहाय पवयणमेराइ रक्खय भणिअं। अह चमचयगुत्तो भणिआ न तहा य अण्णेसिं ॥१२५॥

यद्यद् बहुलसमाय-निरुपाधिकस्वरूपं वस्तु तत्प्रवचनमेराया-जिनशासनस्य मर्यादाया रक्षक भणित, दृष्टान्तमाह-य था ब्रह्मव्रतगुप्ति, प्राकृतत्वादक्रमवचनं ब्रह्मव्रतगुप्तयो भणिता, ताश्चेमा-"वसहि कह निसिज्जिदिअ कुड्डंतर पुव्वकीलिअ प-णीए। अइमायाहार विभूसणा य नव बंभगुत्तीओ॥१॥"त्ति, न तथा-तेन प्रकारेणान्येषां महाव्रतानां गुप्तयो भणिता इति गाथार्थः ॥१२५॥ अथ तत्र हेतुमाह—

पाय गुत्तिविलोवे लोवो चमचयस्स जह दिट्ठो। दिट्ठिपहाणेहिं तह नन्नेसि महव्वयाणपि ॥ १२६ ॥

गुप्तिविलोप प्रायो ब्रह्मव्रतस्यापि भङ्गो दृष्टिप्रधानैः-सर्वज्ञैर्यथा दृष्टो न तथाऽन्येषां व्रतानामपि, दार्ष्टान्तिकयोजना स्वयं-यथा गुप्तिभङ्ग ब्रह्मव्रतभङ्गो न तथाऽन्येषामपि, एव पर्युषितत्वेऽपि विदलादेर्यथा चलितरसत्वं न तथा कूरौदनस्यापीति गाथार्थ ॥१२६॥ अथ पर्युषितयोरपि द्विदलादिरसयोः कथिताकथितनियमाभाव प्रकम्य व्यवहारनयसमर्थनाय गाथायुग्ममाह—

जइविअ विदलप्पमुह पज्जुसिअ किंचि होइ भक्खिणट्ठ। किंचिवि ओअणजाय विणट्ठमवि होइ पज्जुसिअ ॥१२७॥

तहविअ पाइसहाय अहिगिच्चा होइ चारु ववहारो। सो चेव सज्जणाणं पवित्तिनिवित्तिहेउत्ति ॥१२८॥

यद्यपि च द्विदलप्रमुखम्, आदिशब्दात्तत्पिष्टादिग्रह', किंचित्पर्युषितमविनष्ट-चलितरसं न भवेदपि, पुन किंचिदोदनजात

पर्युषितं विनष्टमपि भवेत्, तथापि बहलस्वभावमधिकृत्य चारुव्यवहारः—शोभनो व्यवहारो भवेत्, 'सो चेव'त्ति स एव व्यवहारः संयतानां प्रवृत्तिनिवृत्तिहेतुरिति, अयं भावः—द्विदलं हि पर्युषितं बाहुल्येन विनष्टं स्यात्, तेन ततो निवृत्तिः—अपसरणं, गृहिणा दीयमानं सदोषमतो नास्माकं कल्प्यमितिभणित्वा परिहरतीत्यर्थः, क्रूराद्योदनजातं तु दीयमानं सम्यग् परीक्ष्य शुद्धमस्माकं कल्प्यमिति भणित्वोपादत्ते इतिगाथायुग्मार्थः॥१२७॥१२८॥ नन्वोदनवद् द्विदलमपि सम्यग् निरीक्ष्य यदचलितरसं तद् गृह्यते तत्र को दोष इति पराशङ्कामुदाहरणेन परिहरति—

**सुविहिअनेवत्थजुओ ववहारपरिक्खिओ जहा पुज्जो। न तहा कुतित्थलिंगी ववहारपरिक्खबाहिरिओ ॥१२९॥**

सुविहितनेपथ्ययुतः—सुसाधुवेषधारी व्यवहारपरीक्षितः—छद्मस्थगम्यतीर्थवर्त्तिब्रह्मव्रतादिमूलोत्तरगुणगणान्वितो यथा पूज्यो वन्दनाभ्युत्थानादियावदाराधनविधिना आराध्यो न तथा कुतीर्थलिङ्गी—शाक्यादिलिङ्गधरः, तल्लिङ्गं तु पिच्छिकाकमण्डलुधातुरक्तवस्त्रादिचिह्नं तेन युक्तोऽभ्युत्थानानर्हः, कुत इति विशेषणद्वारा हेतुमाह—यतः सोऽन्यतीर्थिको व्यवहारपरीक्षाबाह्यः—अयं जिनोक्तमार्गानुष्ठानपरायणो भवत्युत नेति परीक्षाया—अनर्हः, तादृग्लिङ्गे कथंचिन्निश्चयतः किञ्चिद्ज्ञानादिरूपमार्गस्यत्रोन्मार्गतया जिनैरुपदिष्टत्वादिति गाथार्थः ॥१२९॥ अथ दृष्टान्तमाह—

**तेण मरीइतिदंडी कविला इहयंपि सुद्धवयणंपि। भासंतो दुब्भासी भणिओ उसहेण दुहभागी ॥१३०॥**

येन कारणेनान्यतीर्थिको व्यवहारपरीक्षाबाह्यस्तेन कारणेन मरीचिनामा त्रिदण्डिको—भरतसुतः प्रतीतः, स च निजदेशनात्रतिबुद्धं याहि यतिसमीपे मोक्षमार्गैकहेतुं संपूर्णं साधुधर्मं प्रपद्यस्वेत्युक्ते कपिलो जगाद—किमिति शोभनो मार्गो भवता त्यक्त इत्युक्ते

अथ पुनरपि दृष्टान्तमाह—

जयवऽण्णतित्थिआवि अ सिज्झंति अ नहु सतित्थिआ केई। तहवि परतित्थिगहिआ जिणपडिमा कप्पए नेव॥१३२॥

यद्यप्यन्यतीर्थिका अपि—अन्यतीर्थिकवेषमात्रधारका अपि कदाचित्तथाभव्यत्वपरिपाकवशात् सम्यक्त्वावबोधादिसामग्र्यां सत्यां सिद्ध्यन्ति—एकस्मिन् समये उत्कृष्टपदे दशापि मोक्षं यान्ति 'नहु' नैव केचित् स्वतीर्थिका अपि तथा सिद्ध्यन्ति, तथाप्यास्तामन्य-त्परतीर्थिकाराधनादि, चोऽप्यर्थे, परतीर्थिकगृहीतजिनप्रतिमाऽपि न कल्पते जैनानाम्, उपनयस्त्वेवम्—अन्यतीर्थिकवद् द्विदलं तच्चा-चलितरसमपि परीक्षाबाह्यमितिकृत्वा हेयमिति गाथार्थः ॥१३२॥ अथ पुनरपि लौकिकदृष्टान्तमाह—

लोएवि सुजाइकुलुप्पणो सुपरिक्खिओ जहा जुग्गो। न तहा विवरीओवि अ गुणवंपि विवाहमाईसु॥१३३॥

लोकेऽपि सुजातिकुलोत्पन्नः—शुद्धमातापितृपक्षोत्पन्नः सुपरीक्षितो विवाहादिकार्येषु योग्यो भवति, न तथा विपरीतोऽपि—हीन-कुलोत्पन्नोऽपि कदाचिद्गुणवानपि, तद्वद् द्विदलं हि पर्युषितमार्द्रं सत् सकलमपि परिहरणीयं, ओदनजातं तु सुकुलोत्पन्नवत् सुपरीक्ष्य ग्राह्यमिति गाथार्थः ॥१३३॥ अथ परिहारमधिकृत्यालौकिकदृष्टान्तमाह—

उत्तमकुले असुद्धो जो जाओ सो णु चेव चइयव्वो। विवरीअकुलं सयलं सुकुलेहिं चेव चइअव्वं ॥१३४॥

उत्तमकुले योऽशुद्धो जातः नु इति वितर्के स एव त्यक्तव्यः—त्याज्यो, विपरीतकुलं तु 'सुकुलेहिं' ति सुकुलोत्पन्नैः सकलं 'चेव' त्ति एवार्थे व्यवहितोऽपि सकलमेव त्याज्यम्, एवमोदनजातौ यदशुद्धं तत्तावन्मात्रमेव परिहर्तव्यं, न पुनस्तज्जातिमात्रं, द्विदलपूपि-कादिकं तु पर्युषितमार्द्रं सत् हीनकुलोत्पन्नवत् तज्जातिमात्रमपि त्याज्यमिति गाथार्थः॥१३४॥ अथ पुनरपि लोकोत्तरदृष्टान्तबाहुल्यमाह-

मरीचिप्रणाम श्रमणानिरस्तविरमा नाहमित्याद्यनमुक्तेऽपि कपिल उवाच,मत्स्यय विरक्तोऽपि साधुमार्गानभिमुखो मदुचितः सहाय मंहम इति विचिन्त्य 'कविला इत्थंपि इहयंपि'त्ति हे कपिल ! ममापि पार्श्वे किञ्चिद्धर्म इत्युक्ते तथाविधधर्माभिमुखं प्रव्राजितवान्, अत्र यद्यपि 'तयवि मरीइनामा अप्पपरिणायगो उम्मग्गदेसणत्ता । मज्झायपरापुरुषो पगते मायइ महप्पा ॥१॥ वञ्चति वञ्चमीरू पहु नीरममाग्ल जनारंभ । होउ मम परिमिण्णं उलय ण्हाणं च पियण च॥२॥" इत्यागमगम्यदेशविरतिधर्मे विद्यमानेऽपि शुद्धवचनमपि भाषमाण भीक्ष्णमेव दुर्भाषी—अनुचितभाषी भणित', यदागम'—"दुब्भासिएण इक्केण मरीइ दुक्खसागरं पत्तो । भमिओ कोडाकोडी सागरसरिनामधिज्जाणं॥१॥"त्ति, तत्र निदानं तावदन्यतीर्थिकवेषे विद्यमान सम्यक्त्वव्यवहारस्याप्यभावात् कुतो देशविरतिपरिणामव्यवहारोऽपीति व्यवहारपरीक्षायामप्यापि मरीचेस्तादृग्लिङ्गधारित्व मम मार्गे किञ्चिद्धर्मोऽस्तीतिवचन जिनाज्ञाया अभावाद् मृषानुरूपमव,यतो यद्यपि तादृग्लिङ्गधरोऽपि मरीचि किञ्चिद्धर्मवान तथापि न उन्मार्गस्थात्म ,एवंविधवचनेन तन्मार्गोद्दीपनमर स्यात्, न पुन धारकमार्गस्यापीति व्यवहारो बलीयान्, व्यवहारस्तु बाहुल्यपक्षापेक्ष इति, यस्त्वस्मद्दर्शनोपासकस्य गम्यकम्यव्यवहार' स च श्रीमहावीरआश्रयत्वेनैव, न पुनरुन्मार्गाश्रितत्वेनैव, सोऽपि तथोपदिश्य कस्मैन प्राव्राजयिष्यत्तर्हि मापि गर्पशाविष्यदिति गाथार्थ ॥३०॥ अथोक्तमर्थम गाथया स्पष्टयति—

माहणमीवे पुण्णो धम्मो अम्ह तु किंचि न य पुण्णो । इअभासा तल्लिंगे नो जुत्त तेण मोसत्ति ॥३१॥

माधुसमीप धर्म' पूर्ण', मम तु किञ्चित्, न पूर्ण इतिभाषा तल्लिङ्गे—तादृशे लिङ्गे विद्यमाने न युक्ता, तत मृषा—असत्येत्यत एवोत्सूत्रभाषिमार्गपतितो, निश्चयनयात्सम्यग्दृष्टिरपि द्रष्टुमप्यकल्प्य इति नियुक्तिकारवचन प्राग् प्रदर्शितमिति गाथार्थः ॥ १३१ ॥

अथ पुनरपि दृष्टान्तमाह—

जयवऽण्णतित्थिआविअ सिज्झतिअ नहु सातेत्थिआ केई। तहवि परतित्थिगहिआ जिणपडिमा कप्पए नेव॥ १३२॥

सम्यक्त्वावबोधादिसामग्र्यां सत्यां यद्यप्यन्यतीर्थिका अपि—अन्यतीर्थिकवेषमात्रधारका अपि कदाचित्तथाभव्यत्वपरिपाकवशात् सिद्ध्यन्ति, तथाप्यास्तामन्य- सिद्ध्यन्ति—एकस्मिन् समये उत्कृष्टपदे दशापि मोक्षं यान्ति 'नहु' नैव केचित् स्वतीर्थिका अपि तथा सिद्ध्यन्ति—अन्यतीर्थिकवद् द्विदलं तच्चा- त्परतीर्थिकाराधनादि, चोऽप्यर्थे, परतीर्थिकगृहीतजिनप्रतिमाऽपि न कल्पते जैनानाम्, उपनयस्त्वेवम्—अन्यतीर्थिकवद् द्विदलं तच्चा- चलितरसमपि परीक्षाबाह्यमितिकृत्वा हेयमिति गाथार्थः ॥१३२॥ अथ पुनरपि लौकिकदृष्टान्तमाह—

लोएवि सुजाइकुलुप्पणो सुपरिक्खिओ जहा जुग्गो। न तहा विवरीओचि अ गुणवंपि विवाहमाईसु ॥१३३॥

लोकेऽपि सुजातिकुलोत्पन्नः—शुद्धमातापितृपक्षोत्पन्नः सुपरीक्षितो विवाहादिकार्येषु योग्यो भवति, न तथा विपरीतोऽपि—हीन- कुलोत्पन्नोऽपि कदाचिद्गुणवानपि, तद्वद् द्विदलं हि पर्युषितमार्द्रं सत् सकलमपि परिहरणीयं, ओदनजातं तु सुकुलोत्पन्नवत् सुपरीक्ष्य ग्राह्यमितिगाथार्थः ॥१३३॥ अथ परिहारमधिकृत्यालौकिकदृष्टान्तमाह—

उत्तमकुले असुद्धो जो जाओ सो णु चेव चइयव्वो। विवरीअकुलं सयलं सुकुलेहिं चेव चइअव्वं ॥१३४॥

उत्तमकुले योऽशुद्धो जातः नु इति वितर्के स एव त्यक्तव्यः—त्याज्यो, विपरीतकुलं तु 'सुकुलेहिं' ति सुकुलोत्पन्नैः सकलं 'चेव' त्ति एवार्थे व्यवहितोऽपि सकलमेव त्याज्यम्, एवमोदनजातौ यदशुद्धं तत्तावन्मात्रमेव परिहर्त्तव्यं, न पुनस्तज्जातिमात्रं, द्विदलपूपि- कादिकं तु पर्युषितमार्द्रं सत् हीनकुलोत्पन्नवत् तज्जातिमात्रमपि त्याज्यमितिगाथार्थः ॥१३४॥ अथ पुनरपि लोकोत्तरदृष्टान्तद्वाहुल्यमाह-

जह वा परपरिगहिआ जिणपडिमा भइओऽवि उस्सुत्ते। मुणिगुणजुत्तोवि कुसीललिंगिवग्गोऽवि परिचत्तो ॥१२५॥

यथा वा परपरिगृहीता—हरिहरादिमुक्ता मिथ्यादृष्टिपरिगृहीता जिनप्रतिमा हरिहरादिप्रतिमेव त्याज्या, उत्सूत्रे—उत्सूत्रभाषिमार्गे पतित कदाचित्कोऽपि भद्रकोऽपि—वस्तुतोऽव्यापन्नदर्शनोऽपि व्यवहारनयावलम्बिभिरुत्सूत्रभाषिवत्त्याज्यः, सम्यग्दृशां भ्रष्टुमकल्पनात्, कुशीललिङ्गिवर्गे—पार्श्वस्थादिसमुदाये मुनिगुणयुक्तोऽपि—साधुगुणसमन्वितोऽपि पार्श्वस्थादिवत्त्याज्य इति गाथार्थः ॥१२५॥ अथ दृष्टान्तद्वययोजनाय गाथामाह—

एवं निअगुणविलयाभावे विद्लाइ रत्तिअंतरिअं। कुहणसहावयवग्गे पडिअं परिहेअमेवत्ति ॥१२६॥

एवम्—अनेन प्रकारेण प्रागुक्तयुक्त्या निजगुणविलयाभावे—अविनष्टत्वे, सत्यपीतिगम्यं, विद्लादि रात्र्यन्तरितं, द्विदलादिने श्यपर्यः, कदाचिदविनष्टमपि स्यात् तथापि कुथितस्वभावकः—कुत्सितं स्वभावं स्वभावकः कथनेन हेतुना स्वभावको यस्य स चासौ वर्गश्च स कथनस्वभावकवर्ग तत्र पतितं द्विदलाद्यपि पर्युषितं द्विदलप्रभृत्यादि परिहार्यमेवेति गाथार्थः ॥१२६॥ अथैवं कुत इत्याह—

ववहारो पहु बलवं लोए लोउत्तरे अ मग्गंमि। तप्पुच्छेएण तित्थुच्छेओ छेएहिँ निद्दिट्ठो ॥१२७॥

व्यवहारो—व्यवहारनयप्रवृत्तिः लोके—लौकिकमार्गे लोकोत्तर—जैनप्रवचने व्यवहारः—श्रुताद्यनुसारेण साधुव्यवहारः बलवान्—अतिबलिष्ठः, यदागमः—"ववहारो वि हु(ऽविहु)बलवं जं छउमत्थंपि वंदए अरहा। जा होइ अणाभिन्नो जाणंतो धम्मयं एयं ॥१॥" (२–१२३ भा०) इति, तस्योच्छेदे—तद्विलोपे छेकैः—निपुणैर्गणधरादिभिः तीर्थोच्छेदो निर्दिष्टः, यदागमः—"जइ जिणमयं पवज्जह ता मा ववहारनिच्छए मुअह। ववहारनउच्छेए तित्थुच्छेओ जओऽवस्सं ॥१॥" (१७२) इति श्रीपञ्चवस्तुके इति गाथार्थः

॥१३७॥ अथ पर्युषितशब्दाद्भ्रान्तस्य खरतरस्य भ्रान्तिनिराकरणाय पर्युषितशब्दस्वरूपमाह—

**पज्जुसिअसद्दत्थो अहिगारवसेण होइ णाणत्ति। जो जत्थ जहा वुत्तो जुत्तो तह चेव णो इहरा ॥१३८॥**

पर्युषितशब्दार्थोऽधिकारवशेन—प्रकरणवशेन नानेति—नानाप्रकारोऽनेकप्रकारो भवति, तेन योऽर्थो यत्र प्रकरणे यथोक्तो—येन प्रकारेण पण्डितैर्भणितः स तथैव विचार्यमाणो विचारसङ्गतो भवति, नो इतरथा, यत्र क्वापि भावितोऽर्थोऽन्यत्र सर्वत्रापि तथैव विचार्यमाणो न युक्तिसङ्गतो भवति गाथार्थः ॥१३८॥ अथ पर्युषितशब्दस्यानेकधा कविप्रयोगं दर्शयति—

**कत्थवि ठाणब्भंसे पुराणभावे कहिंचि वावण्णे। कत्थवि सीअलभावे रत्तंतरिएवि पज्जुसिओ ॥१३९॥**

पर्युषितशब्दः क्वचित् स्थानभ्रंशे—उत्पत्तिस्थानाद्भ्रष्टे प्रयुक्तः, तथाहि—"वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः, पुष्पं पर्युषितं त्यजन्ति मधुपाः दग्धं वनान्तं मृगाः। निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं सेवकाः, सर्वः स्वार्थवशाज्जनोऽभिरमते नो कस्य को वल्लभः?॥१॥ इत्यत्र वृक्षान्निजोत्पत्तिस्थानाद्भ्रष्टं पुष्पं पर्युषितं भणितं, तच्च भ्रमरास्त्यजन्ति, तद्वद्भोगिनोऽपि नराः सुक्तोद्धरितं क्रूरादिकं पाकस्थाल्याः स्थाल्यान्तरे संक्रामितं पर्युषितं भण्यते तद्भोजिनो न भवन्ति, अत एवाद्यापि निर्गतबाष्पं क्रूरादिकं भोगिनो न भुञ्जते इति लोकोक्तिरपि, प्रान्तं—पर्युषितमित्यौपपातिकसूत्र्यादौ, तथाहि—"से किं तं रसपरिच्चाए?, २ अणेगविहे पं०, तं०—णिव्वीतीए पणीतरसपरिच्चाए आयंबिलए आयामसित्थभोई अरसाहारे विरसाहारे अंताहारे पंताहारे लूहाहारे सत्तरसपरिच्चाए"त्ति श्रीऔपपातिकसूत्रं, एतद्वृत्त्येकदेशो यथा 'अंताहारे'त्ति अन्ते भवं आन्तं—जघन्यधान्यं वल्लादि 'पंताहारे'त्ति प्रकर्षेणान्तं वल्लाद्येव भुक्तावशेषं पर्युषितं वा इत्यौप० वृ०, अत्र प्रान्तशब्देन पर्युषितं भणितं, यत्तु वल्लादिविशेषणं धान्यं तथापि

जह वा परपरिगहिआ जिणपडिमा मच्छओऽवि उस्सुत्ते। मुणिगुणजुत्तोवि कुसीललिंगिवग्गोऽवि परिचत्तो ॥१२५॥

यथा वा परपरिगृहीता—हरिहरादिपुरुषा मिथ्यादृष्टिपरिगृहीता जिनप्रतिमा हरिहरादिप्रतिमेव त्याज्या, उत्सूत्रे—उत्सूत्रभाषिमार्गे पतितः कदाचित्सत्योऽपि मत्स्योऽपि—वस्तुतोऽप्यापन्नदर्शनोऽपि व्यवहारनयावलम्बिभिरुत्सूत्रभाषिवत्त्याज्य, सम्यग्दर्शं प्रपुमच्छ-न्यत्वात्, कुशीललिङ्गिवर्गो—पार्श्वस्थादिसमुदाये मुनिगुणयुक्तोऽपि—साधुगुणसमन्वितोऽपि पार्श्वस्थादिवत्त्याज्य इति गाथार्थः ॥१२५॥ अथ दाष्टान्तिकयोजनाय गाथामाह—

एवं निअगुणविलयाभावे विदलाइ रत्तिअंतरिअं। कुहणसहावयवग्गे पडिअं परिहेअमेवत्ति ॥१२६॥

एवम्—अनेन प्रकारेण प्रागुक्तयुक्त्या निजगुणविलयाभावे—अविनष्टत्वे, सत्यपीतिगम्यं, विदलादि रात्र्यन्तरितं, द्वितीयदिने इत्यर्थः, कदाचित्किञ्चित्स्यात् तथापि कुथितस्वभावकः—कुत्सितः स्वभावः स्वभावकः कथनेन हेतुना स्वभावको यस्य स चासौ वर्गश्च स कथनस्वभावकवर्गः तत्र पतितं द्विदलाद्यार्द्रं पर्युषितं द्विदलपूपिकादि परिहार्यमेवेति गाथार्थः॥१२६॥ अथैवं कुत इत्याह—

ववहारो वत्तु बलव लोए लोउत्तरे अ मग्गंमि। तस्सुच्छेए तित्थुच्छेओ छेएहिं निद्दिट्ठो ॥१२७॥

व्यवहारो—व्यवहारनयप्रवृत्तिः लोके—लौकिकमार्गे लोकोत्तरे—जैनप्रवचने व्यवहारः—श्रुताद्यनुसारेण बाहुल्यप्रवृत्तिः बहुबल-वान्—अतिबलिष्ठः, यदागमः—"ववहारो वि हु (अविहु) बलवं जं छउमत्थंपि वंदए अरहा। जा होइ अणाभिन्नो जाणंतो धम्मयं एअं ॥१॥" (२–१२१ मा०) इति, तस्योच्छेदे—तद्विलोपे छेकैः—निपुणैर्गणधरादिभिः तीर्थोच्छेदो निर्दिष्टः, यदागमः—"जइ जिणमयं पव-ज्जह ता मा ववहारनिच्छयं मुअह। ववहारनउच्छेए तित्थुच्छेओ जओऽवस्सं ॥१॥" (१७२) इति श्रीपञ्चवस्तुके इति गाथार्थः

स्य तन्महामोहविलसितं, यतः बहुदिवससंबन्धिनो ये राद्धाः कुल्माषास्तेऽतिविनष्टाः पामराणामप्यभक्ष्याः अध्यक्षसिद्धाः, अवि-
श्वासे च राद्धान् कुल्माषान् दिनत्रितयं यावत्संस्थाप्यावलोकनीयं, नहि हस्तकङ्कणनिरीक्षणार्थं दर्पणान्वेषणं युक्तमिति लोकाभाण-
कोऽपि, ननु कथं तर्हि तथाविधकुल्माषग्राहित्वेन भगवतो वर्णनमितिचेत् सत्यं, नहि वयं तद्वाक्यमात्रमपि नाभ्युपगच्छामः,
किंतु अभक्ष्यमात्रभक्षणबद्धकक्षस्य तवाभिप्रायाद्भिन्नाभिप्रायकं तत्पदं,तथाहि—कुल्माषस्तावदर्धस्विन्नो माषादिरुच्यते,यदुक्तं—"कु-
ल्मासस्तु यावकः" कुले न मस्यति परिणमते वा वृषोदरादित्वात् , कुल्माषोऽपि,तथा च बहुदिवससिद्धस्थितकुल्माषाः बहुदिवस-
संबन्धिनोऽग्निसंस्कृता बकुलास्ते च तथाभूताः प्रायो नीरसा एव साधूनामुचिताः, न पुनः खरतरमुखयोग्यं द्विदलादि राद्धान्नम-
नेकदिवससंस्थितमपि,ननु भवतु विदलं तथाभूतं परं बहुदिवससंभृतगोरसगोधूममण्डकं वेतिवचनात्पर्युषितपूपिकाग्रहणं तु युक्तमेवेति-
चेत् ,मैवं,तत्र पर्युषितपूपिकाग्रहणविधेर्गन्धस्याप्यभावात् ,तथाहि—यथाऽत्र बहुदिवससंभृतगोरसमण्डकशब्देन बहुदिवससंभृतं घृत-
मेव ग्राह्यं, न तु दध्यादि,दिनद्वयाद्युपरिवर्तिनस्तस्य निषिद्धत्वाद् ,यदुक्तं—"दध्यहर्द्वितीयातीतं, कथितान्नं च वर्जयेदि"ति योग०,
गोरसशब्देन घृतमप्यागमे प्रतीतमेव, यदागमः—"चत्तारि गोरसविगईओ पण्णत्ताओ, तं०—दुद्धं दहि नवणीयं घयं चे"ति,
श्रीस्थानाङ्गे, (२७४) तथा बहुदिवससंभृतमण्डकशब्देन शुष्कमण्डकाः—खर्खराः जनप्रतीता बोध्याः, तेषामेव संखण्ड्यादावुद्धरि-
तानामातपस्थापनपुरस्सरं रक्ष्यमाणत्वात् , तच्चाद्यापि जनप्रतीतम् ,अत एव नात्र पूपिकाशब्दः, पूपिकानां संखंड्यामनुपयोगात् ,म-
ण्डकानामेवोपयोगात् , पूपिकानां तु प्रायः प्रतिदिवसं यथोपयोगं विधीयमानत्वेन तद्वृद्धेरसंभवात् कुतः आतपदानादिना खर्ख-
रादिकरणमिति, आर्द्रपूपिका तु बहुदिवससंबन्धिन्यः पामराणामप्यनभिमताः कुतः खरतरस्य तव तद्भक्षणाभ्यासः प्रादुरभूदिति ?

पृक्तमेव, यदा यद् यच्चादिरन्तं भवति तत्रैव पर्युषितं भ्रान्त, तत्र पर्युषित—व्यापन्नं पुराणमित्यर्थो ग्राह्यः, अत एव भाष्यकारेण भ्रान्तानन्तर व्याख्यानयता तन्माने व्यापन्नशब्दप्रयुक्त, तथाहि—"निष्फन्नवण्णगमाई अंतं पंतं तु होइ वावन्नं"ति श्रीबृहत्कल्प-भाष्य, तद्वीका यथा-निष्पन्ना-नष्टा वर्णकः प्रतीता आदिशब्दात्कुल्माषादिकं चान्तमित्युच्यते, भ्रान्तं पुनस्तदेव व्यापन्नं-विनष्टमिति श्रीबृह० वृ०, अत्र वल्लचनकमपि विनष्टं भ्रान्त भणित, विनष्टत्वं च न कथितादिपर्यायापन्नं, यतस्तच्छ्रावकपाम-प्यकल्प्य,यदाहु श्रीहेमाचार्यपादाः—"आगमोरससंपृक्तं,द्विदलं पुष्पितौदनम्। दध्यहर्द्वितयातीतं,कथितान्नं च वर्जयेत् ॥ १॥"
इति योगशास्त्र तृ० प्र०,तस्माद् व्यापन्नत्वं नाम विनष्टत्वं चिरन्तनत्वेनिष्कभित्यर्थः,तत्र श्रीमगवत्याम्नोक्तं वर्णत्रयादिपर्यायापन्नानां, स्वरूप वाच्य, तस्य नवीनतल्लावपत्रपा नीरसत्वात्, अत एव मन्दाग्नीनां जीर्णज्वरादि दीयते, तथा प्रकृष्टमन्त भ्रान्तमितिच-द्रवृत्तपतिरपि ममीचीना, तथा कश्चिच्छीतलमावेऽपि पर्युषितशब्दो यथा—"अवि सूइयं वा सुक्कं वा, सीयपिंडं पुराणकुम्मासं। अदु बुक्कसं पुलागं वा लद्धे पिंडे अलद्धए दविए ॥१॥ इति श्रीआचाराङ्गे प्रथमश्रु (१०७८) तद्वृत्तिर्यथा 'सूइ'त्ति दध्यादिना मम्यमार्द्रीकृतमपि तथाभूत शुष्कं वा—वल्लचनकादि शीतपिण्डं वा-पर्युषितभक्त, तथा पुराणकुल्माषं वा—बहुदिवससिद्धस्थितकु-ल्माषं बुक्कसं-चिरन्तनधान्यौदन यदिवा पुरातनसक्तुपिण्ड यदिवा बहुदिवससंभृतगोरसगोधूममण्डकं चेति, तथा पुलाकं वा यवनि-ष्पावादि, तदेवभूतं पिण्डमवाप्य रागद्वेषविरहाद्रविके भगवानिति श्री आचाराङ्गवृत्तौ, अत्र शीतपिण्ड पर्युषितभक्तमुक्तं, भक्तं च 'भक्तमन्नं कूरमन्धो'ऽपि वचनात् कूरादि, तच्च तद्दिनसंबन्धि अन्यदिनसंबन्धि चेत्युभयथापि साधूनां कल्प्यमेवेतिमुक्तं शीतलं पर्युषितमिति यच्च पुराणकुल्माषं-बहुदिनसिद्धस्थितकुल्माषमिति पदं यत्श्रीकल्पनामस्यास्यापि पर्युषितविदलस्य मोक्षिते सरतर

यस्मिन् पीड्यमाने यन्त्रादाविति गम्यं स्नेहो 'नहु'नैव भवति तच्छ्रुतधरा द्विदलं ब्रुवन्ति, द्विदलऽप्युत्पन्न [illegible]

भवत्येवेतिगाथार्थः ॥१४०॥ अथौष्ट्रिकभ्रान्तिमाह—

**एवं विदलसरूवं भणिऊणवि भणइ विदलवग्गगयं । संगरिगाई चवलयफलिउव्व विदलसन्नोत्ति ॥१४१॥**

प्रागुक्तगाथोद्भावनेन द्विदलस्वरूपं भणित्वाऽपि संगरिकादिकं द्विदलवर्गगतं–द्विदलजातीयं भणति चपलफलिकेव, यथा

चपलफलिका द्विदलं तथा फलिकासाम्यात्संगरिकाऽपि द्विदलमितिब्रुवाणः कीदृशः ?–'द्विदलसंज्ञः' द्विदला–द्विदलीभूता–स्फुटिता

संज्ञा यस्य स तथेति, एकद्विदलशब्दस्य लोप इति बोध्यमितिगाथार्थः ॥१४१॥ अथ संज्ञाराहित्यं कुत इत्याह—

**जं उक्कालिअसंगरजलतरिआ दीसइ फुडं णेहो । चक्खुप्फासणविसओ पचक्खं चक्खुमंताणं ॥१४२॥**

यद्–यस्मात्कारणादुत्कालितसंगरिकाजलोपरिवर्तिनी तरिका चक्षुष्मतां चक्षुःस्पर्शनविषयीभूता प्रत्यक्षं स्फुटं स्नेहो दृश्यते,

अयं भावः–खरतरेण संदेहदोलावल्यां संगरिकादौ सर्वथा स्नेहाभावो भणितः, स च प्रत्यक्षबाधितः, यत उत्कालितसंगरिका-

जले या स्नेहरूपा तरिका सा चक्षुषा दृश्यते, स्पर्शनेन्द्रियेण चिक्कणतोपलभ्यते,एतच्चानुभवसिद्धं सर्वेषामपि सलोचनानां,प्रत्यक्षा-

पलापस्तु खरतरमन्तरेण केन कर्त्तुं शक्यते ?, अतः प्रत्यक्षापलापित्वात् खरतरः संज्ञारहित इति गाथार्थः ॥ १४२ ॥ अथौ-

ष्ट्रिकाभिप्रायरूढां संस्थितिमाह—

**जं दोलावत्तीए भणिअं भणिअं च संगरं विदलं । पवयणसारोद्धारो संगरिमाइम्मि अप्पडिए ॥१४३॥**

यद्दोलावृत्तौ–पदैकदेशे पदसमुदायोपचाराज्जिनदत्तकृतसंदेहदोलावल्याः वृत्तौ भणितं,किमित्याह–भणितं वत्ति–भणितं च संगरि-

यस्मिन् पीड्यमाने यन्त्रादाविति गम्य स्नेहो 'नट्ठु'नैव भवति तच्छ्रुतधरा द्विदलं ब्रवन्ति, द्विदलेऽप्युत्पन्नं स्नेहयुत द्विदलं न भवत्येवेतिगाथार्थः ॥१४०॥ अथौष्ट्रिकभ्रान्तिमाह—

**एवं विदलसरूवं भणिऊणवि भणइ विदलवग्गगयं। संगरिगाई चवलयफलिउव्व विदलसन्नोत्ति ॥१४१॥**

प्रागुक्तगाथोद्भावनेन द्विदलस्वरूपं भणित्वाऽपि संगरिकादिकं द्विदलवर्गगतं—द्विदलजातीयं भणति चपलफलिकेव, यथा चपलफलिका द्विदलं तथा फलिकासाम्यात्संगरिकाऽपि द्विदलमितिब्रुवाणः कीदृशः ?—'द्विदलसंज्ञः' द्विदला—द्विदलीभूता—स्फुटिता संज्ञा यस्य स तथेति, एकद्विदलशब्दस्य लोप इति बोध्यमितिगाथार्थः ॥१४१॥ अथ संज्ञाराहित्यं कुत इत्याह—

**जं उक्कालिअसंगरजलतरिआ दीसइ फुडं णेहो। चक्खुप्फासणविसओ पच्चक्खं चक्खुमंताणं ॥१४२॥**

यद्—यस्मात्कारणादुत्कालितसंगरिकाजलोपरिवर्तिनी तरिका चक्षुष्मतां चक्षुःस्पर्शनविषयीभूता प्रत्यक्षं स्फुटं स्नेहो दृश्यते, अयं भावः—खरतरेण **संदेहदोलावल्यां** संगरिकादौ सर्वथा स्नेहाभावो भणितः, स च प्रत्यक्षबाधितः, यत उत्कालितसंगरिकाजले या स्नेहरूपा तरिका सा चक्षुषा दृश्यते, स्पर्शनेन्द्रियेण चिक्कणतोपलभ्यते,एतच्चानुभवसिद्धं सर्वेषामपि सलोचनानां,प्रत्यक्षापलापस्तु खरतरमन्तरेण केन कर्तुं शक्यते ?, अतः प्रत्यक्षापलापित्वात् खरतरः संज्ञारहित इति गाथार्थः ॥ १४२ ॥ अथौष्ट्रिकाभिप्रायरूढां संस्थितिमाह—

**जं दोलावत्तीए भणिअं भणिअ च संगरं विदलं। पवयणसारोद्धारो संगरिमाइम्मि अप्पडिए ॥१४३॥**

यद्दोलावृत्तौ—पदैकदेशे पदसमुदायोपचाराज्जिनदत्तकृतसंदेहदोलावल्याः वृत्तौ भणितं,किमित्याह—भणितं चत्ति—भणितं च संगरि-

च द्विदलं प्रवचनसारोद्धारे "संगरिगाइम्मि अप्पहिए" त्ति संदेहदोलावलीवृत्तिगतपाठमाह, "अथ संगरिशब्दगाथामुत्तरमाह "जइ किर चवलयचणया विदलं तह संगराइ विदलंति । दिणचरिआनवपयपगरणेसु लिहिआ उ फलिवग्गे ॥१॥ किमेतस्यासवादे, तत्र आह एवं मुक्ते, महाराष्ट्रविदलचणकाद्यचपलकचनकादिधान्यविशेषवत् द्विदलं तथा संगराण्यपि द्विदल, संगरिशब्दस्य नपुंसकत्वं प्राकृतत्वा दिति हेतोः, दिनचर्यानवपदप्रकरणयो लिखिताः निक्षिप्ता' फलिकावर्गे, तथाहि दिनचर्यायां "फलिआवग्गे सह सगर मल्ला चव लाय होला थे"ति, नवपदप्रकरणे तु फलपरिकर न दृश्यते, परं पूज्यै कुत्रस्यापदृष्टत्वो क्वापि तत्रैव चान्यत्र श्रुतपरकृते लिखिता भविष्यतीति स्वयं परिभाव्या', फलिकाश्च प्रायो द्विदला एव भवन्तीति भावः १२८ इत्याशोक्तस्येन संगराणां द्विदलत्वं समर्थितम्, अथैतत्समर्थनार्थमेव लक्षणसद्भावं भावयति–जय संगरबीआओ तिल्लुप्पत्ती कयावि संभवइ । दलिए दुन्नि दलाइं मुग्गाईण व दीसंति ॥१२०॥ न च संगरिबीजात्तैलोत्पत्ति' कदापि यन्त्रपीडनादिकालेऽपि संभवति, दलिते च संगरिबीजे द्वे दले मुद्गादीनामिव दृश्येते, तत' संपूर्णलक्षणसद्भावात्संगरं द्विदलमेव, अत एव "दहिए विगइगयाई घोलवडा घोलसिहरणि करंबो । लवणकणदहि-मथणे' संगरिगाइम्मि अप्पहिए ॥१॥ इति प्रवचनसारोद्धारगाथाद्वितीयपादे व्याख्यानयति श्रीआनंदसूरिभिः स्वयमाधुक्तं–ल वणकणै' क्षीरकलमलेनैर्युक्त दधि तदपि हस्तेन मथित वस्त्रेण गलित तच्चापि राम्पुपिंत सत्कल्पते निर्विकृतिप्रत्याख्यानवतां, क्वापि देशे संगरिकाद्यपि तत्र प्रक्षिप्यत इत्याशङ्क्याह–परं संगरिकादावपतित सति, तत्र तु द्विदलदोषसंभवात् न कल्पत इत्यर्थ', इत्यन्यत्र्याख्याय' संगरस्य द्विदलत्वं प्रतिपन्नमेवेत्यर्थ' १२१॥ इतिसंदेहदोलावलीवृत्ति, तत्रासंगतसम्मतिदर्शनादेतद्वृत्तिकर्ता मतं वक्रमताप्येवावगन्तव्य , एतन्मतस्यैतावन्तमात्र एवेति प्राग् प्रदर्शित बोध्य, ननु कथमसंबद्धमतापित्वमितिचेच्छृणु, द्विदलविचारे

क्रियमाणे द्विदलत्वप्रतिपादिका सम्मतिर्न दर्शिता, किंतु फलिकावर्गगतत्वप्रतिपादिका,सापि द्विदलत्वसिद्धये स्याद्यदि यद्यत्फलिकावर्गगतं तत्तत्सर्वं द्विदलमिति नियमः स्यात्, स च नास्ति, यतः फलिकावर्गगतमपि राजिकादिकं द्विदलं,तच्च संदेहदोलावलीवृत्तिकारस्याप्यभिमतं, यतः फलिकाः प्रायो द्विदला भवन्तीति तेनानन्तरमुक्तम्, अत्र प्रायोग्रहणात् फलिकावत्संगरिकादिकमपि द्विदलं न भवतीति वृद्धवादात्, तथैव तीर्थे प्रवृत्तिदर्शनाच्चेत्यस्माभिरुक्तेः कथं फलिकावर्गगतत्वप्रतिपादिका सम्मतिस्त्राणायेति स्वगलपादुकाऽनेन जनेन नावगता, नहि पञ्चेन्द्रियत्वेन साम्ये देववन्मनुष्या अपि चारित्रानधिकारिणः संपद्यन्ते, किंच—आनन्दसूरिकृतवृत्तिः सम्मतितया प्रदर्शिता,सा च वृत्तिः सम्प्रत्यनुपलभ्यमानापि वार्त्तमानिकसर्वसम्मतश्रीसिद्धसेनसूरिकृतप्रवचनसारोद्धारवृत्त्या सह विसंवादिनी कथमन्येषां प्रमाणं स्यात् ?,किंच—संदेहदोलावलीवृत्तिकारकाले विद्यमानायामपि वृत्तौ तां विहाय कथं तद्विसंवादिनी खपुष्पमिवासती सम्मतितया प्रदर्शिता,तस्माद्यथा तिथिवृद्धौ प्रथमैव तिथिः प्रमाणमितिप्रदर्शनार्थं श्रीउमास्वातिवाचककृता विचारवल्लभा सम्मतितया प्रदर्शिता तथाऽसौ वृत्तिरपि बोध्या,तेन विदुषा संदेहदोलावलीवृत्तिकारोऽसंबद्धप्रलापी दूरत एव परिहर्त्तव्यः,अत एवास्मदीया वृद्धा यथा स्तनिकानां शतपदी तथा खरतराणां संदेहदोलावलीति गाथार्थः ॥ १४३ ॥ अथैवं कथमसंगतसम्मतिप्रदर्शनमित्यत्र हेतुमाह—

जं खलु अज्जप्पभिइ तव्वयणविसारओ न को होही। इअ मुणिऊणं लिहिअं मूढमणेणेव तरुणुव्व ॥ १४४ ॥

यस्मात्कारणात् खलुरवधारणे क्रियया सह योजनीयः,अद्यप्रभृति—इदानींतनकालादारभ्याग्रे तद्वचनविशारदः—प्रवचनसारोद्धारपरमार्थवेत्ता कोऽपि 'न होही'ति न भविष्यत्येवेतिज्ञात्वा मूढमनसा—अज्ञानावृतचित्तेन तेन लिखितमिति, असंबद्धसम्मतिदाने

दृष्टान्तमाह—किंवत् ?—तद्वत्, पदैकदेशे पदसमुदायोपचारात्सभाचार्यः खरतराणां प्रसिद्ध तद्वत्, स च पडावश्यकबालाव-बोधे पज्जूसणादिने पौषधव्यवस्थापनाय 'पूर्णिमासु च तिसृष्वपि चतुर्मासकतिथिष्वि'त्यत्र 'पूर्णिमासु चतसृष्वपि चतुर्मासकपर्वपु पर्वातिथिषु' इति विकल्प्य उक्तं च सत्रकदज्ञदृष्टावित्येवंरूपेण द्वितीयाक्षरावृत्तिमप्यभ्यास्यातवान्, यथा तेन मूढेन नातः परं कोऽपि खरकदज्ञ्दृपेर्वाचयिता श्रावा वा श्रोता वा भविष्यतीतिनिश्चित्यालीकैव सम्मतिर्दर्शिता तथाऽनेनापि, जिनदत्ताद्वारभ्याथ यावच्च याभ्रवसम्मतिदानेऽस्य गृहरीति, यतो जिनदत्तेन नवपदप्रकरणवृत्तिस्तथैवाभ्यास्याताऽतो मूलाचार्यप्रभृति सर्वैरप्यभ्युपगतेति गाथार्थ ॥१४४॥ अथ प्रवचनसारोद्धारवृत्तेरभिप्रायमाह—

तविसीए सगरपमहापडिएवि उत्तरूयवहि । विगइगय विण्णेअं तप्पडिए पुण भवे नियमा ॥१४५॥

तद्वृत्तौ—प्रवचनसारोद्धारवृत्तौ उक्तरूपलवणादिसंयुक्तदधि संगरिप्रमुखापतितेऽपि—संगरादिके अपतितेऽपि विकृतिगत निर्विकृतिकं ज्ञेय, पतिते पुन—तत्र संसरादौ पतिते तु नियमात्—निश्चयेन निर्विकृतिकमथ भवेत्, प्रवचनसारोद्धारवृत्तिर्यथा "दधिविकृतिगतान्याह—"दहिए विगइगयाई घोलवडा घोलसिहरिणी करंबो । लवणकणदहिअमहिअं संगरिगाइमि अप्पडिए ॥१॥"त्ति, दधिविषये विकृतिगतानि पञ्च, घोलवटकानि, तथा घोलो—वस्त्रगलित दधि तथा शिखरिणी—करमथितखण्डयुक्तदधिनिष्पन्ना, तथा करम्बको दधियुक्तकूरनिष्पन्न, तथा लवणकणयुक्तं दधि मथित रात्विकारत्वाटक्रमित्यर्थ, तच्च संगरिकादिके अपतितेऽपि विकृतिगतं भवति, संगरिकाप्रस्फुलकलादौ पतिते पुनर्भवत्येव २८॥ इति गाथार्थः ॥ ४५ ॥ अथ स्वरतराभिप्रायं दूषयितुमुपन्यस्यन्नाह—

जं जम्मि उ अप्पडिए विगइगयं तं च तंमि पडिअंमि। तप्पडिवक्खी विगई जह वयपडणे तहाभूअं ॥१४६॥

यद्दध्यादिकं यस्मिन्नपतिते-संगरिकादिकेऽपतिते विकृतिगतं-मिर्विकृतिकं भवति, तच्च-दध्यादिकं च तस्मिन् पतिते-संगरिकादिके पतिते तत्प्रतिपक्षी-निर्विकृतेर्विपरीता विकृतिरेव स्यात्, यथा घृतेऽपतिते निर्विकृतिकं यदि तक्रादिकं तत्र घृते पतिते विकृतिरेवेति खरतराभिमतानन्दसूरिणा व्याख्यानं कर्त्तव्यं स्यात्, तच्च कथं न कृतमितिविचार्यमिति गाथार्थः ॥१४६॥ अथोपपत्तिं दूषयितुमाह—

नेवं संगरिपडणे विगइगयं किंपि हुज्ज विगईवि। तेणं तप्पडिएविअ वक्खाणे पवयणे मेरा ॥१४७॥

विकृतिवत् संगरकादिपतने किमपि दध्यादिकं विकृतिर्भवेत्, तेन कारणेन तदपतितेऽपीति अपिशब्देन व्याख्याने श्रीसिद्धसेनसूरिकृते प्रवचने मेरा-मर्यादा स्याद्, अयं भावः-संगरिकादावपतितेऽपि सलवणं दधि निर्विकृतिकं भवति, पतिते तु सुतरां स्यादित्यपिशब्दघटितं यच्छ्रीसिद्धसेनसूरिणा व्याख्यातं तदेव प्रवचनव्याख्यानमर्यादाविधायि स्यात्. न पुनः खरतरमतमभक्ष्यविकल्पनयेति गाथार्थः॥४७॥ अथ यावद्विकृतिगतं तावन्निर्विकृतिकप्रत्याख्यानवतां कल्प्यं स्यात्, संगरिकादियोगे चाभक्ष्यत्वादकल्प्यमिति विकल्पं तिरस्कर्तुं नियमाभावमाह—

जं जं विगइगयं खलु तं सव्वं निविअंमि कप्पंति। णो निअमो जिणसमए महुमंसाईण तब्भावा ॥१४८॥

यद्यद्विकृतिगतं तत्तत्सर्वं खलुरवधारणे निर्विकृतिकप्रत्याख्यानवतां कल्प्यमिति न नियमः जिनसमये-जैनप्रवचने, कुतो ?-मधुमांसादीनामपि तद्भावात्- निर्विकृतिकत्वाद्, यदुक्तं प्रवचनसारोद्धार एव-"महुपुग्गलरसयाणं अद्धंगुलयं तु होइ संसट्ठं। गुलपु-

गलनपर्गीम् अरामलय तु सस्तु ॥१॥" इत्यादिग्रन्थेन मासादीनामपि निर्विकृतिकानि भणितानि,न च तानि प्रत्याख्यानवतां भु क्तये युक्तानि, किन्तु पुष्टपरिणामत्तीर्थकृद्भिस्तथा दृष्ट' यथा स्वादिमाहारे गुडः, तदुज्ञापनार्थमागमे भणितानि, मत्स्यामत्स्यवि चारे तु संगरं द्विदलमिति प्रवृत्तिरागममूलिका भावकुलक्रमायाता वा स्यात्तर्हि मांसादिविकृतित्यागवच्चत्यागोऽपि स्वतः सुस्ता- वसय', तथा च व्यर्थमेव चतुर्थचरणकथन साधनेतिकृत्वा न कश्चिदानन्दसूरिरौष्ट्रिक औष्ट्रिकविकल्पितो वेतिगाथार्थ ॥१४८॥ अथ तथाविधमम्मतिदातारमुपालम्भयन्नाह—

ना कहमभक्खसंक माविअ विवलंति सगरिप्पमुह । आणंदसूरिवयणा लिहिअ संदद्दोसाग ॥१४९॥

यदि आनन्दसूरिरौष्ट्रिको न स्यात्तर्हि सर्वमपि निर्विकृतिकं तत्प्रत्याख्यानवतां नियमेन कल्पत एवेति नियमाभावेऽप्यभक्ष्यशङ्का मावयित्वा-उद्भाव्य संगरिप्रमुख द्विदलमित्यानन्दसूरिवचनात्कथं संदिग्धदोषतयाल्पा लिखित ?, तल्लिखने चोभयोरपि प्रवचन- परमार्थानभिज्ञता सर्वजनप्रतीता स्यात्, ह यद्यप्यन्त्यममत्स्यवर्गाद् विदलवर्गाच परित्यागेन वक्ष्यमाणन्यूनक्रियारू पोत्सूत्रेऽप्यन्तर्भवति तथापि विवक्षया मत्स्यवर्गे द्विदलवर्गे च प्रक्षेपादाधिक्यं त्वविरुद्धमिति तात्पर्यमिति गाथार्थ ॥४९॥ अथाधिकोत्सूत्रमुपसंहरन्नाह—

एवं भवरयरकमण छविहमुस्सुत्तमहिअमिह वुत्तं । म पाय पमुपाय अण्णापि इमाइ जुत्तीए ॥१५०॥

एव-प्रागुक्तप्रकारेण स्वगच्छमतऽधिकमुत्सूत्र षड्विधमुक्त तस्मायो बहुवार-प्रायशो बाहुल्येन बहु-भूयान् वादो-निवन्धक मक्तपाशो लिम्पितत्वेन विपाको यत्रेति तत्रया, अनया युक्तया अन्यदप्युत्सूत्रजातं तन्मते स्वतो योज्यमिति गाथार्थ ॥ १५० ॥

इत्यधिकोत्सूत्रविधिर्दर्शित', अथोनमुत्सूत्रमाह—

अह ऊणं उस्सुत्तं किरिआरूवंऽपणेगहा तेसिं। तत्थवि जं बहुखायं किंचि पवक्खामि जह णायं ॥५१॥

अथेति 'यथोद्देशं निर्देश' इति न्यायादधिकोत्सूत्रप्ररूपणानन्तरमूनक्रियारूपमुत्सूत्रं, तदप्यनेकधा—अनेकप्रकारं तेषाम्—औष्ट्रि-

काणां मते, वर्त्तते इति गम्यं, तत्रापि बहुख्यातं—सर्वजनप्रतीतं यत्किंचित्, न पुनः सर्वमपि, प्रवक्ष्यामि, यथा ज्ञातं, गुरुमु-

खादितिगम्यमिति गाथार्थः ॥५१॥ अथोनोत्सूत्रविषये द्वारगाथायुग्ममाह—

थीजिणपूअनिसेहो१ पोसहपडिसेहणं अपव्वंमि२। पोसहभोअणचाओ३ सावयपडिमाणमुच्छेओ४ ॥५२॥

समणाणं समणीहिं समं विहारो जिणाण नात्थि५। मासंकप्पविहारो न संपयं६ ऊणमुस्सुत्तं ॥५३॥

स्त्रीजिनपूजानिषेधः१ अपर्वणि—चतुष्पर्व्यव्यतिरिक्ते श्राद्धानां पौषधकरणनिषेधः२ पौषधिकानां भोजननिषेधः३ श्रावकप्रति-

मानिषेधः४ श्रमणीभिः सह श्रमणानां विहारनिषेधः५ संप्रति मासकल्पव्युच्छेदः६, उपलक्षणाद् गृहिणां पानस्याकारादयोऽपि

तेन निषिद्धास्तेऽपि 'गिहिणो पाणागार'त्ति वक्ष्यमाणगाथाया बोध्याः इत्यूनमुत्सूत्रमिति द्वारगाथायुग्मार्थः ॥५२।५३॥ अथ

खरतरमतमूलमुत्सूत्रमाह—

इत्थीणं जिणपूआपडिसेहो खरयराण मूलेण। जिणदत्तेणा य भणिओ पासिअ रुहिर खु जिणभवणे ॥५४॥

जिनपूजानिषेधः खरतराणां मूलेन—आद्याचार्येण जिनदत्तेन भणितः—प्ररूपितः, स्त्रीणां जिनपूजानिषेधे निदानमाह—'पासिअ'त्ति

खुरेवार्थे जिनभवने रुधिरं,पतितमिति गम्यं, दृष्ट्वैव,अयं भावः—पत्तनगरे एकदा जिनभवनगतेन जिनदत्तेन (तत्र रुधिरं) दृष्ट्वा तथा-

विपक्षिदृष्टमोऽस्यात्–यतो अपावित्र्यमात्र स्त्रियो न जिनपूजार्हा इति विकल्पाभिनिवेशाभिमतसमुदायस्य पुरस्तात् स्त्रीणां जिनपूजाकृत्यं निषिद्धवान्, परं स्त्रीणां जिनभवने प्रवेशोऽपि न युक्त इत्युपदेशावसरे पूजा न युक्तेत्युपदेशं ददतो जिनदत्तस्योपदेशाक्षेमन्यमपि योग्यमिति गाथार्थः ॥५४॥ अथ तदुपदेशं दूषयितुमाह—

गगावराहजणिओ रमणीवग्गस्स होइ जो दंडो। जिणदत्तमग्ग जुत्तो मुत्तो नीइस्सरूवेण ॥५५॥

'एकापराधः' एकस्या कस्याश्चित् स्त्रियोऽपराध'–प्रमादवशादाशातनालक्षणस्तेन जनित'–तद्धेतुको रमणीवर्गस्य–स्त्रीजातिमात्रस्य यो दण्डो–जिनपूजानिषेधलक्षणो भवति स जिनदत्तमते, एवेतिगम्य, जिनदत्तमत एव, नान्यत्र, युक्तो–युक्तिसंगत', कृष्णवाससि मषीतिलकमिव, यत' कीदृशो?–नीति'–न्यायस्तत्स्वरूपं नीतिस्वरूपं तेन मुक्तो–रहित', जिनदत्तमतेऽयं न्यायो युक्तो, नान्यत्र, अन्यायस्यापि न्यायतयाऽभ्युपगमादिति गाथार्थः ॥१५५॥ अथ तन्मते न्यायो नास्त्येवेत्यत्र हेतुमाह—

न मुणइ पवयणमेरं न मुणइ जिणआणभंजणापावं। न मुणइ जणववहारं अइप्पसंगाइदोसेहिं ॥१५६॥

न जानाति प्रवचनमर्यां–प्रवचनमर्यादां, तथा जिनाज्ञाखण्डनपापमपि न जानाति, यद्यपि जिनाज्ञाखण्डने महापातकमिति सघोमात्रेण सर्वेऽपि कृपाश्रिका मुखाभ्यां रटयन्ते तथाऽयमपि, परमभिनिविष्टो शुद्धमपि स्वमेव मन्यतेऽत' सम्यगुत्सूत्रस्येवापरिज्ञानात् शुकवत पाठमात्रमयोचरमवगन्तव्य', तथा जनव्यवहारं–लोकस्थितिमपि न जानाति, कैः कृत्वेत्याह?–अतिप्रसंगदोषैः–अतिप्रसंगदोषान जानातीत्यर्थ इति गाथार्थः ॥१५६॥ अथ प्रवचनमर्यादामाह—

केणवि कहिं पमाया विराहिअं किंचि धम्मिअं ठाणं। तंमि अ पुणो पवित्ती अपमाया मेत्ति जिणमेरा ॥१५७॥

केनापि—पुंस्त्रीनपुंसकानामन्यतरेणापि क्वचिद्—अवसरविशेषे प्रमादाद्—अनाभोगाशक्यपरिहारादिलक्षणात् किञ्चिद्धार्मिकं स्थानं—जिनप्रतिमादि चारित्रपर्यन्तं विराधितम्—आशातनादिना सातिचारंकृतं खण्डितं वा भवेत् तस्मिन् यद्विराधितं तस्मिन्नेव पुनरप्रमादात्प्रवृत्तिः 'से' तस्य स्वतो गुर्वादिनोदनाद्वेति जिनशासनमर्यादा, अयं भावः—केनचित्कथंचित्किंचित्प्रमादादशक्यपरित्यागाद्वा धर्मस्थानं विराधितं स्यात्, तस्य तस्मिन्नेवाप्रमादात्पुनः प्रवर्त्तने तन्प्रत्ययमशुभकर्म विशीर्येत, अत एवास्तामन्यत्, खण्डितचारित्रा अप्यार्द्रकुमारादयः पुनश्चारित्रप्रतिपत्त्या स्वर्गापवर्गभागिनोऽनेके प्रवचने प्रतीताः, तथा प्रायश्चित्तविधावपि प्रमादात्प्रतिमा-पुस्तकादिविनाशे नवीनकारापणादिना शुद्धिरित्यपि प्रतीतमेव, न पुनः सर्वथा तज्जातेरपि ततः पृथक्करणमिति गाथार्थः ॥ १९७ ॥ अथातिप्रसङ्गमाह—

**अण्णह अइप्पसंगो पुरिसेवि विराहणाइ पच्चक्खं । तस्स व तव्वग्गस्स य चाए चाओ अ तित्थस्स ॥ १९८ ॥**

यदि प्रागुक्तं नाभ्युपगम्यते तर्हि पुरुषेऽप्यतिप्रसङ्गः, पुरुषेऽपि विराधनादिकमनेकधा प्रत्यक्षं दृश्यते, तद् विराधनादिकं दृष्ट्वा तस्य विराधकस्य वा—अथवा तद्वर्गस्य—पुरुषमात्रस्य त्यागे—विराधितधर्मस्थानपरिहारे तीर्थस्य—चोऽप्यर्थे तीर्थस्यापि त्यागो भवति, अयं भावः—स्त्रीणामपावित्र्यं सार्वदिकं तु न संभवति, सर्वजनप्रतीतिबाधात्, नमस्कारादिपाठगणनाया अप्यकल्प्यत्वापत्तेश्च, किंतु कादाचित्कं, तत् पुरुषेऽपि समानं, कादाचित्कव्रणवतः पुरुषादपि कदाचित्तथाविधव्रणाद्युद्भवरुधिरपातस्य संभवात् जिनभवने, ननु व्रणवतस्तत्र प्रवेशो न युक्त इति चेत्सत्यं, यद्येवं तर्हि तत्र गतस्यापि पुरुषस्य कदाचित्पादादिस्खलनादिसंभवेन तत्प्रभवरुधिरपातोऽनिवार्य एव, एवं विशुचिकावात्यादिप्रभवमप्यपावित्र्यमौदारिकशरीरसाधारणं कदाचिज्जातं तदा स्त्रीपुरुषमात्र-

प्रवचनिषयप्रसक्ति ध्रुनी तत्र गृह नृत्यन्ती मातीति योग्यमितिगाथार्थ ॥१५८॥ अथातिप्रसङ्ग व्युदस्या गाथयाऽऽह—

ज अ गब्भट्ठाण नरनारिथिराहिअ इह नियमा। जिणवत्तघरायारा सव उच्छिप्पपुव्व तं ॥१५९॥

यपदर्गमाने—जिनपूजाद्यविरतिमर्वविरतिलक्षणमिह नियमाद्विराधित स्यात्तत्सर्वं जिनदत्तघरागारात्—तपूगृहरीतेरुच्छिन्नपूर्वं स्यान, तद्वातिमात्रस्यापि पुनस्तत्करणादुपदेशात्प्रतिषेधाय कृतस्तीर्थप्रवृत्तिरिति गाथार्थः ॥१५९॥ अथोत्सूत्रपापापरिज्ञाने हेतुमाह—

निअबुद्धिविगप्पेणं असुहंपि सुहंति मण्णमाणो अ। उस्सुत्तणाणरहिओ कहं पराओ मुणइ पावं ॥१६०॥

निजबुद्धिविकल्पन—निनानुक्रमपीह सुन्दरं स्यात इत्येवमात्मीयकुविकल्पनया अशुभमपि—जिनाज्ञाबहिर्भूतत्वेनानन्तसंसारक्षे-प्रहतुभूतमपि शोभनं—तथाविधकर्मपरिणतिबलेन भ्रमालरिव स्वविकल्पनं मोक्षाङ्गमितिमन्यमानः उत्सूत्रज्ञानरहित'—उत्सूत्रानुत्सूत्र विवेकरूपज्ञानशून्यो वराकः—तपस्वी कथ पापम्—उत्सूत्रहेतुकक्लिष्टकर्मरूप घलस्वरू कथमवगच्छति ?, नावगच्छतीत्यर्थ इति गाथार्थ ॥१६०॥ अथोत्सूत्रपापविपाकमाह—

उस्सुत्तभासगाण बोहीनासो अणंतसंसारो। पाणच्चएवि धीरा उस्सुत्तं ता न भासंति ॥१६१॥

उत्सूत्रभाषकाणां—जिनाप्रोक्तार्थप्ररूपकाणां बोधि'—जिनधर्मप्राप्तिस्तस्या नाश —अनन्तकालम्यस्यादिकरणमतोऽनन्तसंसार', यदागम'—"कालमणंत च सुए अद्धापरियट्टओ अ देसूणो। आसायणबहुलाणं उक्कोसं अंतरं होइ ॥१॥" इति भीआर० नि०(८५२) अत्राशातनाबहुल उत्सूत्रभाष्येव बोध्य , तस्यैव प्रतिसमय भावतस्तीर्थोच्छेदपातकलिप्तत्वात्, एतच्च तीर्थव्यवस्थापनावसरे दर्शि तमिति, यद्यनन्तस्यापि पदद्वमाने भवति तथाप्यनन्तामिरुत्सर्पिण्यवसर्पिणीभिर्मीयमानत्वनापर्यवसानतोच्यते, अत एव एव्व

प्राज्ञैः—तीर्थकरादिभिस्तद्दर्शनमपि—उत्सूत्रभाषिणा चक्षुषा निरीक्षणमपि पापं पापहेतुत्वात्प्ररूपितं—भाषितं, यदागमः—"जे जिणवय-मुत्तिण्णं वयणं भासंति जे उ मण्णन्ति । मद्दिट्ठीणं तद्दंसणंपि संसारवुड्ढिकरं ।१॥" इति भाष्यकारवच इति गाथार्थः ॥१६१॥ अथ लोकव्यवहारमाह—

**परमण्णं भुंजंतो कम्मवसा कोऽवि अण्णहाभूओ । नण्णेसिं परमण्णं जुत्तंति न लोअववहारो ॥ १६२ ॥**

परमान्नं—पायसं भुञ्जानः कर्मवशात्—तथाविधवेदनीयोदयादन्यथाभूतो—विशुचिकानान्त्यादिभाग् भूतः यावदायुःपर्यवसाना-दीर्घनिद्रामापन्नः, एवंविधं परमान्नमतः परमपरेषां—मृतातिरिक्तानां न युक्तं भोक्तुमिति न लोकव्यवहारः, किन्त्वास्तामन्ये, तस्यापि तादृगवस्थां विहाय शेषकालं तत्परमान्नं योग्यमेवेति लोकव्यवहार इति गाथार्थः ॥१६२॥ अथ लोकव्यवहारेऽतिप्रसङ्गमाह—

**इक्किक्कमसणमाई भेए भिण्णा उ माणवाणेगे । ता तुहुवएसरत्ता भुंजंति कहणु कूराई ॥१६३॥**

एकैकाशनादिभेदे—यावन्तोऽशनपानखादिमस्वादिमानां क्रूरादिभेदास्तेषु विवक्षितैकैकस्मिन्नपि भेदेऽनेके—बहवो मानवा—मनुष्याः भिन्नाः—पूर्वस्वभावात्स्वभावान्तरमापन्नाः, कालावस्थाविशेषे शोभनपूर्वावस्थातः अशुभामशनादिहेतुकां रोगादिग्रस्तावस्थामापन्ना इत्यर्थः, एवं मति हे जिनदत्त ! त्वदुपदेशरक्ता—एकापराधेऽपि तज्जातिदण्डो युक्त इति त्वद्वचनरचनरञ्जिताः नु इति वितर्के कथं क्रूरादिकं भुञ्जते ?, किंत्वावयोरभिमता बुभुक्षैव श्रेयस्करी त्वद्भक्तानां, सा च त्वदीयैरपि नादृता, कथं तर्हि स्त्रीजनमात्रेण पूजानिषेधोऽङ्गीकृत इति नेत्रे निमील्य विचार्य लोकव्यवहारबाधेन न भवितव्यमिति गाथार्थः ॥ १६३ ॥ अथ जिनदत्तेन स्त्रीणां जिनपूजा निषिद्धा, दिगम्बरेण च स्त्रीणां मुक्तिश्चेत्यनयोर्मध्ये को दक्ष इति दिदर्शिषया प्रथमं द्वयोरुपदेशमाह—

जिणरत्ता जिणपूजारहिआ रमणीउ जंति निव्वाणं। सिद्धन्तारिहावि रमणी पूएउ जिणं भणइ खमणो ॥१६४॥

जिनरतः खरतरमतानुयायिनः जिनपूजारहिताः स्त्रियो निर्वाणं यान्तीति भणति, क्षपणकस्तु सिद्धान्ताई—मुक्तेरयोग्या अपि नारी जिनपूजां कुर्वन्त्विति भणतीतिगाथार्थः ॥१६४॥ अथानयोः को दक्ष इत्याह—

एवं दुण्हवि दक्खो खमणो निअमेण जेण जिणपूआ। मुत्तिउवाओ भणिओ कज्जं पुण कारणायत्तं ॥१६५॥

एवम्-अमुना प्रकारेणोपदर्शितप्रवृत्तयो' जिनदत्तक्षपणकयोः क्षपणको दक्षो—निपुणो, येन कारणेन जिनपूजा तावन्मुक्त्युपायः—मोक्षहेतुः, स च भणित—प्रज्ञप्तः, कार्यं पुनः कारणायत्तमिति कारणे सिद्धे कार्यमनिच्छाविषयोऽपि सिध्यति, यथा तीर्थकृतां सिद्धिगमनेच्छामपि तदनुकूलानुष्ठानविधायित्वात् स्वत एव सिद्धिसिद्धिः, 'सामग्री हि कार्यमवश्यं जनयती'ति न्यायात्, क्षपणको जिनदत्तापेक्षया दक्षो, न पुनर्धर्मिणां प्रशंसनार्हः इतिगाथार्थः॥१६५॥ अथ जिनदत्तस्य क्षपणकापेक्षया निकृष्टत्वे हेतुमाह—

कारणनिसेहणेण कज्जंपि निसेहिअं हवइ नियमा। तेण खमणा दुगुणं पावं जिणदत्तवयणेण ॥१६६॥

स्वर्गनिपतनन—मुक्तिकारणजिनपूजाप्रतिषेधन कार्यमपि—जिनपूजाजन्यमुक्तिलक्षणं फलमपि नियमान्निषिद्धं भवति तेन कारणेन क्षपणकाज्जिनदत्तवचनाभिधानं द्विगुणं स्त्रीणां कार्यकारणरूपोभयपदार्थनिषेधनेन पापं विज्ञेयमिति सिद्धं क्षपणकान् खरतरो निकृष्ट इति गाथार्थः ॥१६६॥ अथौदारिकशरीरत्वेनाविशेषेऽपि स्त्रीणां जिनपूजा निषिद्धा,न पुनः पुरुषाणामित्यत्र हेतुमाह—

पुरुष विराहिओ सोऽणगोट्ठिअपायरासिनारीहिं। पावावणयणकाले गलग्गहो जेण निम्मविओ ॥१६७॥

एव-पुरुष-मन्यजन्मोपार्जितपापगनिमि' जिनदत्तोपायाभिर्जिनदत्तो विराधित' कस्मिन्महत्यामापदि पातितोऽभूत् तेन कारणेन—

प्राग्जन्मवैरेण मद्वैरिण्य इमाः स्त्रियो जिनपूजाविधानेनानन्तान् पापराशीन् मा प्रक्षिपन्त्विति धिया पापापनयनकाले—जिनपूजाकरणेन पापराशिक्षयावसरे गलग्रहो निर्म्मापितः—पापराशिक्षयहेतुजिनपूजातो गले गृहीत्वा पृथक्कृताः, ननु जन्मान्तरविराधितास्ता इत्यत्र किं लिंगमिति चेदुच्यते, जिनपूजातः पृथक्करणमेव लिङ्गमिति गाथार्थः ॥१६७॥ अथ खरतरः शङ्कते—

**णणु तित्थयरेण समो सूरी भणिओ जिणागमे पयडं। तेण पवट्टिअपूआपडिसेहे कह णु उस्सुत्तं? १६८॥**

ननु भो जिनागमे तीर्थंकरेण समः—तीर्थंकरसमानः सूरिः—आचार्यः प्रकटं भणितः तत्प्रवर्त्तितपूजाप्रतिषेधः नु वितर्के कथमुत्सूत्रं?, न कथमपीति गाथार्थः ॥१६८॥ अथोत्तरमाह—

**एवं चे दत्तंजलि उस्सुत्तं तुह मयंमि संपण्णं। पुत्तिनिसेहप्पमुहं तम्मयसूरीहि जं वुत्तं ॥१६९॥**

एवं चेत्तर्हि त्वन्मते—खरतरमते उत्सूत्रं दत्ताञ्जलि संपन्नम्, अतः परं खरतराभिप्रायेणोत्सूत्रं कदापि कस्यापि न भवेद्, यतो मुखपोतिकाप्रमुखं तन्मतसूरिभिः—आञ्चलिकाचार्यैरुक्तम्, एतावता दिगम्बरादिपाशपर्यन्ता नोत्सूत्रिणो भवेयुः, तत्तन्मार्गस्य तदीयतदीयाचार्यैरुक्तत्वात्, न चेष्टापत्तिः, त्वदीयपूर्वजैराकाञ्चलिकागमिकादयो गणधरसार्द्धशतकवृत्तौ "मुद्धाणाययणगये"ति गाथावृत्तौ प्रत्येकं नामग्राहं दूषिता इति गाथार्थः ॥१६९॥ अथ तात्पर्यमाह—

**तम्हा सो जिणसरिसो सम्मं जो जिणमयं पयासेइ। इहरा उ पावपुंजो परिवज्जो पुण्णसन्नेहिं ॥१७०॥**

तस्मात्स एवाचार्यो जिनसदृशः यो जिनमतं सम्यक् यथावस्थितं प्रकाशयति, इतरथा स पापपुञ्जः—केवलपापात्मा परित्याज्यः—दूर दूरेण परिहरणीयः, कैः?—'पुण्यसंज्ञैः' पुण्या—मिथ्यात्वादिकालुष्याप्रतिहता संज्ञा येषां ते तथा, यद्वा पूर्णसंज्ञाः सम्यग्दृष्टय

जिनपूजाव्यवस्थापका आस्माकीना वादिश्रीदेवसूरिश्रीहेमाचार्यप्रभृतयो भूयांसो येषां भयेनोष्ट्रमारुह्य पलायनं जिनदत्तस्य स्त्रीजिनपूजानिषेधहेतुकं संपन्नम्, एतेन केचिदज्ञाः पर्युषणाचतुर्थीवत् स्त्रीजिनपूजानिषेधोऽप्याचार्यप्रवर्त्तितः प्रमाणमिति वदन्ति तेऽपि तिरस्कृताः, यत्किंचिदाचार्यप्रवर्त्तितस्य प्रामाण्याभ्युपगमे प्रवचनमात्रस्याप्युच्छेदापत्तेरित्यलं विस्तरेणेति गाथार्थः ॥१७२॥

अथ स्त्रीजिनपूजानिषेधे निगमनमाह—

एएण तित्थसम्मय पयट्टिअं तहविहेण पुरिसेण। तं सवं जिणआणा नऽण्णंपि अणंतरुत्तुव्व ॥१७३॥

एतेन—प्रागुक्तयुक्तिप्रकारेण तथाविधागमव्यवहारियुगप्रधानादिपुरुषेणाच्छिन्नपरम्परागततीर्थसम्मतं प्रवर्त्तितं तदेव जिनाज्ञा, न पुनरन्यदपि जिनदत्तमतेन तत्समुदायसम्मतमप्युक्तं प्रमाणं भवति, किंवद्?—अनन्तरोक्तवत्—स्त्रीजिनपूजानिषेधो न तीर्थप्रमाणं तद्वत्, तथाऽन्यदप्युक्तं वक्ष्यमाणं च खरतरमताकर्षकप्रवर्त्तितं न प्रमाणमिति गाथार्थः ॥१७३॥ अथेह प्रकरणे स्त्रीजिनपूजाविषये सिद्धान्ताक्षराणि कथं न दर्शितानीति स्वकीयानामपि केषांचिच्छङ्का स्यात्तदपाकृतये प्राह—

इह सुत्तसम्मईए पओअणं नत्थि जेण तव्वयणं। मूढमुहमुद्दरूवं सामायारित्ति अम्हाणं ॥१७४॥

इह प्रकरणेऽमुकसिद्धान्ते स्त्रीणां जिनपूजा भणितेत्येवंरूपेण सूत्रसम्मत्या प्रयोजनं—फलं नास्ति, तत्र हेतुमाह—येन कारणेन स्त्रीजिनपूजानिषेधरूपाऽस्माकं सामाचारीति मूढमुखमुद्रारूपं तद्वचनं—तेषां साम्प्रतीनानां खरतराणां वचनं विद्यते, अयं भावः—ननु भोः खरतर! स्त्रीपूजानिषेधः किं सूत्रोक्तोऽच्छिन्नपरम्परागतो वेत्येवंरूपेणोदीरितोऽप्यौष्ट्रिको भणति—न हि वयं स्त्रीजिनपूजा सिद्धान्ते निषिद्धेति ब्रूमः, किंत्वस्माकं गच्छसामाचारीति, एतद्वचनं मूर्खाणां मुखमुद्रा स्यात्, एतद्वचनश्रवणमात्रेण जिनवचनानवगत-

परमाधास्तुष्टिमाञ्जो भवन्ति-अहो एतऽपि सम्यग्वादिनो दृश्यन्ते इति,न तु जिनवचनपरमार्थज्ञास्तु तावदित्थं विचारयन्ति-राज
धनमादाय नश्यन्चौरः दैरिकैर्गृहीत्वा राजसमीपमानीतो निग्रहकालावसरे पृष्टवान् -अहो अयं सत्यवादीतिकृत्वा किं राज्ञा मोच्यते?,
एवमपमपि, अन्यथा लुम्पाका अपि तथा वध्यमाना उपवर्णीया मत्यवादितया या वक्तव्या स्युरित्यादि स्वयमेव पर्यालोच्य,
यथासमाचारीयुक्ता तथाविधो धूर्तो न विश्वसनीय', किंतु यथा ननु भो चौर! त्वत्कृ'त शुभमशुभ वति नोदितो अगत्स्थितिवि
लोपाद्यकोऽशुभमेव मूते,तत्कृतो'पि तन्मुखादेव कर्तव्यो भवद्, एवमत्रापि ननु भो जिनदत्तापत्य! श्रीजिनपूजानिषेधरूपा त्वद-
भिमता सामाचारी किं सम्यगुतासम्यग्वा?, इत्येवमुदीरितो यदि मूढ' स्यात्तर्हि सम्यगिति वक्तुमशक्तोऽसम्यगेव परं गच्छसामा
चारीति वरमं भयत, तदा च तत्मनाम्न तथा दण्डयोग्य कर्तव्य',अथ भूत कश्चिदागमाग् मूत-सम्यगेव, तदानीं प्रष्टव्य'-
मो तावत्सामाचारी श्रीसुधर्मस्वामिनो'विच्छिन्नपरम्परागता उत त्वदभिमताचार्यास्यहु नेति?, तत्र प्रथमं विकल्पं वक्तुमशक्तो जिन
दत्ताचार्यादेव प्रवृत्तेति ब्रूत,तत्रैवमभिधातव्य-भो मत्सर! स आचार्य किमागमव्यवहारी उत श्रुतव्यवहारी?, प्रथमो वक्तुमश
क्य , तदानीमागमव्यवहारस्य व्युच्छिन्नत्वात्, श्रुतव्यवहार न श्रुतव्यवहारमुल्लङ्घ्य प्रवर्तमाना द्रष्टुमप्यकल्प्य', यो यो यथा
व्यवहारवान् स स त त व्यवहारं पुरस्कृत्य प्रवर्तमानो जिनाज्ञाराधको, नान्यथा,एव च मति श्रुतव्यवहारवानप्यागमव्यवहारिणो
ऽप्यधिकमात्मानं मन्यमान' कथं श्रीजिनपूजानिषेधरूप प्ररूपयन् कीदृशो भण्यते?,वक्तुमप्यशक्य इत्यर्थ , यतोऽद्यप्रभृत्येतादृश
प्ररूपण न कनापि कृतम् ,अनेन च धार्ष्टर्यमवलम्ब्य विहितमत' सामाचारीति वचन न सुघटस्तु , सामाचारीवचनमप्याधुनिकानामेव
श्रापीनास्तु तदीयास्मीर्यकल्पिरम स्त्रीणां जिनपूजा निषिद्धा इत्यमाठिपुः,यदुक्तं आम्नाननामग्रमयात्य स्त्रीणां स्वहस्तेन जिनबिम्बपूजा

प्रतिपिद्धा,यदुक्त—"संभवइ अकालेऽविहु कुसुम महिलाण तेण देवाणं। पूआई अहिगारो न ओघओ सुत्तनिद्दिट्ठो ॥१॥ न छिविति जहा देहं ओसरणे भावजिणवरिंदाणं। तह तप्पडिमंपि सया पूअंति न सड्ढनारीओ ॥२॥"इत्यादि जिनदत्तसूरिकृतस्य कुलकस्य जिनकुशलसूरिकृतायां वृत्तौ,अत्र स्त्रीजनमात्रस्य पूजा निपिद्धा,सापि जिनोक्तेति तीर्थंकरकलङ्कदानं,या तु गाथाद्वयसम्मतिदर्शिता सा न स्वयं कृत्वैव शास्त्रोक्तमिति शास्त्रस्यापि कलङ्कदानं,नहि काप्यागमे एतद् गाथाद्वयमस्तीति, अत एव खरतरजातिस्वाभाव्याशयमतिदानं प्रायः कलङ्कमेव बोध्यं, ननु तथाविधोऽपावित्र्यहेतुकामाशातना दृष्ट्वा श्रीजिनेन्द्रविषयकपरमभक्त्युल्लसितमानसोऽस्मद्गुरुः स्त्रीणा जिनपूजां निपिद्धवान तत्र को दोप इति चेन्मैवं, तीर्थकृद्गणधरादीनां तीर्थस्य च महाशातनाकारित्वाज्जिनाज्ञामन्तरेण तीर्थकृदुद्देशेनापि कृतस्य कृत्यस्य महानर्थहेतुत्वाद्,यदाहुः श्रीहरिभद्रसूरिपादाः—"समतिपवित्ती सव्वा आणाबज्झत्ति भवफला चेव। तित्थकरुद्देसेणावि ण तत्तओ सा तदुद्देसा ॥१॥" इति पञ्चाशकसूत्रे, अस्या वृत्तिर्यथा—स्वमतिप्रवृत्तिः—आत्मबुद्धिपूर्विका चेष्टा सर्वा—समस्ता द्रव्यस्तवभावस्तवविषया आज्ञाबाह्या—आप्तोपदेशशून्या इति हेतोर्भवफलैव—संसारनिबन्धनमेव, आज्ञाया एव संसारतारणहेतुतया प्रमाणत्वादिति, ननु या तीर्थकरानुद्देशवती सा भवफला युक्ता, नत्वितरा,जिनपक्षपातस्य महाफलत्वादित्याशङ्क्याह -तीर्थकरोद्देशेनापि—जिनालम्बनतोऽपि,आस्तां ततोऽन्यत्र,स्वमतिप्रवृत्तिर्भवफलैवेति प्रकृतं,कुत एवं?—यतो न तत्त्वतः—परमार्थतः सा· तीर्थकरोद्देशवती स्वमतिप्रवृत्तिस्तस्मिन् तीर्थकरे उद्देशः—प्रणिधानं यस्याः सा तदुद्देशा,य एवाज्ञाबाह्यो वर्त्तत इत्यभिधीयते,नापरः इति श्रीपञ्चाशकवृत्तिः। किंच तथाविधाशातनाहेतुरपावित्र्यं स्त्रीणां नाधुनिकादिकालविशेषजन्यं,किंतु सर्वकालीनं स्त्रीस्वभावजन्यं,तच्च तीर्थकरादिकालेऽपि समानं,एवं च सति स्त्रीणां जिनपूजा जिनादिभिर्न निपिद्धा जिनदत्तेन च निपिद्धेति

नीपक्षादिभ्याऽपि किं जिनवृत्ता लष्टत? यन कदाचित्कनापीत्थं न प्ररूपितमयं चैतादृश परमभक्तो मन तीर्थकरपूजाऽपि निषि वत्यादिसूक्तिभि' म तिरस्करणीय', परिहरणीयो दर्शनतोऽपीति गाथार्थ॥१७४॥ अथ किंवस्केन हेतुना तिरस्करणीय इत्याह—

पागयभागमसक्कयकरणे मासंतु सिद्धसेणोऽवि। जिणगणहरआसाई का मत्ता कुमगजिणवत्ते? ॥७५॥

प्राकृतागमसंस्कृतकरणं—प्राकृतभाषया आगम'—सिद्धान्त स प्राकृतागमस्तस्य संस्कृतकरण—संस्कृतभाषया रचन प्राकृतसि-द्धान्त संस्कृत करोमीति रचनवचन मापमाण' सिद्धसेनोऽपि—श्रीसिद्धसेनदिवाकरोऽपि जिनगणधराशाती—तीर्थकृदाशातनाकारी संघेन, अत एव तद्गुरुणा आक्रोशविषयीकृत्य पाराञ्चितप्रायश्चित्तेन शुद्धीकृत, का वार्ता कुमतजिनदत्ते?, षष्ठयर्थे सप्तमी प्रा कृतत्वात्, तदाकस्य जिनदत्तस्य का वार्ता?, तद्विषय वार्ताऽपि नोचिता, अत्यन्तानुचितप्ररूपकत्वेनाभाषणाभित्यर्थ, उपनययोजना स्वय—श्रीसिद्धसेनदिवाकरेणापि प्रवचनगौरवनिमित्तं परमभक्त्या प्राकृतस्य सिद्धान्तस्य संस्कृतकरणे गुरुमिलापेन निजगुरुर्विज्ञप्तो, गुरुणा पाश्चिमप्रकारेणासौ गुरो पाञ्चोर्ऽपः, वक्तव्यो ममापराध प्रायश्चित्त च दातव्यमित्युक्ते गुरुणा भणितो—वत्स! संस्कृतभाषया रचित' सिद्धान्तो यदि बालादीनामुपकारकोऽभविष्यत्तर्हि स्वयमपि सर्वाक्षरसंनिपातनिपुणत्वेन महाशक्तिभाजो गणधरा एव तथा-ऽरचयिष्यन्, तैस्तु सत्यपि सामर्थ्ये प्रवचनानुपकारिणी संस्कृतसिद्धान्तरचनेति विचिन्त्य प्राकृतभाषानिबद्ध सिद्धान्त: कृत', अतस्तव मम्कृतरचनाभिप्रायो वचन चत्रम अप्यनुचित, गणधरादिमहापुरुषाणां महाशातनाहेत् इति मत्वा पाराञ्चिकप्रायश्चित्तं दत्तम्, एव स्रीणमात्रजन्य जिनवृत्तविषयविराधनाविम्बे सत्यपि यदि स्त्रीणां जिनपूजाऽनुचिताऽभविष्यत्तर्हि जिनकल्पमतिपरया दिवकृणमृतादय एव न्यषेधयिष्यन्, तैस्तु न निषिद्धा, अतस्तन्निषेधने जिनदत्तस्य केवलं गणभृदाशातनैव, यच्च त्वयोक्तं

सिद्धसेनोऽपि किमिन्द्रियपोपनिमित्तं तथा वचन-
जिनेन्द्रविषयरूपरमभक्त्युद्धमिनेत्यादि तत्तु देवायत्तपुरुषवाक्यवदवाच्यमन्तव्यं, सिद्धसेनोऽपि किमिन्द्रियपोपनिमित्तं तथा वचन- विक-
यानासीदिति स्वयमेवालोच्यं, किंच-श्रीसिद्धसेनस्य गुर्वाज्ञामार्गणनिमित्तं तथावचनमभूत्, जिनदत्तस्य गुरोरभावात्स्वयमेव विक-
ल्प्य तदुचितोपदेशद्वारा प्रवर्त्तितमपि, अस्य च प्रायश्चित्तं तीर्थव्यतिरिक्तः को ददातीति वक्तव्यमिति गाथार्थः ॥ १७५ ॥ अथ
तीर्थासम्मतस्य स्त्रीजनपूजानिषेधस्य भाषणे फलमाह—

**तित्थासम्मयभासणरसिओ तित्थस्स होइ आसाई । सो आसायणबहुलो निअमेण अणंतसंसारी ॥१७६॥**

तीर्थासम्मतभाषणरसिको जिनदत्तादिसदृशः तीर्थस्य—साध्वादिचतुर्वर्णात्मकस्याशातको ह्याशातनाबहुलो नियमेन—निश्चयेनान-
न्तसंसारी, यदागमः—"आसायणबहुलाणं उक्कोसं अंतर होइ" त्ति श्रीआव० नि० इति गाथार्थः ॥ १७६ ॥ अथोक्तयुक्त्या मूढश-
ङ्कापि निरस्तेति दर्शयति—

**एएणं खलु मग्गंतरेहिमिच्चाइमागमं वयणं । देसंतो दूरिकओ पवयणपरमत्थमसुणंतो ॥१७७॥**

एतेन—प्रागुक्तप्रकारेण खलुरवधारणे 'मग्गंतरेहिं'न्ति आगमवचनं मकारोऽलाक्षणिको देशयन् प्रवचनपरमार्थमजानन् दूरी-
कृत इत्यक्षरार्थः, भावार्थस्त्वयं—कश्चित्प्राग्जन्मोपार्जिततथाविधमोहकर्मोदयात् सम्यग्जिनवचनपरिज्ञानशून्यो मार्गामार्गविवे-
ककरणाशक्तः पूत्कुरुते—ननु भोः! पुरुषक्रमायातसामाचारी मार्गो मन्यते, स च प्रवचने प्रमाणमेव,यदागमः—"कहण्णं भंते! स-
मणा निग्गंथा कंखामोहणिज्जं कम्मं वेदेंति ?, गो०! तेहिं तेहिं णाणंतरेहिं दंसणंतरेहिं चरित्तंतरेहिं लिंगंतरेहिं पवयणंतरेहिं
पावयणंतरेहिं कप्पंतरेहिं मग्गंतरेहिं इत्यादि यावत् कंखामोहणिज्जं कम्मं वेदेंति" त्ति श्रीभग० शत० १ उ० ३ (२९) एतद्वृत्त्येक-

श्रा यथा-यथा माग -पूर्वपुरुषक्रमागता सामाचारी, तत्र कयोश्चित् द्विर्मेस्यवन्दनानेकविधकायोत्सर्गकरणादिकाऽऽवश्यकसामाचारी गरन्यर्षां तु न तथेति किमत्र तत्त्वमिति, समाधिम गीतार्थाशठप्रवर्तिताऽसौ सर्वापि न विरुद्धा, आचरितलक्षणोपेतत्वात्, आचर णालक्षणं चेद-"असढेण समाइण्णं जं कत्थइ केणई असावज्जं। न निवारिअमण्णेहिं बहुमणुमयमेअमायरिअं॥१॥"ति(पंच०४७६) प्रवचनवचना"च्छ्रीभगवतीवृत्तौ इत्येवमागमवचनात् श्रीपूजानिषेधात्मिकाऽपि सामाचारी कथं न प्रमाणमित्येवंविधं यद्वचनं तस्य वचनपरमार्थानभिज्ञस्यैवति बोध्यं, यत श्रीजिनपूजानिषेधात्मिका सामाचारी नाचरणालक्षणोपेता, किन्तु विपरीतैवेत्यत्र प्रागुक्तस्य निकरो विचारः, किञ्च-बहुसम्मतमन्याचरितं च प्रायस्तदेव भवति यदागमव्यवहारियुगप्रधानादिमूलकं स्यात्, यथा पर्युषणाचतुर्थी, अन्यथा "जस्स जं परंपरागयं तस्स तं पमाणं" इत्यादिवचनानुपपत्तेः, यतः परम्पराऽपि किं यत्किञ्चित्पुरुषादारभ्याभ्युपगम्यते?, नहि मातिमन्तपुरुषमूलकमन्तरेण परम्परागतमिति भणितुं शक्यते, यत्किञ्चित्पुरुषमूलकाऽपि परम्परागताभ्युपगमे दिगम्बरादिपाश पर्यन्तेभ्योऽपि प्रवृत्त परम्परागतं वक्तव्यं स्यात्, तच्च कस्यापि नाभिमतं, यतः शासनपरोक्षकारेण खरतरो दूषितः, गणधरसार्द्धशत कत्कारेण च शतपदीकारः स्तनिको दूषितः, एवं शतकारकादयोऽपि परस्परं भाव्याः, अत एव श्रुतव्यवहारापेक्षया 'पावयणतरेहिं' न्ति एवं व्याख्यानयता प्रवचनमधीते वेत्ति वा प्रावचनः-कालापेक्षया महापुरुषः, तत्र एकः प्रावचनिक एवं करोते, अपरस्त्वेव मिति किमत्र तत्त्वमिति, समाधिमहत्वारित्रमोहनीयक्षयोपशमविशेषोत्सर्गापवादादिमाचितत्वेन च प्रावचनिकानां विचित्रा प्रवृत्तिः, नासौ सर्वापि प्रमाणम्, आगमाविरुद्धप्रवृत्तेस्त्व प्रमाणत्वादिति व्याख्यानं श्रीभगवतीवृत्तौ, तत्र सर्वापि प्रवृत्तिः प्रमाणतया न भणिता, यतः श्रुतव्यवहारिणा प्रवर्तितं तदेव प्रमाणं स्यादागमानुपाति, अन्यथा प्रवचनव्यवस्थाविप्लवः प्रसज्येतेत्यलं विस्त

रेणेति गाथार्थः ॥१७७०॥ अथ पुनरपि न्यूनमुत्सूत्रमाह—

**अट्ठमिचउदसिपुण्णिमअमावसासुविअ पोसहो णऽण्णो। इअ संवरपडिसेहो जिणदत्तमए महामोहो ॥७८॥**

अष्टमीचतुर्दशीपूर्णिमावास्यासु 'चिय'त्ति एवार्थे तास्वेव पौषधो, नान्यः, अन्यासु तिथिषु न युक्त इत्यर्थः, इत्यमुना प्रकारेण संवरप्रतिषेधो जिनदत्तमते महामोहः—अनन्तभवभ्रमणहेतुर्ज्ञानमिति गाथार्थः ॥१६८॥ अथोक्ताशयरोगप्रतिकारमाह—

**अट्ठमिपमुहतिहीसु निअमेणं पोसहो गिहीण वए। पडिवाइसु पुण नियमाभावो भणिओ अ तत्तत्थे॥१७०॥**

अष्टमीप्रमुखतिथिषु नियमेन,प्रतिपदादिषु पुनर्नियमाभावाद्गृहिणां—श्रावकाणां व्रते पौषधो भणितः,क ?—तत्त्वार्थे—तत्त्वार्थभाष्यादावित्यर्थः, तत्त्वार्थादिकमाह—"दिग्देशानर्थदण्डविरतिसामायिकपौषधोपवासोपभोगपरिमाणातिथिसंविभागव्रतसंपन्नश्चे"ति तत्त्वार्थसूत्रं, 'पौषधोपवासः' पोषधः पर्वेत्यनर्थान्तरं, सोऽष्टमी चतुर्दशीं पञ्चदशीमन्यतमां वा तिथिमभिगृह्य चतुर्थाद्युपवासिना व्यपगतस्नानानुलेपनगन्धमाल्यालङ्कारेण न्यस्तसर्वसावद्ययोगेन कुशसंस्तारकफलकादीनामन्यतमं संस्तारकमास्तीर्य स्थानं वीरासननिषद्यानामन्यतममास्थाय धर्मजागरिकापरेणानुष्ठेयो भवतीति तत्त्वार्थभाष्यं, तट्टीका यथा 'पौषधोपवासो नामे'त्यादिना पौषधस्वरूपं निरूपयति, रूढ्या पौषधशब्दः पर्वसु वर्त्तते, पर्वाणि चाष्टम्यादयः, साधनं कृतेति समासः, नामशब्देन वाक्यस्यालङ्कृतिः, यस्य वा नियमविशेषः तस्येदं नाम पौषधोपवास इति सोऽथाख्यायते पौषधोपवास इत्यादिना भाष्येण,अनर्थान्तरमित्येकार्थता, सोऽष्टमीमित्यादि,सः—पौषधोपवासः उभयपक्षयोरष्टम्यादितिथिमभिगृह्य—निश्चित्य बुद्ध्या अन्यतमां चेति—प्रतिपदादितिथिम्, अनेन चान्यासु तिथिष्वनियमं दर्शयति,नावश्यन्तयाऽन्यासु कर्त्तव्यः, अष्टम्यादिषु तु नियमेन कार्यश्चतुर्थाद्युपवासेनेति

तत्त्वार्थवृत्तौ समाख्यात इति गाथार्थः ॥७९॥ अथ तत्त्वार्थवृत्त्यादेव वक्ष्यमाण फर्द भ्रान्त्युत्पादकमुपन्यस्य समर्थयितुमाह—

मत्तत्थवित्तिमाइसु न य पइदिवसमत्ति वयणमभिहाण । तप्परमत्थो अट्ठमिमाइसु पुणो पुणुच्चारो ॥१८०॥

तत्त्वार्थवृत्त्यादिषु तत्त्वार्थवृत्तिश्रीआवश्यकवृत्तिचूर्ण्यादिषु न प्रतिदिवसेति वचनाभिधान, मकारोऽलाक्षणिकः, 'पौषधोपवासा तिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवसाचरणीयौ' विशेषरूपस्य वचनं तस्याभिधानं—कथन तत्परमार्थः—तस्य तात्पर्यमष्टम्यादिषु तिथिषु पुनः पुनरुच्चारः कर्तव्य इत्यक्षरार्थः, भावार्थस्त्वयं—"पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवसाचरणीयौ" विति श्रीतत्त्वार्थवृत्त्याद्यनुसारेण नियमस्य विद्यमानत्वात् कथं प्रतिपदादिषु भजनेति पराकूतं, तद्-युक्तं, यतः तत्र प्रतिनियतदिवसशब्देन पौषधादिचिकीर्षया स्वाभिमतो दिवसो ग्राह्यः, स च पौषधाद्यकरणे प्रायश्चित्तमासेवनात् चतुष्पर्व्यादिरूपो नियमेन ग्राह्य, अपरस्त्वनियमेनेति, तथा मा भवतु तदनुष्ठितानुष्ठानापद्यमान चारित्रोच्चारवज्जिनप्रतिमाप्रतिष्ठा-वत्ता पौषधोच्चारानुष्ठानमपर्यवसायि मा भवत्वित्यत्र, तत्र कालनियमार्थमाह—'न प्रतिदिवसाचरणीया'विति, यद्वा स्वाभिप्राया-नरदिनादिदिवसानुगामित्वप्रतिषेधायाह—न प्रतिदिवसाचरणीयाविति, अयं भावः—नहि सकृदुच्चरितः पौषधो द्वितीयादिदिवस-गामी भवितुमर्हति, नवा जिनप्रतिष्ठावत्सकृत्कृतमतिथिसंविभागः प्रतिदिवसमनुगच्छति, किं त्वतिथिसंविभागचिकीर्षुभिः प्रति-दिवसमुभावपि यथाशक्ति कर्तव्यावेव, कथमन्यथोपधानवाहनादिविधौ प्रथमदिवस एवाद्य अष्टादशादीन् पौषधान् प्राप्नन्ति?, तस्मात्पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयाविति प्रथमं वाक्यं विवक्षितदिवसानुष्ठानस्यैव ज्ञापकं, न प्रतिदिव-साचरणीयाविति द्वितीयं वाक्यं तु कालनियमज्ञापकम्, अत एव पौषधोच्चारकालेऽपि "जाव दिवसं अहोरत्तं पज्जुवासामी"

त्यादि, न पुनः क्वापि "दिवसं अहोरत्तं दुन्नि अहोरत्ते वे" त्यादिपाठः सम्प्रदायादागतः, न चैतत्काल्पनिक, तत्त्वार्थवृत्तिकृता तथैव प्रदर्शितत्वात्, तथाहि—यथाऽणुव्रतानि तथा गुणव्रतान्यपि सकृद्गृहीतानि यावज्जीवं भावनीयानि, शिक्षापदव्रतानि सामायिकदेशावकाशिकपौषधोपवासातिथिसंविभागाख्यानि चत्वारि, प्रतिदिवसमनुष्ठेये द्वे सामायिकदेशावकाशिके, पुनः पुनरुच्चार्ये इतियावत्, पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवसाचरणीयौ, पुनः पुनरष्टम्यादितिथिष्वनुष्ठीयेते इति, शिक्षा—अभ्यासस्तस्याः पदानि—स्थानान्यभ्यासविषयास्तान्येव व्रतानि शिक्षापदव्रतानि, गुणव्रतानि तु न प्रतिदिवसग्राह्याणि सकृद्ग्राह्याण्येव इति तत्त्वार्थवृत्तौ पत्र १९४ सर्वपत्र २६३, अत्रोक्तवाक्यद्वयस्यापि पुनः पुनरष्टम्यादितिथिष्वनुष्ठेयेते इति परमार्थः प्रदर्शितः, अत एव प्रथमपञ्चाशकवृत्तौ श्रीअभयदेवसूरिभिः पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयावित्येकमेव वाक्यं निगदितमिति गाथार्थः ॥८०॥ अथ विरोधमाह—

सिक्खा पुण अब्भासो करणिज्जं पइदिणं खु तंपि वयं। अट्ठमिमाइसु कज्जो नन्नासु विरुद्धवयणमिणं ॥८१॥

शिक्षा पुनरभ्यासो भण्यते, तच्च व्रतं प्रतिदिनं—दिनं२ प्रति करणीयं—कर्त्तव्यम्, अन्यथाऽभ्यासस्यैवासंभवाद्, अभ्यासो हि प्रतिदिनं कर्त्तव्यार्हः, यदुक्तं—"अञ्जनस्य क्षयं दृष्ट्वा, वल्मीकस्य च वर्द्धनम्। अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥१॥" इत्येवं सत्यप्यष्टम्यादिष्वेव पौषधो विधेयो नान्यास्विति विरुद्धवचनमिदमिति गाथार्थः ॥८१॥ अथ प्रतिबन्दीमाह—

सिक्खावएसु चउसुवि तिण्णि वयाइं तु सम्मयाइं तुहं। पइदिणकरणिज्जाइं किं पोसहं पंतभंगणं? ॥८२॥

शिक्षाव्रतेषु चतुर्षु त्रीणि व्रतानि सामायिकदेशावकाशिकातिथिसंविभागनामानि तु तवापि—भवतस्त्वापि प्रतिदिनं करणीयानि

मम्मतानि, किं पौषधपड़िमेदेन–पौषधस्य चड़िमेदः क्रियते तत्र किं कारणं ?, को वा पौषधस्यावसर इति गाथार्थः ॥ ८२ ॥
अथातिप्रसङ्गनानामावमाह—

न मुणइ अइप्पसंगं अतिहीण संविभागकरणम्मि । नवमीपमुहतिहीसु उववसतोवि निहओ ॥ ८३ ॥

नवमीप्रमुखतिथिषु–पौषधिको हि पारणके साधुभ्यो दत्वैव दंक्ते इत्यादिरूपम नवम्यादिषु विधिप्रवर्तनादतिथिसंविभागप्रमुपरि-
अपि निह्नवो–ठक्करहितोऽतिथीनां साधूनां संविभागेऽतिप्रसङ्गं न जानाति, यदि क्षिप्रतरूपोऽपि पौषधोऽष्टम्यादितिथिष्वेव
पुक्तस्तदतिथिसंविभागोऽपि तत्रैव युक्तो भवेत्, तथा च नवम्यादिषु तत्प्रतिषेधप्रसङ्गः, न चापादतिथिसंविभागो नवम्यादिष्वेव
संभवतीति वक्तव्यम्, अष्टम्यादिष्वपि जिनवल्लभेनापि भणनात्, तथाहि–"जो पुण आहारपोसही त्यजो सो पुण्णे पच्चक्खाणे
तीरिअ समासमणदुगेण मुहपुत्तिं पडिलेहिअ समासमणेण वंदित्ता भणइ–इच्छाकारेण संदिसह भत्तपाणं पारावेह,पोरसि पुरिमड्ढ
पठविहार एकासणं निव्विअं आयंबिल वा कयं, जा काइ वेला ताए पारावेमि,तओ सक्कत्थएण चेइए वंदिअ सज्झाय सोलस वीसं
वा सिलोगे पढउं जहासंभवमतिहिसंविभागं काउं घरहत्थपाए पडिलेहिअ नमोक्कारपुव्वमरत्तदुट्ठो भुंजे"इति पोसहविधिप्रकरणे,
न तु सोऽतिथिसंविभागो व्यस्मद्वर्तं न भण्यते, किन्तु यदागमः–"साहूण कप्पणिज्जं जं नवि दिण्णं कहिंवि किंचि तहिं । धीरा-ज
इयपारी सुसावगा तम भुंजंति ॥१॥"त्ति श्रीउप०, इति चरित्र श्रीत, 'तुष्यतु दुर्जन' इति न्यायाच्चा व्यस्तव्रतस्वरूपाभावेऽपि
निर्जराहेतुत्वेन अणुदानमभ्युपगम्यते तथैवव्रतस्वरूपाभावेऽपि निर्जराहेतुत्वेन प्रतिदिनं पौषधोऽप्यभ्युपगन्तव्यो, न्यायस्य
समानत्वादिति गाथार्थः ॥८३॥ अथ पौषधो हि प्रतिक्रमणवभियतकालानुष्ठानं भविष्यतीतिपरामर्शमपाकरोति—

तदिट्ठंतो संवररूवे कह पोसहे जुत्तो ? ॥८४॥

पडिकमणं पच्छित्तं रयणादिणपमुहपावसंबंधी । तद्दिट्ठंतो संवररूवे कह पोसहे जुत्तो ? ॥८४॥

प्रतिक्रमणं–रात्रिकदैवसिकपाक्षिकचातुर्मासिकसांवत्सरिकलक्षणं पञ्चविधमपि रजनीदिनप्रमुखपापसंबन्धिप्रायश्चित्तं तद्दृष्टान्तः संवररूपे पौषधे कथं युक्तो ?, न कथमपीत्यर्थः, प्रायश्चित्तं च यथोक्तमेव भवति, नाधिकमिति गाथार्थः ॥४८॥ अथ प्रायश्चित्तं नाधिकं भवतीति दर्शयति—

असिइसयं उववासा पच्छित्त आगमुत्तमुक्कोसं । न तहा सेसतवेसुं संवररूवेसु निअमोऽवि ॥८५॥

अशीतिशतम्–अशीत्याऽधिकं शतमशीतिशतमुपवासाः उत्कृष्टं प्रायश्चित्तमागमोक्तं, न तथा संवररूपेषु शेषतपस्सु–गुणरत्नसंवत्सरादिषु नियमोऽपि, एतावदेव तपः कर्त्तव्यं नाधिकमितिनियमः,न क्वापि केनाप्युक्त इति गाथार्थः ॥८६॥ अथ गाथाचतुष्टयेन वृद्धाभिप्रायमाह—

अहवा सिक्खचउक्के पडिनिअयदिणंमि अंतिमं जुअलं । इअ हरिभद्दपमुहाण वयं सिद्धंतसुपसिद्धं ॥८६॥

तत्थ पडिनिअसद्दो विवक्खिअत्थाण वायगो होइ । सावि विवक्खा दुविहा निअमानिअमेहिं णायव्वा ॥८७॥

णिअमेणऽट्ठमिपमुहा अणिअमेणेहरासु अ तिहीसु । तेणं न प्पइदिवसाचरणीआ निअमपडिसेहो ॥८८॥

अथवेति वृद्धवादाभिप्राये, शिक्षाचतुष्के–शिक्षाव्रतचतुष्टये प्रतिनियतदिनेऽन्तिमं युगलं–पौषधातिथिसंविभागलक्षणमिति–अमुना प्रकारेण हरिभद्रप्रमुखाणां वचः सिद्धान्तसुप्रसिद्धं–सिद्धान्ते श्रीआवश्यकवृत्त्यादिलक्षणेऽतिप्रसिद्धमिति गाथार्थः ॥ ८६ ॥ तत्र 'पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयावि'त्यत्र प्रतिनियतशब्दो विवक्षितार्थानां वाचको भवति, साऽपि विवक्षा

लोचना२ऽष्टमतपो३ लोच४ सांवत्सरिकप्रतिक्रमण५ लक्षणानि पञ्च कृत्यानि नियतानि, तान्यधिकृत्य प्रथमो भाद्रपदो नपुंसकवदसमर्थः, नपुंसकत्वं च ज्योतिर्विदां प्रतीतमेव, यदुक्तं—"यात्राविवाहमण्डनमन्यान्यपि शोभनानि कर्माणि । परिहर्त्तव्यानि बुधैः, सर्वाणि नपुंसके मासि ॥१॥" इति, तस्मात्सर्वोत्तमो द्वितीय एव भाद्रपदोऽधिकर्त्तव्यः, एवमष्टम्यादयस्तिथयः कार्त्तिकादयश्च मासा अपि योजनीया इति गाथार्थः ॥२०८॥ अथ परोक्तमुपहास्यवचनमुद्भाव्य दूषयितुं गाथायुग्ममाह—

एएणऽहिए मासे पुण्णापुण्णायवच्चमच्चुछुहं । तह लम्भलाहु लोए न होइ किं जेण सो कीवो ? ॥२०९॥

एवमुवहासवयणं नगिणस्स वअलंकिअंपि पइ पुरिसं । जं चाउमासपमुहे निअगलपासंपि न मुणेइ ॥२१०॥

एतेन—प्रागुक्तप्रकारेणाधिके मासे पुण्यं—दानादिलक्षणमपुण्यं—हिंसादिलक्षणं पापम् आदिशब्दात् तज्जन्यं कार्यं स्वर्गादिलक्षणमपत्यं—गर्भधरणप्रसवादिलक्षणं मृत्युः—पञ्चत्वं क्षुधा उपलक्षणात्तृषादिपरिग्रहः,पुण्यं चापुण्यं चादिर्यस्य पूजादेस्तत्पुण्यापुण्यादि तच्चापत्यं च मृत्युश्च क्षुधा चेति समाहारद्वन्द्वः, तथा लभ्यलाभो लोके किं न भवति ? येन सोऽभिवर्द्धितो मासः क्लीबो भण्यते, उपलक्षणात्किं स मासः काकेन भक्षित इत्येवमुपहास्यवचनं नग्नस्यालङ्कृतं—वस्त्राभरणादिभिः सर्वाङ्गविभूषितमपि पुरुषं प्रतीव बोध्यं, यथाहि कश्चिद्भूतार्त्तो विवस्त्रीभूय परिभ्रमन् विभूषितमपि पुरुषमुपहसति तथाऽयमपीति, भूतार्त्तत्वे हेतुमाह—'जं चाउ' त्ति यत्—यस्मात् चातुर्मासकप्रमुखे—चातुर्मासिकसांवत्सरिककृत्येषु निजगलपाशमपि न जानातीत्यक्षरार्थः,भावार्थस्त्वयम्—अत्र कश्चिच्छ्रावणिकोऽतिवाचालतया ब्रूते—ननु भो अधिको मासः किं काकेन भक्षितः किं वा तस्मिन् मासे साधुदानजिनपूजादिकृत्यजन्यं पुण्यं न भवति उत हिंसाद्याश्रवसेवातः पातकं न भवति उत गर्भाधानप्रसवादि न भवत्यथवा ऋणाद्यसंभवः किं वा तन्मासे बुभुक्षा

प्यमिमता पञ्चमास्यपि चतुर्मासीतयेति, यदुक्तं साधुदानादिपुण्यकृत्यं तच्च न मासनियतं, किंतु दिनमात्रप्रतिबद्धं, तच्च यं कञ्चन
दिनमवाप्यापि कर्त्तव्यमेव, तत्रापि क्षणविशेषनियतत्वेन,रात्रिकदैवसिकप्रतिक्रमणयोरपि निरालम्बनं जिनोक्तवेलामतिक्रम्य परा-
वर्त्य वा करणेऽनाज्ञैव, पाक्षिकदैवसिककृत्याद्यपेक्षया तु प्रथमोऽपि मासः प्रमाणमेव, मासकुक्षिनिपतितत्वात्पाक्षिकदैवसिक-
कृत्यादेः, पातकं तु प्रतिप्राणिनं प्रतिसमयं तथाविधाध्यवसायादिसामग्र्यनुरूपमुत्पद्यते,अपत्यमृत्युक्षुधादीनां तु मासादिष्वकृत्काला-
पेक्षा दूरे,समयस्याप्यपेक्षा नास्ति,अन्यथा मनुष्यक्षेत्राद्बहिर्वार्त्तिनां तिर्यग्देवादिजन्तूनां तदभावापत्तेः,तत्र समयादिरूपस्य कालस्या-
भावादित्यादि स्वयमेव पर्यालोच्य बालचेष्टितं परिहर्त्तव्यमितिगाथायुग्मार्थः॥९॥२१०॥ अथ पराभिप्रायेणाशङ्क्य दूषयितुमाह—

णणु बीएवि पमाणं भद्दवए तस्स कज्जमवि दुगुणं । अपमाणे उवहासो इहंपि किं कायमुहवडिओ ? ॥२११॥

ननु द्वितीये भाद्रपदे प्रमाणे तस्य भाद्रपदस्य कार्यं सांवत्सरिकप्रतिक्रमणादि तदपि द्विगुणं स्यात्, द्वयोरपि भाद्रपदयोः
सांवत्सरिकादि कृत्यं युक्तं भवेदित्यर्थः, अप्रमाणे उपहासस्त्वदुद्भावितः किमधिको मासः काकेन भक्षित इत्यादिलक्षण इहापि—
द्वितीयमासस्याप्रामाण्ये वक्तव्ये किं काकमुखपतित इत्यक्षरार्थः, भावार्थस्त्वयं—खरतरेण भाद्रपदे वृद्धे प्रथम एव मासः प्रमाणत-
याऽभ्युपगतः, तत्र खरतर एव प्रष्टव्यः— ननु भो श्रावणिक! द्वितीयो भाद्रपदः प्रमाणमुताप्रमाणं वेति विकल्पद्वयी, अत्र प्रमाण-
मितिचेत् तर्हि प्रथमभाद्रपद इव द्वितीयेऽपि भाद्रपदे पर्युषणाकृत्यं कर्त्तव्यं भवेद्, अप्रामाण्ये च काकभक्षणाद्युपहासस्त्वदु-
द्भावितोऽपि किं काकेन भक्षित इत्युपहासस्यैवोपहासो भवद्गलपाशकल्प इतिगाथार्थः ॥२११॥ अथाभिवर्द्धिते मासादौ यस्य
प्रामाण्यं तदाह—

र्द्दशीमात्रस्थाने पूर्णिमामावास्यो गृह्यन्ते इति तच्चित्रं, तस्मादुत्तरत्र दिने क्षीणतिथेः संबन्धाभावात् न तत्तिथिलभ्यं लभ्यते चे'त्यादि जिनवल्लभेन पौषधविधिप्रकरणे भणितं, किं च विधिप्रपायां चतुर्मासचतुर्दश्याः पाते पूर्णिमोक्ता,सांप्रतीनैस्तु चतु-

इतिगाथार्थः ॥२१३॥ अथ पराशयस्य कुत्सितत्वमुद्भाव्य तिरस्करोति—

**वुड्ढीए पुण पढमा पुण्णा हाणीइ मूलओ गलिआ। इअ वयणं दुव्वयणं सोअव्वं नेव निउणेहिं ॥२१४॥**

वृद्धौ पुनः प्रथमा तिथिः पूर्णा हानौ च मूलतोऽपि गलिता इति वचनं दुर्वचनं-मृषाभाषणं न निपुणैः श्रोतव्यं,किन्तु अपक-र्णयितव्यमितिगाथार्थः ॥२१४॥ अथाश्रोतव्ये हेतुमाह—

**जम्हा तीए ऽवयवो पहाणुदयसंजुओ अ बीअदिणे। हीणा पुण पुव्वदिणे पुण्णा पण्णेहिं दिट्ठत्ति ॥२१५॥**

यस्मात्कारणात् 'तीए'त्ति तस्या एव तिथेः प्रधानोदयसंयुक्तोऽवयवो द्वितीये दिने वर्त्तते, हीना पुनः पूर्वदिने पूर्णा वर्तते, नहि हीनत्वं नाम तिथेर्नाशः, किंतु यदा घटिकाद्वयमिता त्रयोदशी चतुर्दशी च चतुष्पञ्चाशदादिघटिकामिता स्यात्तदा तस्यास्तिथे-र्हीनत्वं प्रतिपद्यते, तया षष्टिघटिकामितस्य रव्यादेर्वारस्य पूर्तेरभावाद्, एवंविधा च पूर्णा प्राज्ञैः-पण्डितैः ज्योतिःशास्त्रनिपुणै-र्दृष्टेतिगाथार्थः ॥२१५॥ अथ तिथेर्हानौ खरतरस्यार्द्धजरतीयमाह—

**अट्ठमिपडणे सत्तमि चउदसिपडणे अ पुण्णिमापमुहा। इअ अद्धजरइकुक्कुरि कीडइ जिणदत्तनिलयंमि ॥२१६॥**

अष्टमीपतने सप्तमी चतुर्दशीपाते च पूर्णिमाप्रमुखाः-पूर्णिमामावास्य इति अर्द्धजरतिकुक्कुरी जिनदत्तनिलयंमि-जिनदत्तगृहे क्रीडतीति, अयं भावः-यदाऽष्टम्यादितिथिः पतति तदाऽष्टम्यादिसंबन्धि कृत्यं सप्तम्यामष्टमीतिथिया क्रियते, चतुर्दशीपाते चतुर्दश्यां

मुक्तोऽपि गतायां आराध्यत्वेन पर्वरूपायां पूर्णिमायां चतुर्दशीकृत्यं क्रियत,अत्र च चतुर्मासकल्पतिरिक्ता पूर्णिमा अमावास्या च मासक्षपणामेव 'चाउरसहमुद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसहं सम्मं अणुपालेमाणा विहरंती'ति श्रमणवचनात् पौषधव्रतमात्र मङ्गीकृत्याराध्यत्वेनाभिमता, न पुनः क्षपि साधूनामपीयमयुक्तविधिनाऽऽराध्येति, तथा च पाक्षिककृत्यमधिकृत्य यथा त्रयोदशी तथा पूर्णिमापीति कथं पाक्षिककृत्योपयोगिनी, क्षीणा च चतुर्दशी त्रयोदश्यां सर्वात्मना स्थितेति त्रयोदश्यां द्वयोरपि विधमा- ष्या इति गाथार्थः ॥२१६॥ अथ समाप्तिसूर्योदयस्य प्राधान्यसमर्थनाय दृष्टान्तमाह—

आमूला सहगारो मंजरिपज्जंतओ महंतोऽवि। न पहाणो किंनते फल पहाण मणुमन्नुग्ग ॥२१७॥

आमूलात्-मूलादारभ्य मञ्जरीपर्यन्तो महानपि सहकारो न प्रधानः, किन्तु मनुष्योपभोग्यं फलमेवोपगम्यं,फलमेव प्रधानम्, आमूलफलपर्यन्तस्यासण्डस्य वृक्षस्य प्रधानोऽवयव फलं तदतिरिक्तस्याप्राधान्यात्, फलार्थमेव शेषावयवेष्वपि प्रयत्नकरणात्, अत एव फलित एव सहकारे इत्यादिना यत्नकरणं, नान्यथा, फलोपेक्षकाणां तु घटादिविषयस्यैव एव सहकारोऽपीति गाथार्थः ॥२१७॥ अथ दृष्टान्तदार्ष्टान्तिकयोजनाय गाथामाह—

फलसरिसो सो उदओ जम्मि समप्पइ तिही अ मासो अ। मंजरिपज्जंतसमो सेसो फलसाहगो समए ॥२१८॥

फलसदृशः स उदय-सूर्योदयो यस्मिन्नुदये तिथि समाप्यते-यमुदयमुपलभ्य तिथि समाप्तिं याति, च पुनरर्थे,मासो वा- र्णं संक्रान्तिं प्राप्य मासं समाप्तिं याति मेष संक्रान्ति फलसदृशी, तथाविधसूर्योदयसमन्विता तिथिर्मासो वा विपश्चिन्नियत

कार्यहेतुरित्यर्थः, शेषः पुनस्तिथ्यादेरश्वत्थः मञ्जरीपर्यन्तसहकारसमः फलसाधको, विवक्षितफलरूपस्याभिमततिथ्यादेर्हेतुमात्र एवेत्यर्थः, समये—स्वसमये परसमये च, एतावता तिथिवृद्धौ द्वितीया तिथिः मासवृद्धौ च द्वितीयो मासो विवक्षिततिथ्यादेर्वृक्षकल्पस्य फलसदृशो मनुष्यकल्पानामभिमतः, शेषस्तु आस्तां विशिष्टचेतना मनुजाः, प्रशस्तवनस्पतयोऽपि सहकारादयः सूर्यसंक्रान्तिप्रथमं मासं परित्यज्य द्वितीयमास एव पुष्पफलादिकं प्रयच्छन्ति, यदागमः—"जइ फुल्ला कणिआरया चूअग अहिमासयंमि घुट्ठंमि। तुह न खमं फुल्लेउं जइ पचंता करंति डमराइं ॥१॥"ति श्रीआव० नि०(१२५५) यस्तु वृद्धौ प्रथमं मासं प्रमाणयति स च प्रशस्तवनस्पतिष्वपि नान्तर्भावनीयः, यतो वनस्पतिभ्य उद्वृत्यावाप्तमनुजभवो मोक्षमपि याति, अयं तु नियमादनन्तसंसार्येवेति गाथार्थः ॥२१८॥ अथ लोकव्यवहारमाह—

**जम्हा लब्भा अहिअं न देइ दित्तोवि दायगो कोऽवि। तत्थवि पुराणरीई लोअव्ववहारओ णेया ॥२१९॥**

यस्मात्कारणाद्दीप्तोऽपि—दीप्तिमानपि दायको लभ्यादधिकं न कोऽपि ददाति, अर्थान्न दापयत्यपि कोऽपि कारणिकः, तत्रापि लोकव्यवहारतः पुराणरीतिर्ज्ञेया—पूर्वं यया रीत्या देयलभ्यादिव्यवहार आसीत्तयैव रीत्याऽधुनाऽपि न्यायप्राप्तो व्यवहारो भवेत्, नान्यथेतिगाथार्थः ॥२१९॥ अथ तिथिविषये पूर्वरीतिमाह—

**पुव्वं रविउदयजुआ एगा घडिआवि लब्भलाहगरी। अण्णावि ताववेक्खाजुत्ता किं पिहिअ पेडाए ? ॥२२०॥**

पूर्वम्—अनादिकालतोऽद्य यावद् रव्युदययुता एकापि घटिका लभ्यलाभकारी आसीद्, ग्राह्यदायिकाऽभूदित्यर्थः, तत्रत्यं तावत्पाक्षिककृत्यं चतुर्थादि, पाक्षिकत्वेन चाभिमता चतुर्दशी, सा चैकघटिकामिताऽपि ममाभिमूचकसूर्योदययुता पाक्षि-

कृत्स्पदायिकाऽऽसीद्, एतच परस्याप्यभिमतम्, अधुनापि तावदग्रायुक्ता—यथा पूर्वमेकाऽपि पटिका सूर्योदयपुता पाक्षिक-
कृत्यादिष्वनुगमीनपेदानीमपि—द्वितीयदिने मात्नी तु तिथिरस्त्येव अतस्तावस्या प्रकापेक्षा युक्ता, किं विहितमञ्जूषाकल्पया
मार्गानया तिथ्या स्यात् ! न किमपीत्यर्थ इतिगाथार्थः ॥२२०॥ अथ पूर्वरीतिलोपे यत् स्यात्तदाह—

मञ्भाविफमाहकली अवत्तमवि मुद्दिअंपि मजूसं। गिण्हंतो सो तेणुव निग्गहं दारुणं लहइ ॥२२१॥

उम्भाविकलाभकाली अदत्तामपि मुद्रितां मञ्जूषां गृह्णन् सन् स्तेनवत्—चौरवद् दारुणं निग्रहं लभते, अयं भावः—यथा-
सिद्दिने यावच्चतुर्दशी, सा च तम्याधिकफलदायिनी भवत्विति मृगतृष्णदाक्षया नियतकृत्यमधिकृत्याकिञ्चित्करत्वेनादत्ता—नाम
मा आत्मामात्रफलजनकत्वेन मुद्रितमञ्जूषाकल्पा पूर्वा तिथिस्तां च गृह्णन् चौरवद्दारुणं प्रसिद्धारोपणरूपमनन्तसंसारपरिभ्रमणं
लभत इतिगाथार्थः ॥२२१॥ अथ प्रकृतं योजयति—

तम्हा तिहिव मासो बुद्धो बुद्धसुत्तविसओत्ति। मुणिऊण बीअमासो णेओ णिअणामकज्जकरो ॥२२२॥

यस्मात्पूर्वोक्तं तस्मात्तिथिवदभिवर्द्धितायां तिथौ या पूर्वा तिथिस्तद्वत् पूर्वो मासोऽपि पूर्वोक्तयुक्तिविषय इति ज्ञात्वा द्वितीय
मासः—मासपदादिलक्षणो निजनामकार्यकरः पयुषणा मासपदं कार्तिकचतुर्मासकं कार्तिके इत्यादिनिजमानाङ्कितानि यानि कार्याणि
तेषां करः स्यात् इति गाथार्थः ॥२२२॥ अथ पुनरप्ययथास्थानमुत्सूत्रमाह—

''इरिआए पडिक्कमणं पच्छा सामाइअमि भणइ य। भासंतो उम्मत्तो न मुणइ समयपरमत्थं ॥२२३॥

सामायिके—श्रावकाणां सामायिकक्रियायामीर्यापथिकया प्रतिक्रमणं पश्चात्, सामायिकोच्चारानन्तरमित्यर्थः, एतच्चापकर्तु—

अयथास्थान भाषमाण उन्मत्त इव—देवतायत्त इव न जानाति समयादिपरमार्थं—सिद्धान्तपरम्परादिरहस्यमिति गाथार्थः ॥ २२३ ॥

अथ समयादिपरमार्थमाह—

**चित्तविमोहिनिमित्तं भणिआ इरिआ महानिसीहंमि । न य कत्थवि सामइअं असुद्धचित्तेण कायव्वं ॥२२४॥**

चित्तविशोधिनिमित्तमीर्या—ईर्यापथिकाप्रतिक्रमणं श्रीमहानिशीथे भणिता, तथाहि—"से भयवं! जहुत्तविणओवहाणेण पंचमंगलमहासुअक्खंधमहिज्जित्ताणं पुव्वाणुपुव्वीए पच्छाणुपुव्वीए अणाणुपुव्वीए सरवंजणमत्तबिंदुपयक्खरविसुद्धं थिरपरिचिअं काऊण महता पबंधेण सुत्तं अत्थं च विण्णाय तओ णं किमहीएज्जा?, गोअमा! इरिआवहिअं, से भयवं! केण अट्ठेणं एवं वुच्चति जहा णं पंचमंगलमहासुअक्खंधमहिज्जित्ताण पुणो इरियावहिअं अहीए?, गोअमा! जे एस आया गमणागमणाइपरिणामपरिणए अणेगजीवपाणभूअसत्ताणं अणोवउत्तपमत्ते संघट्टणअवद्दावणकिलामणं काऊण अणालोइअअपडिक्कंते चेव असेसकम्मक्खयट्ठयाए किंची चिइवंदणसज्झाणाइएसु अभिरमेज्जा तया से एगग्गचित्ता समाही भवेज्जा न वा, जओणं गमणागमणाइअणेगअण्णवावारपरपरिणामासत्तचित्तयाए केइ पाणी तमेव भावंतरमच्छिड्डिअ अट्टदुहट्टज्झवसिए किंचि कालं खणं विरत्तेज्जा, ताहे तं तस्स फलेण विसंवएज्जा, जया उण कहिंचि अण्णाणमोहमायादोसेण सहसा एगिंदिआणं संघट्टणं परिआवणं वा कयं हवेज्जा तया य पच्छा हा हा हा दुट्ठु कयमम्हेहिंति घणरागदोसमोहमिच्छत्तण्णाणंधेहिं अदिट्ठपरलोगपच्चवाएहिं कूरकम्मनिग्घिणेहिंति परमसंवेगमावण्णे सुपरिप्फुडं आलोइत्ताणं निंदित्ताणं गरहित्ताणं पायच्छित्तमणुचरित्ताणं निस्सल्ले अणाउलचित्ते असुहकम्मक्खयट्ठा किंचि आयहिअं चिइवंदणाइ अणुट्ठेज्जा, तया तयट्ठे चेव-उवउत्ते-से हवेज्जा,-जया तस्स णं परमेगग्गचित्तसमाही हवेज्जा तया चेव सव्वजगजीवपाणभू-

समणाण उद्दिट्ठसंपयी इव जा, ता गोअमा! अपडिक्कंताए इरिआवहिआए न कप्पइ चेव काउं किंचिवि चिइवंदणसज्झाया- इअं फलामायममभिलसमाणं, एएणट्ठेण गोअमा! एवं वुच्चइ—जहा णं गोअमा! ससुत्तत्थोभयं पंचमंगल थिरपरिचिअं काऊण तओ इरिआवहिअं अज्झीए सि भयवं! कयराए विहीए तमिरिआवहिअमहीए? गोअमा! जहा णं पंचमंगलमहासुक्खंधंति (१९–२०) श्रीमहानिशीथसूत्रे तृतीयाध्ययने, उपलक्षणात् "ईर्यापथप्रतिक्रमणमकृत्वा नान्यत्किमपि कुर्यात्स्वाध्यायादिकं" इति श्रीहरिभद्री यावत्कृत्यकरणेऽपि, न च क्वापि सामायिकमप्युक्तविधिना कर्त्तव्यम्, अयं भावः—यावदीर्याप्रतिक्रान्तिप्रतिषेद इहैवेत्य न्नादि समानुष्ठानं श्रीमहानिशीथाध्ययनया ईर्याप्रतिक्रान्त्या चित्तशुद्धिं विधायैव कर्त्तव्यं, सामायिकं पुनरप्युक्तेनैव विधिना कल्पमिदमन्यत्र चाप्यागममनुपलभ्यमानं, तथा परम्परया अप्यमायाद्युक्तिसमत्वाभावात्र कथं सामायिके पश्चादीर्येति गाथार्थः ॥२२४॥ अथ पर आह—

आवस्सयचुण्णिप्पमुहेसु करेमि भंतेमाइ। काऊण य सामइअं पच्छा इरिअत्ति पयडमेय ॥२२५॥

आह परः—ननु भो आवश्यकचूर्णिप्रमुखेषु—श्रीआवश्यकचूर्णिवृत्तिपञ्चाशकवृत्तियोगशास्त्रवृत्तिनवपदप्रकरणवृत्तिभावक दिनकृत्यवृत्तिश्राद्धदिनकृत्यप्रमुखेषु 'करेमि भंते' इत्यादि यावत् सामाइअं काऊण पच्छा इरिआवहिआए पडिक्कमइत्ति प्रकटमेव— स्पष्टवचनमागमे विद्यते तत्र श्री आवश्यकचूर्णिर्यथा "सामाइअं नाम सावज्जजोगपरिवज्जणं निरवज्जजोगपडिसेवणं च, तं सामाइअं दुविहं—गिहत्थाणं साहूणं च, तत्थ गिहत्थाणं कहं भवति? सो दुविहो—इड्ढिपत्तो अणिड्ढिपत्तो अ, जो सो अणिड्ढिपत्तो सो चेइअघरे साहुसमीवे घरे वा पोसहसालाए वा जत्थ वा वीसमइ अच्छइ वा निव्वावारो सव्वत्थ करेइ सामाइअं, चउठाणेसु निअमा कायव्वं, तंजहा—चेइअघरे साहुमूले

पोसहसालाए घरे वा आवस्सयं करेंतोत्ति, तत्थ जइ साहुसगासे करेति तत्थ का विही ?,जइ परपरभयं नत्थि; जइवि केणइ सम विवाओ नत्थि, जइ कस्सवी ण धरेति, मा तेण अंछविअंछिअं कड्ढिजाति, जइ धारणगं दहूण ण गेण्हति मा नासिज्जहित्ति, पढमं जइ अ वावारं ण वावारेति ताहे घरे चेव सामातितं काऊण उवाहणाओ मोत्तूण सच्चित्तदव्वविरहिओ वच्चति, पंचसमिओ तिगुत्तो इरिआए उवउत्तो जहा साहू, भासाए सावज्जं परिहरंतो, एसणाए कट्ठं लेट्टुं वा पडिलेहित्तु एवं आदाणनिक्खेवणे,खेलसिंघाणे ण विगिंचति, विगिंचतो वा पडिलेहिअ पमज्जिअ थंडिले, जत्थ चिट्ठति तत्थ गुत्तिनिरोहं करोति, एताए विहीए गंता तिविहेण णमिऊण साहुणो पच्छा साहुसक्खिअं सामाइअं करेति'करेमि भंते ! सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेण जाव साहू पज्जुवासामि'त्तिकाऊण, जइ चेइआइं अत्थि तो पढमं वंदति, साहूणं सगासातो रयहरणं निसिज्जं वा मग्गति, अह घरे तो से उग्गहिअं रयहरणं अत्थि, तस्स असति पोत्तस्स अंतेण,पच्छा इरितावहिआए पडिक्कमइ, पच्छा आलोइत्ता वंदति, आयरिआदी जहा रायणिआएत्ति, पुणोवि गुरुं वंदित्ता पडिलेहित्ता निविट्ठो पुच्छति पढति वा,एवं चेइएवि, असति साहुचेइआणं पोसहसालाए सगिहे वा, एवं सामाइअं आवस्सयं वा करेति, तत्थ नवरि गमणं नत्थि, भणति–जावनिअमं समाणेमि, जो इड्ढिपत्तो सो किर एंतो सव्विड्ढीए एति तो जणस्स अद्धा होति, आदिता य साहुणो सप्पुरिसपरिग्गहेण, कतसामाइएण य पाएहिं आगंतव्वं, तेण ण करेति, आगतो साहुसगासे करेति, जइ सो सावओ ण कोइ उट्ठेति, अह अहाभद्दउत्ति पूआ कया होहित्ति भणतित्ति ताहे पुव्वरइअं आसणं कीरति. आयरिआ णं उट्ठित्ता अच्छंति, तत्थ उट्ठंतमणुट्ठंते दोसा भाणिअव्वा, पच्छा सो इड्ढिपत्तो सामातितं काऊण पडिक्कंतो वंदित्ता पुच्छति,सो किर सामातितं करेंतो मउडं ण अवणेति,कुंडलाणि णाममुद्दं पुप्फतंबोलपावार-

पलीणो,तत्थ ढड्ढरसावओ,सो सरीरचिन्तं काऊण साहूण पडिस्सयं वच्चति, ताहे ढड्ढरेण तिन्नि निसिहीयाओ कयाओ,एवं सो इरिआदि ढड्ढरेण सरेण करेति,सो पुण मेहावी तं उवधारेति,सो तेणेव कमेण अतिगओ,सव्वेसिं साहूणं वंदणं कयं,सो सावओ न वंदिओ,ताहे आयरिएहिं भणिअं–नवगमड्ढो सिच्चि,पच्छा पुच्छंति॥ इति श्रीआव०चूर्णौ श्रीआर्यरक्षितकथानके,तथा "चउवीसत्थएणं भंते! जीवे किं जणइ ?, चउवीसत्थएणं दंसणविसोहिं जणइ९" इति श्री उत्त०२९,एतट्टीकायां–सामायिकं च प्रतिपत्तुकामेन तत्प्रणेतारः स्तोतव्याः, ते च तत्त्वतस्तीर्थकृत एवेति तत्सूत्रमाह—चतुर्विंशतिस्तवेनैतदवसर्प्पिणीप्रभवतीर्थकृदुत्कीर्त्तनात्मकेन दर्शनं–सम्यक्त्वं तस्य विशुद्धिः–तदुपघातिकर्मापगमेन निर्मलीभवनं दर्शनविशुद्धिस्तां जनयति९ उत्त० वृ०, अत्र सामायिकं च प्रतिपत्तुकामेनेत्यादिग्रन्थसंगतिघटकवचसा तीर्थकृदुत्कीर्त्तनपूर्वकमेव सामायिकं भणितं, तच्चेर्यापूर्वकमेव सामायिकं कुर्वतः स्यात्,नान्यथेति सूक्ष्मधिया पर्यालोच्यं, किंच–नवपदप्रकरणादिकर्त्तारः स्वयमादावेवेर्यां प्रतिक्रामयन्तः कथं निजकृतिषु सामायिके पश्चादीर्येति वदेयुः?, नहि स्वपदे कुठारं शठोऽपि कुरुते, तस्मात् पश्चादीर्येति न महानिशीथोक्तप्रयोजनवती, किंतु भिन्नार्थेत्याद्यनेकयुक्तिविस्तरार्थिना मत्कृतामीर्यापथपदत्रिंशिकां विलोकयिष्यन्तीति धिया नात्र ता युक्तयः प्रदर्श्यन्ते, किंतु किंचित् स्थूलधीगम्यं यथा 'इति चेत्' पूर्वोक्तं चेत्तर्हि सामायिकमपि शुद्धचेतसा कर्त्तव्यं, शुद्धिविधात्री तु प्रथमा ईर्याप्रतिक्रान्तिर्ध्रुवाङ्करूपा, द्वितीया पश्चादीर्येत्यादिलक्षणा विकल्पिता–भिन्नार्थाप्येककार्यतया विकल्पितेति वास्तवारोपरूपमीर्यापथिकायुगं तव मते योग्यं,परं ध्रुवाङ्कत्यागे–प्रथमेर्याप्रतिक्रान्तिपरित्यागे किं प्रमाणं ?,न किमपीत्यर्थः,एतावता चित्तशुद्धिहेतुं प्रथमेर्यां परित्याज्य द्वितीयां च निष्प्रयोजनां ये प्रतिक्रामयन्ति ते महाऽज्ञानिनो विपरीतोत्सूत्रभाषिण इति गाथार्थः ॥२६॥ अथ स्थूलयुक्त्यैव तात्पर्यमाह—

गइ्हा पढमा पडिअकप्पा कप्पदुमोवमा इरिआ। सा पुण पच्छाइरिआ गमणनिवित्तीअ पडिकमण ॥२२७॥

यस्मात्त्योक्त तस्मात् प्रथमा ईर्याप्रतिक्रान्ति' पौषधाधन्नेपानुष्ठानसाधारणपीठिकाकल्पा कल्पद्रुमोपमा क्रियाणां साधिका, सा पुन पश्चार्दीया 'पच्छा इरिआवहिआए पडिक्कमइ' त्ति पदमात्रगम्या तत्रेर्यापा अर्थो गमन तस्या' प्रतिक्रमणं-निवृत्तिरीर्या प्रतिक्रान्ति। मागाशी गमनागमनक्रियानिवृत्तिरूपोऽर्थ' सुगमः; तत्राप्यधिकारवशात् कश्चिदपच्छुदिहेत्यीर्याप्रतिक्रान्तिपूर्विकैव मागमनम्यक्रियानिवृत्ति' कश्चिद गमनागमनादिपरिमितिविधिनस्य कृतसामायिकस्य गन्तव्यक्रियानिवृत्तिमात्रमेव, अत्रापि युक्ति र्गोचरस्त्रिनिगाथा प्रपतिगाथार्थः ॥२२७॥ अथापयथा न्यूनाधिकस्वभावमप्ययथास्थानं पयदाह—

जइवि सुपासे निकणा मय पासे ऊणमहिअमवि कममो। तहवि सुपासा पासे ठवण अजहापयपि भवे॥२२८॥

यपपि सुपार्श्वे तिम' फणाः उक्तमुक्ते, यत' सुपार्श्वे पञ्चैव फणा भवन्ति, पार्श्वे-पार्श्वनाथे नव फणा', अधिकमुक्त, यत श्रीपार्श्वनाथस्य सप्तैव फणा भवन्ति,यत'-"फणरत्नानि सप्त स्युर्यदि पञ्चापि पर्वते। तदोपमीयते पार्श्वमूर्ति सप्तफणः फणी॥१॥ इति पाम्मट्टाम्ह्रार,तथापि श्रीसुपार्श्वमतात् फणादपसुपादाय श्रीपार्श्वनाथशिरसि योजयतोऽयथास्थानमपि स्यात्,एतच्च जिनदत्तेन दिगम्बरीय प्रतिमानां नग्नत्वकरणमिव मतभेदकरणाय प्ररूपितम्,अत एव स्वर्णगिरौ पिप्पलमस्या श्रीपार्श्वनाथप्रतिमायां जीणायां नवनिरपाप्यनिपोजनं विदित मम्प्रत्यपि दृश्यत संजय गत्वा विलोकनीयमिति गाथार्थ ॥२२८॥ अथ क्रिया-विषयस्य निगमनमाह—

एय अजहट्ठाण उस्सुत्त दसिअ समासेण। एवं मय किरियाविसय तिविहपि निदिट्ठ ॥२२९॥

एवम्–अमुना प्रकारेणायथास्थानं क्रियाविपयं तृतीयमुत्सूत्रं दर्शितम्, एतस्मिन् दर्शिते क्रियाविपयं त्रिविधमवि–अधिकन्यू-
नायथास्थानलक्षणं त्रिप्रकारमप्युत्सूत्रं निर्दिष्टं–यथोद्देशं प्रदर्शितमिति गाथार्थः ॥२२९॥ अथ मौलं द्वितीयविकल्पमाह—

**अह पुण उवएसविसयमुस्सुत्तं बीअमेव दुविगप्पं । उम्मग्गदेसणा मग्गनासणा तंपि दंसेमि ॥ २३० ॥**

अथेति क्रियाविपयकोत्सूत्रानन्तरं पुनरुपदेशविषयमुत्सूत्रं द्वितीयमपि द्विविकल्पं–विकल्पद्वयभाग्, तत्रोन्मार्गदेशनात् मार्ग-
नाशनाच्च, चकारो गम्यः, उन्मार्गदेशनामार्गनाशनाभ्यां द्विविकल्पमित्यर्थः, यद्भवति तदपि दर्शयामीति गाथार्थः ॥ २३० ॥
अथोक्तमेव व्यक्तीकरोति—

**अहिअं उवएसंतो पढमे भंगे अ ऊणमवि बीए । किरिआओऽणंतगुणं पावयर वयणविसय तं ॥२३१॥**

अधिकं–षट्कल्याणकादि प्रागुक्तमुपदिशन–प्ररूपयन् प्रथमे भङ्गे–उन्मार्गदेशनालक्षणे, वर्त्तते इति गम्यं, ऊनमपि–स्त्रीजिन-
पूजानिपेधादिकमपि प्ररूपयन् द्वितीयभङ्गे इत्येतच्चोत्सूत्रं क्रियातः–क्रियाविपयोत्सूत्रादनन्तगुणम्, अनन्तपापहेतुत्वात्, सर्वेष्वपि
दोपेषु भाषादोषो हि व्यापकः, यदाहुः–"एकत्रासत्यजं पापं, पापं निःशेपमेकतः । द्वयोस्तुलाविधृतयोराद्यमेवातिरिच्यते ॥१॥"
इति योग० वृ०, अत एव पापतरम्–अतिपापरूपं वचनविपयं तत्, सम्यक्त्वप्राप्तावुत्कृष्टकालान्तरप्राप्तिहेतुत्वाद्, यदागमः–
"कालमणंतं च सुए अद्धापरिअट्टओ अ देसूणो । आसायणबहुलाणं उक्कोसं अंतरं होइ ॥१॥ इति० श्रीआव०, अत्राशातनाबहु-
लस्तावदुन्मार्गप्ररूपको मार्गनाशकश्च ग्राह्यः, तस्यैव तीर्थोच्छेदपातकलिप्तत्वेनाशातनाबहुलत्वादिति गाथार्थः ॥ २३१ ॥ अथ
प्रकारान्तरेणाप्युन्मार्गप्ररूपणामाह—

अथवा पीण जिणवरपूआपडिसेहग अतित्थंपि। तित्थतिअ भासंतो उम्मग्गपरूवगो पावो ॥२२२॥

अथवेति प्रकारान्तरद्योतकः मीणां जिनवरपूजाप्रतिषेधकमतीर्थमपि तीर्थमिति भाषमाणः उन्मार्गप्ररूपकः पापात्मा ज्ञातव्य इति गाथार्थः ॥२२२॥ अथ तीर्थस्वरूपमुक्त्वा तल्लोपको मार्गनाशकः स्यादित्याह—

तित्थं पुण अच्छिन्नं सिरिजिणपूआपरूवग भरहे। तंपि न तित्थंति वयं भासंतो मग्गनासयरो ॥२२३॥

तीर्थं पुन भगवत्प्रवृत्तिमदुप्पसहं यावदच्छिन्नं वर्तते,तच्च भरतक्षेत्रे श्रीजिनपूजाप्ररूपकमेव,तत्तीर्थमप्यतीर्थमितिवचनं भाषमाणो मार्गनाशकः यद्यप्युन्मार्गभाषका बौद्धादयो लौकिकमिथ्यादृष्टयोऽपि भवन्ति तथापि ते नोत्सूत्रभाषिण, किं तु उपचारादिसाध्य सन्मार्गविरुद्धाभिग्रहिकमिथ्यात्वभाजः,उत्सूत्रभाषिणां हि मिथ्यात्वमुपचारतोऽप्यसाध्यतालपुटविषकल्पमभिनिवेशरूपं, तस्य पञ्चमाद्यवधिवृत्तिमतत्वात् तदतिरिक्तास्त्विलमपि जनप्रवचनं भरुपतां भवति, यदागम—"पयमक्खरं च इक्कंपि जो न रोएइ सुत्तनिद्दिट्ठं। सेसं रोयंतोविहु मिच्छद्दिट्ठी जमालिव ॥१॥"त्ति, एतच्च नियमादनन्तसंसारहेतुरेव, यदुक्तं—"उस्सुत्तभासगाणं बोहीनासो अणंतसं सारो" त्ति, इमञ्चोधिन्य पामीपासादीनामवर्णवादात् स्फुटमेव,यदागम—"पञ्चहिं ठाणेहिं जीवा दुल्लहबोहियत्ताए कम्मं पकरेंति, तं०—अरहंताणं अवण्णं वदमाणे१ अरहंतपण्णत्तस्स धम्मस्स अ०२ आयरियउवज्झायाणं अ०३ चाउवण्णस्स संघस्स अ०४ विविक्कतवबंभचेराण देवाणं अव०५" इति श्रीस्थानाङ्गे,अवर्णवादित्वं चोत्सूत्रिणां तीर्थमप्यतीर्थतया भाषमाणानां स्फुटमेव,अतीर्थरूपस्यापि निजमतिविकल्पितस्य मार्गस्य प्ररूपकः श्रीऋषभादिजिन प्रवेत्यटीकाकल्पद्रुदानात् महापातकमिति बोध्य,नन्वेवं तीर्थकरादीनां कल्प- मर्यादातिक्रमेण, श्रीवीरस्य दुप्पसहं यावदच्छिन्न तीर्थं जगविनयपूज्यं तीर्थकृतामपि नमस्करणीयमिति श्रीवीरप्रवर्तितमप्य

पलप्य प्रतिसमयमवर्णवादी मन् तीर्थकृतामप्यवर्णवाद्येव, यो यदाराध्यस्यावर्णवाद्येवेति तीर्थकृदवर्णवादी, तथाभूतश्च श्रुतचारित्ररूपधर्मस्याप्यवर्णवादी स्फुटमेव, तथा च तीर्थान्तर्वर्तिनामाचार्यादीनामपि तथैवेति स्वधियैव धीधनानां प्रतीतमेवेति गाथार्थः ॥२३३॥ ननु लौकिकमिथ्यादृगपेक्षया उन्मार्गादिदेशको लोकोत्तरमिथ्यादृग् कीदृग् स्यादित्याह—

लोइअमिच्छत्ताओऽणंतगुणं मग्गनासणाइवयं । पाव तित्थचाए तुल्लेऽवि अ तावया अहिअं ॥२३४॥

लौकिकमिथ्यात्वाद् उन्मार्गदेशनादिवचः—उन्मार्गदर्शनान्मार्गनाशनादिवचनमनन्तगुणपापं—मिथ्यात्वबन्धमधिकृत्यानन्तगुणपातकनिमित्तं, तत्र हेतुमाह—तीर्थत्यागे तुल्येऽपि च तावता उन्मार्गदेशनादिनाऽधिकमित्यक्षरार्थः, भावार्थस्त्वयं—ननु लौकिकमिथ्यादृग् तावत् मूलतोऽपि जैनमार्गं नाङ्गीकुरुते, लोकोत्तरमिथ्यादृष्टिस्तु भूयांसं जिनोक्तमार्गमङ्गीकृत्य किंचिन्मात्रमपलपति, तत्कथं लौकिकमिथ्यात्वापेक्षया लोकोत्तरमिथ्यात्वमनन्तगुणमिति पूर्वपक्षे प्राप्तेऽभिधीयते, यदुक्तं भूयांसं जिनोक्तमार्गमङ्गीकुरुते तन्मृषाभाषणमेव, यतो जिनोक्तो मार्गस्तीर्थं, तच्चोत्सूत्रभाषिणा मूलतोऽपि त्यक्तं, तत्त्यागे चांशतोऽपि जिनोक्तमार्गानङ्गीकारात् कथं भूयोऽङ्गीकार इति वचनं सत्यं ?, किं तु मृषैवेत्यर्थः, तथा च यथा बौद्धादिभिर्जैनप्रवचनं त्यक्तं तथोत्सूत्रभाषिणाऽपीति तुल्येऽपि त्यागे बौद्धादिः पृष्टः सन् जैनमार्गं जैनमार्गतयैव ब्रूते, यथाऽस्मद्व्यतिरिक्ता एते जैना इति, अयं कुपाक्षिकस्तु पापात्मा पृष्टः सन् जैनमार्गमप्यजैनमार्गतया ब्रूते, यथा नैते जैनाः, किंतु वयमेव जैना इति जैनमार्गव्यतिरिक्तेऽपि जैनसंज्ञावादिन इत्येतावता मार्गनाशाद्यलीकवचसाऽधिकं—बौद्धादिभ्योऽधिकं, तच्चाधिक्यमनन्तगुणकारेण बोध्यं, किंच—जैनमार्गद्वेषोऽपि बौद्धादिभ्योऽधिक एवेति तीर्थबहिर्भूतस्य तीर्थद्वेषिणोऽपि यदि भूयोऽङ्गीकारस्तर्हि कस्याल्पाङ्गीकार इति स्वधिया विचार्य भूयो जैनमार्गाङ्गी-

**एवं कुवक्खकोसिअसहस्सकिरणंमि उदयमावण्णे। चक्खुप्पहावरहिओ कहिओ तइओ खरयरोऽवि ॥२३७॥**

एवं–प्रागुक्तप्रकारेण कुपक्षकौशिकसहस्रकिरणे उदयं प्राप्ते चक्खुत्ति–चक्षुः स्वकीयलोचनं तस्य यः प्रभावो–महिमा नीलादिवस्तुग्रहणशक्तिस्तेन रहितो–विकलस्तृतीयः खरतरोऽपि कथितः, अयं भावः–उदिते हि सहस्रकिरणे यथा कौशिको निजचक्षुःप्रभावरहितो भवति, अयं जगत्स्वभावो यत्तामसकुलस्य सूर्यकिरणा अतिश्यामतया भासन्ते, यदाह श्रीसिद्धसेनदिवाकरः–"सद्धर्मबीजवपनानघकौशलस्य, यल्लोकबान्धव! तवापि खिलान्यभूवन्। तन्नाद्भुतं खगकुलेष्विह तामसेषु, सूर्यांशवो मधुकरीचरणावदाताः ॥१॥" इति, तथा कुपक्षकौशिकसहस्रकिरणसंज्ञितेऽस्मिन् प्रकरणे कुपक्षाणां पुरस्तादुद्भाविते कुपाक्षिकविशेषः खरतरो निजचक्षुः—कुश्रद्धानरूपा कुदृष्टिस्तत्प्रभावरहितो भवति, तस्य मतिविकल्पिताः कुयुक्तयो न स्फुरन्ति, अथवा कुदृष्टिरेव सुदृष्टीभवतीत्येवंविधः खरतरः कथित इतिगाथार्थः ॥ २३७ ॥ अथायं खरतरः कस्मिन् संवत्सरे कस्मिंश्च गुरौ विद्यमाने सत्यस्मिन् प्रकरणे भणित इति प्रदर्शनाय गाथामाह—

**नवहत्थकायरायंकिअसममहिमंमि चित्तसिअपक्खे। गुरुदेवयपुण्णुदए सिरिहीरविजयसुगुरुचारे ॥२३८॥**

प्रथमविश्रामोक्ता बोध्या ॥ २३८ ॥ अथैतत्प्रकरणकर्तृनामगर्भितामाशिरभिधायिकां गाथामाह—

**इअ सासणउदयगिरिं जिणभासिअधम्मसायराणुगयं। पाविअ पभासयंतो सहस्सकिरणो जयउ एसो ॥२३९॥**

व्याख्याऽत्रापि प्राग्वत् ॥ २३९ ॥ इअ कुवक्खकोसिअसहस्सकिरणंमि पवयणपरिक्खावरनामंमि खरयरमयनिराकरणनामा चउत्थो विस्सामो सम्मत्तो ॥

इति श्रीमत्तपागणनभोनभोमणिश्रीहीरविजयसूरीश्वरशिष्योपा

ध्यायश्रीधर्मसागरविरचिते स्वोपज्ञकुपक्षकौशिकसहस्रकिरणे

श्रीहीरविजयसूरिदत्तमप्रवचनपरीक्षानाम्नि प्रकरणे खरतर

मतनिराकरणनामा चतुर्थो विश्रामो व्याख्यात इति।

## अथ पञ्चमो विश्रामः ॥

अथ क्रमप्राप्तमांचलिकमतं निरूपयितुमाह—

**अह अंचलिअं कुमयं लोअपसिद्धंपि किंचि दंसेमि । तेरुत्तरबारसए विक्कमओ अहमकम्मुदया ॥१॥**

'अथे'त्यौष्ट्रिकनिरूपणानन्तरम् 'आंचलिकम्' अञ्चलं—पल्लवो धर्मानुष्ठानादौ श्रावकाणां प्ररूपयन्तीत्याञ्चलिकास्तेषामिदमाञ्चलिकं 'कुमतं' कुत्सितश्रद्धानरूपं लोकप्रसिद्धमपि—सर्वलोकसम्मतमपि, यद्यपि सर्वेऽपि कुपाक्षिकाः प्रवचने प्रतीता एव तथापि तेष्वप्याञ्चलिकः प्रकृतो वक्ष्यमाणश्च लुम्पाक इति द्वितयमाबालगोपाङ्गनानामपि प्रतीतमिति ज्ञापनार्थमिदं विशेषणं, यत एवं तत एव किंचिद्दर्शयामि, न पुनः खरतरवद्विस्तरेणेति पूर्वार्द्धम्, अथोत्तरार्द्धेनोत्पत्तिकालमाह—'तेरुत्तरे'त्यादि, त्रयोदशोत्तरद्वादशशते वर्षे विक्रमतोऽधमकर्म्मोदयाद्—अशुभकर्मोदयाज्ञातमित्यध्याहार्यमितिगाथार्थः ॥१॥ अथ यतः पुरुषादुत्पन्नं तमाह—

**पुण्णिमिओ नरसिंहो नामेणं एगनयणदुव्वयणो । केणवि अवराहेणं तेहिवि बाहिंकओ आसी ॥२॥**

पौर्णिमीयिकः—पूर्णिमापक्षसंबन्धी नाम्ना नरसिंहः 'एकनयनदुर्वचनः' एकं नयनं—लोचनं यस्य स एकनयनो दुष्टं वचनं यस्य स२ ततो विशेषणसमासः, काणाक्षोऽपि जिनदत्तवन्मुखरीत्यर्थः, अत एव केनाप्यपराधेन 'तेहिवि'न्ति तैरपि—पौर्णिमीयकैरपि बहिष्कृत आसीदितिगाथार्थः ॥२॥

**सो पुण कमेण छउणयगामे पत्तो अ तत्थ नम्मङ्या । लोअणरहिआ नाडीनिसड्ढीवि मड्डिआ वुड्ढा ॥३॥**

ीकृतमितिगाथार्थः ॥५॥ अथ नाढ्या कि कृतमित्याह—

तीए सूरिपयंपिअ दवाविअं अट्ठसहसदविणेणं । तस्सऽज्जरक्खिएणं नामेणं चिइनिवासीहिं ॥६॥

तया नाढ्या अष्टसहस्रद्रविणदानेन चैत्यनिवासिभिः—नदीपद्रीयचैत्यवासिसूरिभिरार्यरक्षितेन नाम्ना—आर्यरक्षितसूरिरिति नाम्ना सूरिपदं दापितमितिगाथार्थः ॥६॥ अथ नरसिंहेन कि कृतमित्याह—

निअमयवुड्ढिनिमित्तं पावग गिरिकालिआभिहा देवी । आराहिआ य मिच्छादिट्ठी इगवीसुवासेहिं ॥ ७ ॥

निजमतवृद्धिनिमित्तं पावकगिरौ या कालिकाभिधा—कालिकानाम्नी मिथ्यादृष्टिर्हिंसाप्रिया देवी सा एकविंशत्योपवासैराराधिता—स्वायत्तीकृतेतिगाथार्थः ॥८॥ अथ तदनन्तरं नरसिंहः कि कृतवानित्याह—

पच्चक्खा चक्केसरि अम्हंति मुसं वइंसु सो पावो । पावजणाणं पुरओ वुग्गहवयणं पयासंतो ॥८॥

अस्माकं चक्रेश्वरी प्रत्यक्षेति मृषा अवादीत् स नरसिंहः पापो—नवीनमताकर्षणाभिनिवेशमिथ्यात्वपापलिप्तः पापजनानां पुरतः—तदुचितपर्षदि व्युद्ग्रहवचनं प्रकाशयन् मुग्धजनान्, विप्रतारयन्नित्यर्थः ॥८॥ अथ मुग्धजनानां विप्रतारणमुत्सूत्रवचनैरेव स्यादिति तान्याह—

उस्सुत्तं पुण पयडं पढमं मुहपोइआइ पडिसेहो । जुत्ती जइलिंगं तं णो जुत्तं सावयाण भवे ॥९॥

उत्सूत्रं पुनः प्रकटं तन्मतोत्पत्तिकालादारभ्याद्य यावत्सर्वजनप्रतीतं प्रथमं लुम्पाकानां प्रतिमाप्रतिषेधवत्, मुखपोतिका—मुखवस्त्रिका तस्याः प्रतिषेध इति पूर्वार्द्धेन प्रथमोत्सूत्रमाविष्कृतं, अथ उत्तरार्धेन तदुद्भावितां युक्तिमाह—'जुत्ति'त्ति युक्तिस्तत्र

मुखवस्त्रिका यतीनां लिङ्गं तच्च श्रावकाणां नो युक्तम्-उचितं भवेदिति वद्धनमितिगाथार्थः ॥९॥ अथातिप्रसङ्गेन दूषयितुमाह—

पोत्तिअमित्तेण जइ लिंग किं नाम नेह सामइए। समणो इवत्ति समए भणिओवि जओ जिणिंदेहिं ॥१०॥

पोत्तिक-मुखवस्त्रिका तन्मात्रेण यदि लिङ्गं यतीनां-साधूनां लिङ्गं वा, नामेति कोमलामन्त्रणे, किम्?-इह-जगति प्रवचने वा सामायिकं न स्यात्?, तत्र तु सुतरां स्यादित्यर्थः, तत्र हेतुमाह-'समणे'त्यादि, यतः कारणात् समय-सिद्धान्त जिनेन्द्रैः श्रमण इवेति-श्रावकः श्रमण इव सामायिके भणितोऽपि, अय भावः-मुखवस्त्रिकामात्रेण यदि श्रावकः श्रमणलिङ्गीस्यात्तर्हि तीर्थकरैः सामायिकं श्रमण इव श्रावको भणितः, तच्च तु मते न युक्तम्, अतः सामायिकमपि परिहरणीयं स्यात् यतिसमतामवनहेतुत्वा-दितिगाथार्थः ॥१०॥ अथ श्रावकसामायिकं घटिकाद्वयप्रमाणं, तच्च साधुभिर्नाङ्गीकृतमतो न यतिसमतेति निराकर्तुमाह—

मुणिजणअंगीकरणा लिङ्गं जइ सुद्धसद्दहणमाई। अन्भतरमवि पज्जा भणिअनमुक्कारमाईणि ॥११॥

अत्र यथा श्रावकाणां सामायिकमल्पकालीनं न साधुसमतासूचकं तथा मुखवस्त्रिकादिग्रहणमपि यावत्सामायिकादिक्रियोप-योगि स्वल्पकालीनमेवेति कथं साधुसमतासूचकमिति सत्यामपि प्रतिपत्त्यां युक्त्यन्तरमाह-'मुणि'त्ति मुनिजनाङ्गीकरणाद्यदि लिङ्ग-मपात् मुखपोतिका, तर्हीति गम्यं, शुद्धश्रद्धानाद्यभ्यन्तरमपि पुनर्वाक्समहनमस्कारादीनि यतिभिरपाक्षीयमङ्गीकृतानि तथैव श्रा-वकैरपीति मवामिप्रायेण साधुसमता श्रावकाणां नोचितेति श्रावकैस्तान्यपि परिहर्तव्यानि भवयुरिति गाथार्थः ॥११॥ अथ श्रा-वकाणां सामायिकमभ्युपगच्छता तन्निकामस्य मुखवस्त्रिकाऽभ्युपगन्तव्येत्यत्र युक्तिमाह—

सामाइअंमि उ कए समणो इव सावओ हवइ जम्हा। इअवयणा मुणिलिंग कहवि न थिग्वदमिह समए ॥१२॥

"सामाइअंमि उ कए समणो इव सावओ हवइ जम्हा। एएण कारणेणं बहुसो सामाइअं कुज्जा॥१॥" इति सिद्धान्तवचनं तत्रार्थवचनादिह–प्रवचने 'समए'त्ति कालविशेषावसरे सामायिकादिक्रियाकरणकाले कथञ्चिन्मुनिलिङ्ग–साधुलिङ्गानुकारि चिह्नं श्रावकाणामपि न विरुद्धम्, अन्यथा श्रमण इवेत्यादिवचनासंभवाद्, अत्रेवशब्दो ह्युपमावाची, सा च भूयोभिः समानधर्मैरेव स्याद्, यतः 'तद्भिन्नत्वे सति तद्गतभूयोऽसाधारणधर्मवत्त्वं सादृश्य'मिति सादृश्यलक्षणं, न च तत्राध्यवसायिरूपं ग्राह्यं, बाह्यचिह्नमन्तरेण तथाव्यवहाराभावात्, तत्र सादृश्यं भिन्नत्वं चैवं–साधूनां क्रियोपयोगि रजोहरणमुखवस्त्रिकादि तथा श्रावकाणां चवलकमुखवस्त्रिकादि, एवं साम्येऽपि साधूनां सूत्रौर्णिकनिषद्याद्वयोपेतं पट्टकस्यूतदशिकाकलितं रजोहरणं श्रावकाणा तु दण्डमात्रनिबद्धदशिकात्मकं नाम्नाऽपि चवलकरूपं रजोहरणं, मुखवस्त्रिकाऽपि साधूनां मुखप्रमाणा, श्रावकाणां तु षोडशाङ्गुलप्रमाणा, तथा परिहितचोलपट्टकः साधुः कच्छोटिकासंयुक्तपरिहितवस्त्रः श्रावकः, सवेणिकमस्तकः श्रावको लुञ्चितकेशमस्तकस्तु साधुः, स च यावज्जीवाभिग्रही श्रावकस्तु परिमितकालाभिग्रही चेत्यादि वैसदृश्यमपि बोध्यं, अत एव श्रमणवच्छ्रावकः सामायिके भणितः, तथा च कथंचित्सादृश्यं न मुखवस्त्रिकादिचिह्नमन्तरेण स्यादिति सिद्धान्तयुक्त्यैव मुखवस्त्रिकादौ धर्मसाधनोपकरणे सिद्धे तत्प्रतिषेधवचनं तीर्थासम्मतं महामिथ्यात्वमोहनीयबन्धहेतुरितिगाथार्थः ॥१२॥ अथ व्यवहारनयाभिप्रायेण सामायिकस्वरूपमाह—

धम्मोवगरणरहिओ कयसामइओऽवि अकयसामइओ। ववहारनए साहू जह लिंगायारपरिचत्तो ॥१३॥

धर्मोपकरणानि–रजोहरणमुखवस्त्रिकादीनि तै रहितः कृतसामायिकोऽप्यकृतसामायिको व्यवहारनये भवति, रजोहरणाद्युपकरणशून्यः सन् "करेमि भंते! सामाइअं" इत्यादिपाठोच्चारेण सामायिकपरिणामवानपि व्यवहारनये सामायिकवान् न स्याद्,

यथा लिङ्गाचारपरित्यक्त साधुव्यवहारेनव साधुन भवति, तत्र लिङ्ग रजोहरणादि आचारस्तु प्रतिलेखनप्रतिक्रमणादिनियतक्रिया-रूपस्ताभ्यां परित्यक्त-शून्य अन्तर्भूया क्रमशामतोचारोऽपि गृहलिङ्गी-गृहोचितव्यापाररहितोऽपि साध्वनुष्ठानरहितो न मस्तु कश्चित्साधुकृतिमात्रमव मन्यते, न पुन सर्वथेति युक्त्या स्फुटं यथा स्यात्तथा सिद्धा मुखवस्त्रिका श्रावकादीनामपि मस्मापिकादिक्रियासाधनायोगिनीतिगाथार्थ ॥३॥ अथागमानुयायियुक्तिसिद्धामपि मुखवस्त्रिकां मुग्धजनप्रत्यायनार्थे नामग्राहं पापि सिद्धान्तसिद्धां दर्शयितुमाह—

उवगरणे पुण तुझं भणिअं समणेहिं सावयाणपि। अणुओगदारसुत्ते सामाइयकिरिआसाहणमि फुड ॥१४॥

अनुयोगद्वारेषु-अनुयोगद्वारप्रभागकृष्यादिष्वावश्यकक्रियासाधने-उभयसंध्यप्रतिक्रमणादिक्रियाकरणे स्फुट यथा स्या-त्तथा श्रावकाणामप्युपकरण-रजोहरणादिक श्रमणै -साधुभिस्तुल्यं-समान भणित,तथाहि-"किन्तं लोउत्तरिअं भावावस्सयं ?,जं इमं समणो वा समणी वा सावओ वा साविआ वा तच्चिते तम्मणे तल्लेसे तदज्झवसिए तदट्ठोवउत्ते तदप्पियकरणे तब्भावणाभाविए अण्णत्थ कत्थइ मणं अकरेमाणे उभयकालं आवस्सयं करिंति"त्ति श्रीअनुयोगसूत्रम् ,एतद्वृत्त्येकदेशो यथा-'तदर्पितकरणः'करणानि-त त्साधकतमानि देहरजोहरणमुखवस्त्रिकादीनि यस्मिन-आवश्यके यथोचितव्यापारनियोगनार्पितानि नियुक्तानि येन,अथवा सम्यग् य थास्थानन्यस्तोपकरण इत्यर्थ' इति श्रीअनुयोगद्वारवृत्तिः,तथा "तस्स य सामाइयकरणाणि सरीररजोहरणमुहपोत्तियादिआणि करणाणि किरिआकरणगणओ अप्पिआणित्ति" अनुयोगचूर्णौ. तथा यत्रस्त्र-"उभयकालमावश्यकानुष्ठानाच्छ्रावकाणामावश्यकमप्युक्तमिति

तदयुक्तम्, अनुपदिष्टस्यासिद्धत्वात्, तथाहि–यद्यप्युपासकशास्त्रादौ नोपदिष्ट सम्प्रति न उपलभ्यते-तथाऽप्यनुयोगद्वारे तदुपदिष्टं,
तथाहि–जं इमं समणो वा समणी वा सावओ वा साविआ वा तच्चित्ते तम्मण" इत्यादि वच इहापि बोध्यं, उपधानादिपाठवत्
तथाविधपाठस्यापि व्युच्छिन्नत्वात्, एवं यावत् सुभद्राश्राविकानिदर्शनतश्च श्रावकस्य विधेयतया प्रतिपत्तव्यमिति पञ्चाशकवृत्तौ,
अत्र व्यक्तमेव नामग्राहेण साधूनामिव श्रावकाणामपि मुखवस्त्रिका आवश्यकक्रियोपयोगिनी भणितेति गाथार्थः ॥१४॥

अथ ग्रन्थान्तरसम्मतिमाह—

**तह पण्हावागरणे संवरदारंमि आइमे पूआ। मुहणंतयपमुहेहिं सड्ढाणमणेसणाहेऊ ॥१५॥**

तथा प्रश्नव्याकरणे–प्रश्नव्याकरणनाम्नि दशमाङ्गे आदिमे–प्रथमे संवरद्वारे मुखानन्तकप्रमुखैः–मुखवस्त्रिकाजपमालिकाप्रमुखैः
श्राद्धानां–श्रावकाणां पूजाऽनेषणाहेतुः साधोर्भवतीति भणितमिति बोध्यं, यथा भणितं तथा चाह–"नवि वंदणमाणणपूअणाए भि-
क्खं गवेसविअव्वं"ति श्रीप्रश्नव्याकरणाङ्गे प्रथमसंवरद्वारे, एतद्वृत्त्येकदेशो यथा–'नवी'त्यादि भैक्षं–भिक्षासमूहो गवेषयितव्यम्–
अन्वेषणीयं नापि वन्दनेन–स्तवनेन यथा "सो एसो जस्स गुणा विअरंति अवारिआ दस दिसासुं। इअरा कहासु सुव्वसि पच्चक्खं
अज्ज दिट्ठोसि॥१॥"त्ति, नापि माननया-आसनदानादिप्रतिपत्त्या नापि पूजनया–तीर्थनिर्माल्यदानमस्तकगन्धक्षेपमुखवस्त्रिकानम-
स्कारमालिकादानलक्षणया" इत्यत्र यदि श्रावकाणां मुखवस्त्रिकाया अनुपयोगो भवेत्तर्हि तद्दानेन तदावर्जनार्थं पूजाऽपि न भवेदिति
स्वयमेव पर्यालोच्यमिति गाथार्थः ॥१५॥ अथ मुखवस्त्रिकाप्रतिषेधनानन्तरं स्तविकेन किं प्रतिषिद्धमित्याह—

**उवगरणे पडिसिद्धे पडिसिद्धं सावयाण पडिकमणं। विवरीअं पडिसेहं केइवि वहुकालअंतरिअं ॥१६॥**

उपकरण-प्रतिक्रमणादिक्रियासाधकत्वम सुखवस्त्रिकादरजोहरणादौ प्रतिषिद्धे-श्रावकानां नोचितमित्युपदेशदानादिना त्याजित 'कारणाभावे कार्यस्याप्यभाव' इति न्यायात् तत्कार्यम्-आवश्यकक्रियारूपं प्रतिक्रमणं तदपि श्रावकाणां निषिद्धं, मुखवस्त्रिकाय मात्र प्रतिक्रमणासंभवात्, कश्चित् वृद्धास्तु प्रतिषेधे विपरीतं भणन्ति-प्रथमं तेन प्रतिक्रमणं श्रावकाणां प्रतिषिद्धं,पश्चात्कार्ये निषिद्धे कारणस्यानुपयोगान्मुखवस्त्रिकादि निषिद्ध, तदपि बहुकालान्तरित,यदा पौर्णिमीयकैर्बहिष्कृतस्तदानीं प्रतिक्रमणं निषिद्ध, कियता कालेन तथाविधसामग्रीयोगात् सं० १२१३ वर्षे छट्ठमपग्रामे नागीमनिष्यात् मुखवस्त्रिकादि प्रतिषिद्धमिति गाथार्थः ॥१६॥ अथ पुनरप्युत्सूत्रमुद्भावयितुमेतस्यापि कालसंग्रनिकल्पयोर्विरोध दर्शयन् प्रथमं पर्युषणास्वरूपमाह—

पज्जोसवणासुव चउथिदिणे मयगईइ वयणाओ। ज भासरणाहरणं पज्जोसवणायउत्थीए ॥१७॥

सत्पर्दीभवनात्-महत्त्रमिश्रपरिकल्पतपर्दीनाम्ना स्तनिकमतसामाचारीग्रन्थात् पूर्वम्-आञ्चलिकमतप्रवृत्तिकाल पर्युषणा चतु र्थीदिनेऽभ्युपगताऽभूत्, पौर्णिमीयकमतामिगत्याञ्चलिकमताकर्षकिम चतुर्थीपर्युषणा न व्यकेरयर्थ', यद्-यस्मात्कारणादाचरणो दाहरणे चतुर्थ्यां पर्युषणा दर्शिता, आचरणाद्वार अष्टचरणाप्रमाणकरणाय श्रीकालिकाचार्यप्रवर्तिता चतुर्थ्येवोदाहरणतया द र्शिता, तथाहि-"श्रं जीअं मोहिकरं संविगपरायणेण दंताम। इक्केणवि आइण्णं तेण उ जीएण ववहारो ॥२॥ इति व्यवहार उ० १०, इति कल्पनिशीथव्यवहारग्रन्थत्रयाभिप्रायान् ज्ञायते विशिष्टपुरुषा एव केचिदशठत्वेनात्र मन्तव्या', तदाचरितं तु प्रमाणमेव, यथा कालकाय पर्युषणाऽऽचरिता, तथाहि "जुगप्पहाणहि चउत्थी कारणे पवत्तिआ, सा चेव अणुमया सव्वसाहूणं"ति निशीथे उ० १०,पर्युषणाकल्पे मन्याडि यावत्पाषणाकारमान्त इत्यनेकरूपमन्यदप्यशठाचरितंप्रमाणमेव २१ इत्यशठाचरणाविधिः १०२"

इति शतपद्याम्, अत्र यदि तेषां चतुर्थी अप्रमाणमभविष्यत्तर्हि आचरणाद्वाररचनाया एवासंभवः,प्रयोजनाभावात्, सभवे चाऽ-
शठाचरिता चतुर्थीतिनिदर्शनासंभवात्, तस्मात् माहेन्द्रसूरिणा सं०. १२९४ वर्षे शतपदी पूर्वशतपदीतोऽशेन विस्तरवती रचिता
तदानीं चतुर्थ्येव पर्युषणात्वेनाभिमतेति दृश्यं इति गाथार्थः ॥१७॥ अथाञ्चलिकमते कतिदिनैः पर्युषणेत्याह—

**अभिवड्ढिएवि सावणभद्दवए सावणाइंमि ॥१८॥**
**पगुणवण्णदिणेहिं पज्जोसवणावि तम्मए तेणं ।**

आञ्चलिकस्तावत् पूर्णिमाप-
क्षान्निर्गतः, पूर्णिमापक्षस्तु पूर्णिमायामेव पाक्षिकं चतुर्मासिकं च, चतुर्थ्यां च पर्युषणा,अयं भावः—
एकोनपञ्चाशत्या दिनैः पर्युषणा तन्मते तेन कारणेन येन कारणेन चतुर्थ्यां पर्युषणेतिकृत्वाऽयमपि तथैव कृतवान्, तथा च
पूर्णिमातश्चतुर्थ्यां दिनगणनया एकोनपञ्चाशदेव दिना भवन्ति, श्रावणभाद्रपदेऽभिवर्द्धितेऽपि 'श्रावणादौ' श्रावणप्रथमभाद्रपदयोः
पर्युषणाऽऽसीद्, अयं भावः—यथा चन्द्रसंवत्सरे तथा श्रावणभाद्रपदयोर्वृद्धावपि, परं दिनगणनया श्रावणे प्रथमभाद्रपदे चैकोन-
पञ्चाशता दिनैर्भवत्यत एव एके श्रावणभाद्रपदाधिकमासयोः पर्युषणामेकोनपञ्चाशता दिनैः कुर्वते अपरेत्वेकोनाशीत्याऽपीति शतप-
द्यामेवाचरणावैचित्र्यद्वारे भणितं,न चैतदाञ्चलिकव्यतिरिक्तानामेवेति शङ्कनीयं,यथासंभवं क्वचिदेतस्यापि कस्मिंश्चित्पक्षेऽन्तःपाति-
त्वाद्, अन्यथा एके चैत्यवासं कुर्वन्त्येके च वसतिनिवासं१ एके पढमं होइ मंगलं अपरे तु हवइ २ चैत्यवन्दनायामेके नमः सिद्धेभ्य
इत्येकपदमपरे त्वेकमपि न भणन्ति३ एके नमस्काराद्युपधानविधि मन्यन्ते अपरे तु न४ इत्यादि यावदेके सामायिके श्रावकाणां
प्रथममीर्यापथप्रतिक्रमणमपरे तु सामायिकग्रहणानन्तरं१८ एके पर्वतिथिः प्रतिक्रमणवेलायां अपरे तु सूर्योदये२६ इत्यादावेक-
स्मिन् पक्षेऽस्याप्यन्तर्भावाद्, अन्यथा तृतीयपक्षाभ्युपगमे चैत्यवासत्यतिरिक्तग्रामादिप्रसङ्गेनातिव्याकुलता स्यात्, तस्मात्कस्मिंश्चिद्

पाक्षिका: पञ्चमीवचना इत्यर्द्धजरती, अयं भावः—शतपदीकारेण चूर्णिः सिद्धान्ततयाऽभ्युपगता, चूर्णौ च युगप्रधानश्रीकालकाचार्यप्रवर्तिता चतुर्थी तीर्थसम्मताऽद्य यावदच्छिन्ना प्रवर्त्तते, एवं सत्यपि पर्युषणा सिद्धान्तोक्ताऽस्माकं सम्मतेति महत्यसंगति, द्वयोर्मध्येऽन्यतरस्यावश्यं त्यागापत्त्या, चतुर्थीत्यागे शतपदीकारोऽपि त्यजनीय एव स्यात्, न च तदानीं शतपदीकारश्चतुर्थी प्रमाणतया ब्रुवाणोऽपि पञ्चमीमेव स्वयं कृतवानिति शङ्कनीयं, चतुर्दशीपाक्षिकपरिहाराभिधित्सया चतुर्दश्यां पाक्षिकं न कालकाचार्यप्रवर्तितं, किंतु कियता कालेन चतुर्थीपर्युषणानुरोधेनान्यैराचार्यैराचीर्णमिति समर्थितवान्, तथाहि—किंच—अधुनाऽऽचार्यैरपि पाक्षिकमागमाभिप्रायेण पञ्चदश्यामेवाभ्युपगतं, यथा स्थानकवृत्तिः "एवं च कारणेण कालगायरिएहिं, चउत्थीए पज्जोसवणं पवत्तिअं, समत्थसंघेण य अणुमन्निअ, तव्वसेण य पक्खिआणिवि चउद्दसीए आयरिआणि, अण्णह आगमुत्ताणि पुण्णिमाए" इति, अथ यदैव कालकाचार्यैः पञ्चमीतश्चतुर्थ्यां पर्युषणा कृता तदैव पञ्चदशीतश्चतुर्दश्यां पाक्षिकमपीतिचेत्तन्न, यतः पर्युषणाकल्पे "अज्जकालगेहिं कारणिआ चउत्थी पवत्तिआ, सा चेव खाइं गया सव्वमाइण्णं"ति, अनेन पर्युषणाविषयैव चर्चेति, न पुनः क्वापि पाक्षिकस्येति, अपिच—स्थानकवृत्तिकृताऽपि 'तव्वसेण य पक्खिआणिवि चउद्दसीए आयरिआणि" इत्येवमुक्तं, न पुनरुक्तं कालकाचार्येण पाक्षिकमपि चतुर्दश्यामानीतमिति १२ इति शतपद्यां द्वादशाधिकशततमद्वारे, अत्र श्रीकालकाचार्यचरिताऽन्याचार्याचरितयोः परस्परं भेददर्शनेन कश्चिद्विशेषो वक्तव्यः, स च सूक्ष्मधिया पर्यालोच्यमानः श्रीकालकाचार्याचरितायाश्चतुर्थ्याः प्रामाण्यमन्तरेण न संभवति, अन्यथा स्तनिकमते चतुर्दशीपाक्षिकचतुर्थीपर्युषणयोर्द्वयोरपि पूर्वाचार्याचरितत्वेन परिहार्यत्वे विशेषाभावाद् अथ यदैवेत्यादिशिष्यनोदनाद्युद्भावनस्याकिञ्चित्करत्वमेवापद्यते, किंच—पूर्वाचार्यैरपि चतुर्थ्यनुरोधेन पाक्षिकं परावर्त्तितं, न

चैत्रादिवृद्धौ न निशन्या दिने', सर्वत्रापि चतुर्मासकं त्वाषाढपूर्णिमायामेव, संप्रति तु ''अभिवड्ढिअंमि वीसा'' इत्यादिवचन-
बलेन श्रावणभाद्रपदवृद्धौ चतुर्मासकं श्रावणेऽपि, परमेतन्सर्वजनविरुद्धं, यतस्त्रीण्यपि चतुर्मासकानि कार्त्तिकफाल्गुनाषाढमासनिय-
तानि, यत्तु जैनटिप्पनकानुसारेण श्रावणभाद्रवृद्धावपि आषाढवृद्धिरेव गण्यते इति तन्न युक्तं, जैनटिप्पनकस्य व्युच्छिन्नत्वात् सं-
प्रति शैवटिप्पनकेनैव व्यवहारप्रवृत्तिः, तदनङ्गीकारे दीक्षाप्रतिष्ठादिमुहूर्त्तपरिज्ञानं दूरे, मासवृद्धिरपि कथं ज्ञायते ?, तस्माच्छ्रावण-
भाद्रपदवृद्धिर्नाषाढतया व्यवहर्त्तव्या, किंतु श्रावणादितयैवेति, किंच-शतपद्यामपि श्रावणेऽपि चतुर्मासकमिति विचारो नोद्भावितः,
तेन ज्ञायते शतपद्यामनुक्तस्यापि प्रवृत्तिराधुनिकैव कियत्कालानन्तर प्रवृत्तेति गाथार्थः ॥२१॥ अथ कृतागमशरणस्य स्तनिक-
स्यागमः शरणमेव न भवतीति दर्शयितुमाह—

तित्था चुअस्स आगमसरणं साहाउ पत्तसरणुव्व । जं सुत्तत्थुभयंपिय तित्थायत्तं जिणिंदुत्तं ॥२२॥

तीर्थात्-श्रीवीरप्रवर्त्तिताच्छिन्नतीर्थाच्च्युतस्य-भ्रष्टस्य नरसिंहस्यागमशरणं शाखातश्च्युतस्य पत्रशरणवन्न भवति, अयं भावः-
'स्वाधिरूढशाखाभङ्गान्नहि पत्रमालम्बायाल'मितिन्यायात् स्वाधिरूढशाखातः पततः पुरुषस्य तच्छाखापत्रावलम्बनं त्राणाय न भवति,
तथा तीर्थाद्भ्रष्टस्य कुपाक्षिकमात्रस्याप्यागमस्त्राणं न भवति,तत्र हेतुमाह-'जं सुत्ते'त्यादि यद्-यस्मात्कारणात् सूत्रार्थोभयमप्याग-
मस्तीर्थायत्तं-तीर्थवशं ''प्रवचनं-द्वादशाङ्गी तस्याधारः तीर्थमपि प्रवचनं भण्यते'' इत्यागमवचनाद्, यद्वा 'प्रवचनं वेत्त्यधीते
वा इति प्रावचनिकः-कालापेक्षया बह्वागम' इत्याद्यागमवचनाच्च द्वादशाङ्ग्यादि यावच्छ्रुतं तावत्प्रवचनं भण्यते, तच्च तीर्थे
एव स्यात्, न पुनस्तीर्थबाह्ये कुपाक्षिकादिसमुदाये, एतच्च जिनेंद्रोक्तं-तीर्थकरेण भाषितमिति गाथार्थः ॥ २२ ॥ अथ तीर्था-

यथाक्रमं ममथयति—

इह आगमो अ निविहो अत्ताणमरपरंपरापुव्वो। जो गणहरसीसंता तइओ तित्थप्पवित्तत्तो ॥२३॥

इह—प्रवचने आगमस्त्रिविधः—आत्मानन्तरपरंपरापूर्वो, आत्मा चानन्तरं च परम्परा चेतिद्वन्द्वः पूर्वं यस्य स तथा, आत्मागमोऽनन्तरागमः परंपरागमश्चेतिभावः, यदागमः—"अहवा आगमे तिविहे पं०, तं०—अत्तागमे अणंतरागमे परंपरागमे" इति श्रीअनुयोगद्वारे, तत्राद्यौ द्वौ गणधरशिष्यान्तौ, सुधर्मजम्बूस्वाम्यन्तावित्यर्थः, तृतीयस्तु तीर्थप्रवर्तकपन्तो—यावत्तीर्थानुयायीति गाथार्थः ॥ २३ ॥ अथ सांप्रत्यागमं कीदृगित्याह—

संपइ तइआ आगम तित्थदुमसरिसाइकुसुमसमो। फलसरिसो सुहजोगो मोक्खो महुरो रसासाओ ॥२४॥

संप्रति—वर्तमानकाले तृतीय आगमः—परम्परागमलक्षणो वर्तते, न पुनरात्मागमानन्तरागमलक्षणो, तयोर्व्युच्छिन्नत्वात्, स च तीर्थद्रुमसदृशागदकुसुमसमः—तीर्थलक्षणो यो द्रुमः—कल्पवृक्षादिलक्षणः तत्र परिलक्षणा शाखा तत्र कुसुमसमः—पुष्पसमानः, फलसदृशो यत्नसाध्यशुभयोगः—मनःप्रभृतीनां शुभव्यापारः, मनसोऽशुभव्यापारप्रवर्तनं शुभमेव निगृह्णाति, यदागमः—"पडावेव निगिण्हामि, सुअरस्सीसमाहिअं। न मे गच्छइ उम्मग्गं, मग्गं च पडिवज्जइ ॥"त्ति श्रीउत्तरा० (८७०) मधुरः फला (रसा) स्वादो मोक्षः, मधुरस्ला (स्वा) स्वादकल्पो मोक्ष इत्यर्थः, तत्र यथा वृक्षमन्तरेण न शाखासंभवः, शाखामन्तरेण च न कुसुमोत्पत्तिः, तदभावाच्च न फलं, फलाभावात्कुतो मधुररसास्वादः ?, तथा तीर्थमन्तरेण न सूरिः, यतः पञ्चवस्तुके—"परम्परागतं सूरिं स्वशिष्यं प्रति सम्यगुर्वादिविधिना सिद्धान्तमध्याप्य पुस्तकस्थलिखितं सूरिमन्त्रं ददाति"त्युक्तमस्ति, सूरिमन्तरेण च परम्परागमलक्षणस्तृतीय

आगमोऽपि न संभवति, तमन्तरेण न शुभयोगस्तदभावात्कुतो मोक्षः ? इति गाथार्थः ॥२४॥ अथ तीर्थं कथमासीदित्याह—

**तित्थं तु कालगज्जा अच्छिन्नं जाव दुप्पसहसूरी । पज्जोसवणचउत्थीठिअंति का तत्थ संकावि ? ॥२६॥**

तीर्थं तु श्रीकालकाचार्याद्दुष्प्रसभसूरि यावत् पर्युषणाचतुर्थीश्रितमिति का तत्र शङ्कापि ?, यदि श्रीवीरस्थापितं तीर्थं चतुर्थी-मेवाश्रितं विद्यमानं तर्हि तीर्थाद् बहिर्भवनहेतुः पञ्चमीशङ्कापि न युक्ता, किं तेन सुवर्णेन येन कर्णौ त्रुट्येते इति लोकाभा-णकात किं पञ्चम्याः प्रयोजनं ?, तीर्थाद् बहिर्भूयते इति गाथार्थः ॥ २२ ॥ अथ कुपाक्षिकस्तीर्थनिरपेक्ष एव स्यादतस्तद-भिप्रायमाविष्कृत्य दूषयन्नाह—

**संपइ तित्थमजुत्तं कुणइ अजुत्तंपि जो उ तद्दूसी । इअ आगमपरमत्थो मत्थयसूलं खु किंमूलो ? ॥२४॥**

सम्प्रति तीर्थमयुक्तं करोति, चकारात्प्ररूपयति च, यस्तु तद्दूषितोऽर्थादवर्णवादी स युक्तमपि-अपिरेवार्थे युक्तमेव करोति, एवं परमभिप्राये मत्युच्यते 'इअ'त्ति इत्यमुना प्रकारेण प्रागुक्तयुक्त्या आगमपरमार्थः-सिद्धान्तरहस्यं मस्तकशूलं-श्रोतृजनस्य मस्त-कशूलमिव, किं मूलं यस्य स तथा, कस्माद्गुरोः सकाशादवाप्त एवमाशयनिमित्तोपदेशः ?, कोऽपि गुरुर्नासीत्, किंतु निजमति-विकल्पोत्थः, स च ज्ञानादीनां नाशहेतुरेव, यदागमः-विंसोहअंते अणुकाहयंते, जे आयभावेण विआगरेज्जा । अट्ठाणिए हुंति बहूगुणाणं, जो णाणसंकाए मुसं वएज्ज ॥१॥''त्ति श्रीसूत्रकृदिति (५५९*) गाथार्थः ॥ २६ ॥ अथानन्यगत्याऽपि तीर्थमेव यथार्थप्रवृत्तिमदिति दर्शयति—

**आगमविरुद्धचारी आगमवंतंपि तित्थमवि हुज्जा । ता को अण्णो आगमचारीत्ति अ भण्णई लोए ? ॥ २७ ॥**

पतन्मय समर्थयति—

**इह आगमो अ तिविहो अत्ताणंतरपरंपराभुवो। दो गणहरसीसंता तइओ तित्थप्पविंतगो ॥२३॥**

इह—प्रवचने आगमस्त्रिविध —आत्मानन्तरपरंपरापूर्वः, आत्मा चानन्तरं च परम्परा चेतिशब्दाः पूर्वे यस्य स तथा, आत्मागमोऽनन्तरागम परंपरागमश्चेतिभावः, यदागमः—"अहवा आगमे तिविहे पं०, तं०—अत्तागमे अणंतरागमे परंपरागमे" इति श्रीअनुयोगद्वारे, तत्राद्यौ द्वौ गणधरशिष्यान्तौ, सुधर्मजम्बूस्वाम्यन्तावित्यर्थः, तृतीयस्तु तीर्थप्रवृत्यन्तो—यावत्तीर्थानुयायीति गाथार्थः ॥ २३ ॥ अथ संप्रत्यागमः कीदृगित्याह—

**संपइ तइआ आगम तित्थदुमसरिसासकुसुमसमो। फलसरिसो सुहजोगो मोक्खो महुरो रसासाओ ॥२४॥**

संप्रति—वर्त्तमानकाले तृतीय आगमः—परम्परागमलक्षणो वर्त्तते,न पुनरात्मागमानन्तरागमलक्षणौ, तयोर्व्युच्छिन्नत्वात्, स च तीर्थद्रुमसदृशस्य कुसुमसमः—तीर्थलक्षणो यो द्रुमः—कल्पवृक्षादिलक्षणः तत्र सूरिलक्षणा शाखा तत्र कुसुमसमः —पुष्पसमानः, फलसदृशो यस्तस्माच्छुभयोगः—मनःप्रभृतीनां शुभव्यापारः,मनसोऽशुभव्यापारे प्रवर्त्तनं श्रुतमेव निगृह्णाति,यदागमः—"पहावंतं निगिण्हामि, सुअरस्सीसमाहियं। न मे गच्छइ उम्मग्गं,मग्गं च पडिवज्जइ॥ १॥" त्ति श्रीउत्तरा० (८७०) मधुरः फलरसः (रसा) स्वादो मोक्षः, मधुरफला (रसा) स्वादकल्पो मोक्ष इत्यर्थः, तत्र यथा वृक्षमन्तरेण न शाखासंभवः, शाखामन्तरेण च न कुसुमोत्पत्तिः,तदभावाच्च न फलं, फलाभावात्कुतो मधुररसास्वादः ?, तथा तीर्थमन्तरेण न सूरि , यतः पञ्चवस्तुके—"परम्परागतः सूरिः स्वशिष्यं प्रति सम्यगुपस्थापनविधिना सिद्धान्तमध्याप्य पुस्तकेष्वलिखितं सूरिमन्त्रं ददाति" त्युक्तमस्ति, सूरिमन्तरेण च परम्परागमलक्षणस्तृतीय

पापहेतुरिति—न तीर्थानभिमतप्ररूपण न तावन्मात्रेण पापहेतुरिति—न तीर्थानभिमतप्ररूपणामात्रपातकहेतुः, किंतु ?, अर्हत्प्र-
तीर्थप्रतिकूलवचनं—तीर्थानभिमतप्ररूपण न तावन्मात्रेण पापहेतुरिति—न तीर्थानभिमतप्ररूपणा इति वदति कुपाक्षिक इति गम्यं, तत्रार्थापत्तिस्त्वेवं-
मुखा—अर्हद्गणधरादयः सर्वेऽप्यद्य यावत् सूरयोऽर्थापत्त्या मृषावदा—मृषाभाषिण इति वदति कुपाक्षिक इति गम्यं, तत्रार्थापत्तिस्त्वेवं-
यद्यपि तीर्थकरादयो मृषा भाषन्तेऽ ति न साक्षाद् ब्रूते तथाऽप्यच्छिन्नं दुष्प्रसभं यावत् त्रैलोक्यस्यापि तीर्थं पूज्यमिति श्रीवीरेण सौधर्मा-
दिभिश्च भाषितं, तच्च तेषामरुचिविषयोऽर्थापत्त्या तीर्थकरवचस्येवेयमरुचिः, कथं तीर्थकृता वीरेणैतादृशं तीर्थं पूज्यतयोक्तमित्या-
दिरूपा, सा च तीर्थकरादीनां मृषाभाषित्वसूचिका ज्ञेया, तच्च महापातकं, ततोऽपि च प्रतिसमयं अयं पापस्तीर्थोच्छेदं प्रतीच्छति,
ततस्तन्दुलमत्स्यवदिच्छा—तदभिलाषः प्रतिसमयमनन्तभवजनिका—प्रतिसमयं अनन्तकालपरिभ्रमणहेतुबीजभूतं कर्म कुपाक्षिको
बध्नाति, न चैदनुपपत्तिकं, शतवर्षजीविनोऽप्यायुरसंख्येयसमयात्मकं भवति, तादृशोऽप्युत्सूत्रभाषी नियमादाशातनाबहुलोऽनन्तान-
न्तगुणा अप्युत्सर्पिण्यवसर्पिणीः परिभ्रमति चातुर्गतिसंसारे, ताश्च विभज्यमानाः प्रतिसमयमनन्ता अप्यायान्ति, तत्रापि यस्तन्म-
तासक्तः क्रियावान् स विशेषतस्तथा बोध्य इतिगाथायुग्मार्थः ॥२९॥॥३०॥ अथ लौकिकमिथ्यादृगपेक्षया कीदृग् स्यादित्याह—
तेणेवाभिनिवेसी अणंतगुणसंकिलिट्ठपरिणामो । लोइअमिच्छ ओ अफासणिज्जो अ सव्वेसिं ॥२१॥
येन कारणेन प्रागुक्तं तेनैव कारणेनाभिनिवेशी—कुपाक्षिको लौकिकमिथ्यात्वाद्—हरिहरादिश्रद्धावतः सकाशादनन्तगुणसंक्लिष्ट-
परिणामो—मिथ्यात्वबन्धमधिकृत्य महादुष्टपरिणामः, प्रतिसमयं तीर्थहान्यन्वेषणाद्भावतस्तीर्थोच्छेदपातकार्जनात्, सर्वेषामास्तामार्ह-
तानामन्यतीर्थिकानां चोऽप्यर्थे लौकिकमिथ्यादृशामप्यस्पृश्यः, यतो लौकिकमिथ्यात्वं वत्सनागविषकल्पं, तच्च मन्त्राद्युपचारेण
सुखसाध्यम्, अभिनिवेशमिथ्यात्वं तु तालपुटविषकल्पमुपायशतैरप्यसाध्यम्, अतस्तत्स्पर्शात् कदाचिल्लौकिकमिथ्यात्वं परित्यज्य

आगमवदपि आगम-सिद्धान्तो विद्यते यस्य तदागमवत् एवंविधमपि तीर्थंकरनमस्करणीयत्वात्तीर्थंकरादपि बलवत् यदी तिगम्यं यथागमसिद्धचारि-आगमविरुद्धपशुघातचतुष्पादि तेन चरितुं शीलमस्येति तथा, आगमविरुद्धचारि स्यात् तर्हि अन्य -तीर्थात् व्यतिरिक्त कोऽपि नागमचारी मध्यत लोक-मनुष्यलोक त्रैलोक्ये वा?, न कोऽपीत्यर्थः, त्रैलोक्यपूज्यमपि तीर्थं यदि प्रवचनविरुद्धं मार्गेण प्रवर्तेत वा तर्हि तीर्थमप्यतीर्थं भवेत्, तथा च तीर्थोच्छेदेऽतीर्थभूता कुपाक्षिका अपि न भवेयुः, यस्येव तीर्थे कुपाक्षिकमता संभवः, तीर्थोच्छेद तीर्थाप्रवृत्तौ चाऽन्यतीर्थिका भवन्ति, न पुनर्जमाल्यादय कुपाक्षिका अपि, नहि वणिजा-ममाव वणिक्पङ्क्तिमपरममाहु कोऽपि वणिग् संभवति, यस्मिन् सत्यव यस्ततः पृथग्भूय तद्विरुद्धाचारवान् स्यात् स तदाभो मध्यन, एवं च सति चतुष्पाश्रित तीर्थे विद्यमाने व्यक्तिस्तदन्यद्रव्याश्रितस्तीर्थमाभ इत्यनन्यगत्यैव तीर्थं सम्यगितिगाथार्थः ॥२७॥ अथ तीर्थमन्यनीत्याऽनन्यगत्या कीदृग् स्यादित्याह—

तस्य पडिचक्खभूओ तित्थपराहणमडिअपडिचक्खा। सोऽवि जइ दुज्ज वक्खो मुक्खो दुब्भिक्खमुहपडिओ ॥२८॥

तीर्थप्रतिपक्षभूत-तीर्थप्रतिकूलक्रियासक्तसीमन्धरादीनामपि प्रतिपक्षो-द्वेषी चकार एवार्थे प्रतिपक्ष एव, सोऽपि यदि दक्षो-नि-पुणा भवेत्तर्हि मूर्खो-जडा दुर्भिक्षमुखपतित-दुर्भिक्ष यथा क्षयो भवति त मुखे प्रथममयमेव पतित, एतावता मूर्खस्य जगति दुर्भिक्षोऽवगन्तव्य, तथा चानन्यगत्याऽप्यत्र मूर्खचक्रवर्तीतिगाथार्थः ॥२८॥ अथ तीर्थानभिमतवादिन पातक गाथाद्वयेनाह—

तित्थपडिकूलवयण न तावमित्तण पावहेऽत्थि। किंतु अरहन्तपमुहा दुस्स बयस्तत्यपत्तीए ॥२९॥

तत्तो विभ पउमसयं तित्पुच्छअ पच्छइ पावो। भवुत्तमच्छुपिच्छा पइसमय णत भवजणिआ ॥३०॥ "पुग्गं"

प्रवृत्तिहेतुः?, तस्मात्पुस्तकं पुरुषायत्तं, पुरुषोऽपि परपरायत्तः, स्वोत्पत्तौ लिप्यादिशिक्षायां च प्राचीनजनकगुर्वाद्यपेक्षाया अवश्यं भावात्, पुरुषपरम्परा त्वनेन कुपाक्षिकेण नाभ्युपगता, अतः पुस्तकाद्यकिञ्चित्करमेव संपन्नम्, अत्र च काश्चन युक्तयः पर्युषणादशशतके दर्शितास्ततोऽवलोक्या इतिगाथार्थः ॥३३॥ अथ पुस्तकमात्रेण तीर्थप्रवृत्तिर्न भवतीति दृष्टान्तयति—

**किं गुरुनिरविक्खोवि अ वत्थुअसत्थाओ निम्मविज्जावि । जिणपासायप्पमुहं ता कह तित्थंपि पुत्थयओ ? ॥३४॥**

किं गुरुनिरपेक्षोऽपि--गुरोरपेक्षारहितोऽपि, चशब्दात्तथाविधजातिस्मरणादिविज्ञानराहित्यं बोध्यं, वास्तुकशास्त्राद्--वास्तुकग्रन्थमात्राज्जिनप्रासादप्रमुखं--जिनभवनराजमन्दिरादिकं निर्मापयेद्?, अपि तु न निर्म्मापयेत्, ता--तर्हि पुस्तकात्तीर्थमपि कथं प्रवर्तयेत्?, तत्र पुस्तकमपि कस्यचित्केवलसूत्रसंबन्धि तत्रापि कस्यचित् किञ्चिदित्यत्रापि युक्तयो बह्व्योऽपि स्वधियाऽवगन्तव्याः, किंचिच्च पर्युषणादशशतकादवसेयमितिगाथार्थः ॥३४॥ अथ किं कर्तव्यमित्याह--

**तम्हा तित्थे संते धम्मो तित्थंमि न उणमण्णत्थ । तित्थं पुण चाउत्थिअमिह सिद्धं कालगज्जाओ ॥३५॥**

यस्मात्पुस्तकं तीर्थप्रवृत्तिमधिकृत्याकिञ्चित्कर तस्मात्तीर्थे विद्यमाने धर्मः—श्रुतचारित्ररूपस्तीर्थे, एवो गम्यः, तीर्थे एव, न तु णमित्यलङ्कारे यद्वा न पुनरन्यत्र, तीर्थादन्यत्र धर्मो न भवत्येवेत्यर्थः, तीर्थं पुनरिह—भरतक्षेत्रे कालकाचार्यात्—कालकसूरेरारभ्य चातुर्थिकं सिद्धं, एवकारोऽत्राप्यध्याहार्यः, भाद्रपदसितचतुर्थीपर्युषणाश्रितमेव सर्वजनप्रतीतं निशीथचूर्ण्यादिभ्योऽवमातव्यमिति गाथार्थः ॥३५॥ अथ चतुर्थीप्रवर्त्तनादन्यत्किं जातमित्याह—

**नवसओ चउमासं पक्खिसदिवसंमि सम्मयं तित्थे । एवं कालविसेसे पडिक्कमणं पंचहा निअयं ॥ ३६ ॥**

लोकेणगमिथ्यात्ववासितो भवेत्ता पुनर्जन्मान्तरेऽपि सुलभबोधिः स्यात् अत सर्वेषामप्यसून्य इतिगाथार्थः ॥२१॥ अथ मुग्ध-वनत्रामर्क कृपाक्षिकवमन यथा—

जा पुण पुत्थ मित्थं अहवा पुत्थेण तित्थमुद्धरिअं। इयाई पुव्वो पावेसुऽवऽणारिओ णेओ ॥२२॥

य पुन' कृमिसकषायिको लुम्पाकादि तीर्थं पुस्तकं मन्यत, यत पुस्तकपरंपरयैव सम्यग्मार्गावाप्ति'स्यात्,किं तीर्थेन प्रयोजन-मित्यभिप्रायवानित्यर्थ',अथवा पुस्तकेन तीर्थमुद्धृत,व्युच्छिन्नमपि तीर्थं पुस्तक—सिद्धान्तपुस्तकमवाप्य प्रादुष्कृतमस्माभिरित्यादि मवाप' पापत्वपि-यतन्त' पापतमानन्तेष्वपि अनार्यो-नीचो ज्ञेयो, यतस्तथा वक्ता महानृतवादी, स च सर्वपापेभ्योऽप्यधमो भवति,यदुक्तं-"एकत्रासत्यज पापं,पापं निश्शेषमकत्र। द्वयोस्तुलाविधृतयोराद्यमेवातिरिच्यते॥१॥" इत्यादि गोगगास्त्रवृत्तो, तीर्थ च व्युच्छिन्नं तीर्थंकरमन्तरेणास्तां पुस्तकादि केवलिनाऽपि प्रादुष्कर्तुमशक्यस्य,तीर्थस्यवस्थापनेन च तीर्थंकराधिक्यप्रसङ्गादिति गाथार्थ ॥२२॥ अथानृतत्वमेव स्पष्टयति—

जइ मयण मोक्खमग्गे भणिअं मइ णेव कत्थई पुत्थं। जं त पुरिमायस्तं पुरिसोऽवि परपरायत्तो ॥२३॥

यथा भवण-धर्मश्रुतिर्मोक्षाङ्गं भणित, यदागमः "चत्तारि परमंगाणि, दुल्लहाणि अ जंतुणो। माणुसत्तं सुई सद्धा, संजमंमि अ वीरिअं॥१॥" इति,श्रीउत्त०५। तथा कुत्रचित्–कस्मिन्नप्यागमे पुस्तकं नैव-नोक्तमेव,तत्र हेतुमाह–'जं त'न्ति यत्–यस्मात् तत्पुस्तकं पुरुषायत्त-पुरुषायत्तम्, आस्तां वाचनं,लिखनमपि पुरुषमन्तरेण न स्यात्, तथा च लिखनं शोधनं वाचनं चेति त्रितयमपि पुरु-षायत्त, नहि पुरुषनिरपेक्षं पुस्तकं किञ्चिदपि स्वानुरूपं पुस्तकं जनयति, तथा शोधयति वाचयति चेति, कथं पुस्तकपरम्परा धर्म

तथा कुपाक्षिकविशेषा अपि, पर यद्यपि तत्प्रतिक्रमणं नाच्छिन्नतीर्थपरम्परागतं, किन्तु निजमतिकल्पितं, तथापि नामकालयोः
साम्यात् तीर्थानुकरणं, पाक्षिकप्रतिक्रमणं चानादिसिद्धं तीर्थेन चतुर्दश्यामेव विधीयते, चतुर्मासिकप्रतिक्रमणं तु श्रीकालकाचार्यादा-
रभ्य संप्रति चतुर्दश्यामेव, कुपाक्षिकैस्तु नाममात्रेणापि पाक्षिकचातुर्मासिकप्रतिक्रमणं पञ्चदश्यामेव, तच्च चिह्नं तीर्थाद्बहिर्भावसूचकं
कुपाक्षिकाणां स्फुटमेव, यद्यपि कुपाक्षिकविशेषः खरतरश्चतुर्दश्यामेव पाक्षिकं प्रतिक्रमति तथापि चतुर्दशीपाते पञ्चदश्यङ्गीकारेण
तत्तुल्य एव, एवं पर्युषणाचतुर्थ्यङ्गीकारेऽपि चतुर्थीपाते पञ्चम्यङ्गीकारेण मासवृद्धौ च श्रावणाङ्गीकारेण च विशेषकुपाक्षिकेभ्यो न
भिन्न एवेति बोध्यमितिगाथार्थः ॥३८॥ अथ प्रस्तुतस्याञ्चलिकस्य यैश्चिह्नैस्तीर्थाद्बहिर्भावोऽवगम्यते तेष्वपि विशेषमाह—

**जेहंचलिओ तित्थे पायं खमणुव्व तित्थबाहिरिओ। पयडो तेसुवि चिण्हेसु तिण्णि पुत्तिप्पमुहयाइं ॥३९॥**

यैश्चिह्नैराञ्चलिकस्तीर्थाद् बहिः क्षपणकवत्—पिच्छिकादिचिह्नैः दिगम्बर इव प्रकटो भवति तेष्वपि चिह्नेषु 'पुत्तिप्रमुखकानि' मुख-
वस्त्रिकाप्रतिक्रमणपर्युषणाचतुर्थीनिषेधरूपाणि त्रीणि चिह्नानि आबालगोपाङ्गनानामपि प्रतीतानीति गम्यमितिगाथार्थः ॥३९॥
अथ प्रतीतचिह्नेष्वपि प्राधान्यमाह—

**तेसु भणिएसु भणिअं पायं सयलंपि सेसचिण्हगयं। तत्थवि पोत्तिअचाओ निअअणुगयसावयाईणं ॥४०॥**

तेषु—त्रिषु भणितेषु शेषचिह्नगतं सकलमपि प्रायो भणितं बोध्यं, तत्रापि—तेष्वपि निजानुगतश्रावकादीनां मुखवस्त्रिकात्यागो
महाचिह्नं तीर्थाद् बहिर्भवने इतिगाथार्थः ॥४०॥ अथ मुखवस्त्रिकात्यागो महच्चिह्नं ततः किमित्याह—

**तेण मुहपत्तिठावणपगरणमिह वद्धमाणआयरिओ। पुण्णिमपक्खठिओविअ कासी अण्णेसि का वत्ता ? ॥४१॥**

पन्नत –चतुर्थीप्रवृत्तिचत्रामतुर्मासं पाक्षिकदिवस तीर्थं सम्मतं, यदुक्त–"कालगआहि कारणिआ चउत्थी पवत्तिआ, तब्बसेण य चउम्मासिआपि चउत्थीए आयरिआणि'त्ति" धर्मोपदेशमालाग्रन्थादौ,यत्तु क्वचित् ठाणाङ्गस्यादौ 'तब्बसेण य पक्खिआपि चउत्थीए आयरिआणि त्ति लिखितं तत्पुनः मुद्राकारकेन कल्पितपाठः परावर्तितो बोध्य , अत्र च युक्तिः पौर्णमीयकमतनिरा करण दीपिकायाम दर्शिता, तत्र प्रागुक्तयुक्त्या कालविनेय प्रतिक्रमणं पञ्चधा–पञ्चप्रकारं नियत–निर्यन्त्रितमिति गायार्थः ॥२६॥ अथ स्थाननिपन्नानि पञ्च प्रतिक्रमणान्याह–

दसिअराइअपक्खिअ चउमासिअ सच्छरनि पचविह। पडिकमण पुण पावा निअत्तणं नामनिप्फत्ती ॥२७॥

दैवसिकं च रात्रिकं च पाक्षिकं च चातुर्मासिकं च सांवत्सरिकं चेति समाहार ,इत्यमुना प्रकारेण पञ्चविध–पञ्चप्रकारं दिवसा दिस्थाननिपन्नम्, अस्य प्रतिक्रमणस्य नामनिष्पत्ति पापाभिवर्तन प्रतिक्रमणमिति गाथार्थ ॥२६॥ अथ नाममात्रे पञ्चविध प्रति क्रमणं परस्य तत्प्रयोजनमाह–

भाइनुग अणुकरणं कयइत्ति आणापि होइ तित्थण। अनिमतिग तु तित्था बाहिरभावस्स मह त्तिणइ ॥२८॥

श्रावश्यकरात्रिकदैवसिक प्रतिक्रमण इत्याक्षिकाणां तीर्थेन सहानुकरणम् ,अपिरवार्थेऽनुकरणमेव,यथा नटो राजादीनामनुकरणचेष्टाप गणना भवति तथा ऽयमपि प्रतिक्रमणादिक्रियया साधानुकरणकारी स्यात,न त्वनुकरणमात्रेण तीर्थान्तर्वर्ती स्यात् ,नटस्यापि राजादि त्वप्रसङ्गात ,अन्तिमत्रिकं तु–पाक्षिकचातुर्मासिकसांवत्सरिकलक्षणं प्रतिक्रमणत्रयं तीर्थाद्बहिर्भावस्य महाचिह्नम् ,एतैर्थिकैस्तीर्था दहि भाग्य रानकपि भाषत इत्यर्थः नतकपमितिशम्बूणु,दैवसिकं रात्रिकं यमि प्रतिक्रमणद्वयं यथा तीर्थं दिवसरात्र्योः पयन्ते करोति

तथा कुपाक्षिकविशेषा अपि, पर यद्यपि तत्प्रतिक्रमणं नाच्छिन्नतीर्थपरम्परागतं, किन्तु निजमतिकल्पितं, तथापि नामकालयोः साम्यात् तीर्थानुकरणं, पाक्षिकप्रतिक्रमणं चानादिसिद्धं तीर्थेन चतुर्दश्यामेव विधीयते, चतुर्मासकप्रतिक्रमणं तु श्रीकालकाचार्यादारभ्य संप्रति चतुर्दश्यामेव, कुपाक्षिकैस्तु नाममात्रेणापि पाक्षिकचातुर्मासिकप्रतिक्रमणं पञ्चदश्यामेव, तच्च चिह्नं तीर्थाद्बहिर्भावसूचकं कुपाक्षिकाणां स्फुटमेव, यद्यपि कुपाक्षिकविशेषः खरतरश्चतुर्दश्यामेव पाक्षिकं प्रतिक्रमति तथापि चतुर्दशीपाते पञ्चदश्यङ्गीकारेण तत्तुल्य एव, एवं पर्युषणाचतुर्थ्यङ्गीकारेऽपि चतुर्थीपाते पञ्चम्यङ्गीकारेण मासवृद्धौ च श्रावणाङ्गीकारेण च विशेषकुपाक्षिकेभ्यो न भिन्न एवेति बोध्यमितिगाथार्थः ॥३८॥ अथ प्रस्तुतस्याञ्चलिकस्य यैश्चिह्नैस्तीर्थाद्बहिर्भावोऽवगम्यते तेष्वपि विशेषमाह—

जेहंचलिओ तित्थे पाय ख्वमणुव्व तित्थबाहिरिओ। पयडो तेसुवि चिण्हेसु तिण्णि पुत्तिप्पमुहयाइं ॥३९॥

यैश्चिह्नैराञ्चलिकस्तीर्थाद् बहिः क्षपणकवत्—पिच्छिकादिचिह्नैः दिगम्बर इव प्रकटो भवति तेष्वपि चिह्नेषु 'पुत्तिप्रमुखकानि' मुखवस्त्रिकाप्रतिक्रमणपर्युषणाचतुर्थीनिषेधरूपाणि त्रीणि चिह्नानि आबालगोपाङ्गनानामपि प्रतीतानीति गम्यमितिगाथार्थः ॥३९॥

अथ प्रतीतचिह्नेष्वपि प्राधान्यमाह—

तेसु भणिएसु भणिअं पायं सयलंपि सेसचिण्हगयं। तत्थवि पोत्तिअचाओ निअअणुगयसावयाईणं ॥४०॥

तेषु—त्रिषु भणितेषु शेषचिह्नगतं सकलमपि प्रायो भणितं बोध्यं, तत्रापि—तेष्वपि निजानुगतश्रावकादीनां मुखवस्त्रिकात्यागो महाचिह्नं तीर्थाद् बहिर्भवने इतिगाथार्थः ॥४०॥ अथ मुखवस्त्रिकात्यागो महच्चिह्नं ततः किमित्याह—

तेण मुहवत्तिठावणपगरणमिह वद्धमाणआयरिओ। पुण्णिमपक्खठिओविअ कासी अण्णेसि का वत्ता? ॥४१॥

येन स्थापन तीथात् पहिमवन स्तनिकस्य मडमिह तेन कारणेनह मुस्तवस्तिकस्थापनप्रकरणं पूर्विमापक्षस्थितोऽपि च श्रीवद्
मानाचार्यः अकार्षीत्, तथाहि–"मोहतिमिरोहमूरं नमिउं वीरं सुमाणुमारम। साहेमि अ मुहपत्ति सद्दाणमणुहट्ठाए॥१॥ इह केइ
ममपत्तयं अपुसंता मावयाण मुहपत्ति। पडिसेहंति जईण उवगरणमिणपतिक्कमणं॥२॥ एवं च चीवराणिवि जुञ्जति न सावगाण परि-
हउ उमहा तावियि मज्झिमजिणाण उवगरणभूआइं॥३॥ ज च जइवि कुसंसो पाए मुहमतएण पच्छित्त। पावइ किं पुण सड्ढो तं
पिअ निप्रकप्पणामित्तं?॥४॥" इत्यादि फलक मय, न चैत्र श्रीवर्द्धमानघरेरव प्रवृत्ति, किंत्वन्येषामपीत्युत्तरार्द्धमाह–'अण्णेसिमि'
त्यादि, अन्यषां तीर्थस्थितानां धरिप्रवराणां का वार्त्ता?, तीर्थनाथो राजरक्तोऽपि निजसमुदायादिर्भूतस्तनिकप्रतिबोधाय मुस्त
वस्तिकस्थापक प्रकरण कृतवान् तर्हि तीर्थवर्त्तिन मूरय कुर्वन्ति तत्र किमाश्चर्यमिति भाव, तथाहि–प्रथम श्रावकाणां श्राविकाणां
च प्रतिक्रमणविचारो लिख्यत–यथा "से किं त लोउत्तरिअं भावावस्सय?,२ जण्णं समणो वा समणी वा सावओ वा साविआ वा
तचित्ते तम्मणे तल्लेसे तदज्झवसिए तदज्झवसाणे तदट्ठोवउत्ते तदप्पिअकरणे अण्णत्थ कत्थइ मणं अकुव्वेमाणे उभओकालं
आवस्सयं करंति"त्ति(२७) श्रीअनुयोगद्वारसूत्रे, एतद्वृत्तिः–यदिह श्रमणादयस्तच्चित्तादिविशेषणविशिष्टा उभयकालं प्रतिक्रम-
णाद्यावश्यक कुर्वन्ति तल्लोकोत्तरिकं भावावश्यकमिति संटङ्क, तथा 'समणेण सावएण य अवस्सकायव्वयं हवइ जम्हा। अंतो अहोनिस
स्स तम्हा आवस्सय नाम॥१॥ इति श्रीअनुयो०सूत्र (३०) अत्र सूत्र वृत्तौ च साधूनां श्रावकाणां च सहक्षमेव षड्विधावश्यकान्तर्गतं
प्रतिक्रमण प्रकटमवोक्त, तथा "साविगा गगा मिच्छादिट्ठि असम दिवगा, आवस्सयं वेकालिअं करेति, पच्चक्खाइ अ"त्ति श्रीआवश्यक
चूर्णौ योगसंग्रहाधिकारे, तथा "असइ साहूगइआण पोसहसालाए मगिहे वा एवं सामाइअं वा करेति"। श्रीआवश्यकचूर्णौ अस्या-

ऽर्थानाध्ययने, अत्राप्यावश्यकचूर्णौ स्थानद्वयेऽपि पड्विधावश्यकरूप प्रतिक्रमणं सुव्यक्तमुक्तं श्रावकाणा. पड्विधावश्यकक्रमस्तु श्री-
आवश्यकचूर्ण्युक्त एव ज्ञेयः, ननु स साधूद्देशेनोक्तोऽस्ति ततः श्रावकाणां कथं लभ्यते इतिचेदुच्यते,साधूनां श्रावकाणां च पड्वि-
धावश्यकक्रमस्य पूर्वोक्तश्रीसिद्धान्ताक्षरैः सदृशस्यैव लभ्यमानत्वाद्,उपलक्षणव्याख्या वणाद्,अन्यथा श्रमण्या अपि तत्क्रमाभावः
प्रसज्येत, यथा च–"पंचमहव्वयजुत्तो अणलस माणपरिवज्जिअ मई अ। संविग्गनिज्जरट्ठी किइकम्मकरो हवइ साहू॥१॥"(नि१२०)
इति श्रीआवश्यकोक्तवन्दनविधिः साधूद्देशेन निर्दिष्टोऽपि श्रमणीश्रावकश्राविकात्रयस्यापि प्रतिपद्यते तथा पड्विधावश्यकक्रमोऽ-
प्यवश्यं प्रतिपत्तव्यः,केवलं तु श्रावकं प्रतीत्य कुत्रापि समग्रस्य पड्विधावश्यकविधेरन्यत्रानुपलम्भात्, किं च–श्रावकाणां पड्विधाव-
श्यकविधिविपयं विमार्गं स्वमतया संभाव्य क्वाप्यागमे पूर्वागमज्ञप्रणीतप्रकरणेषु पूर्वाचार्यपरम्परायां चादृश्यमानानुवादं यः कल्पयति
स मता न प्रमाणं,स्वच्छन्दप्रवृत्तत्वेन श्रीसर्वज्ञाताभङ्गकारित्वादिति १॥ इति मुखवस्त्रिकादेर्यत्कार्यं प्रतिक्रमणादि तद्दर्शितं,तच्च कारण-
मन्तरेण न भवतीति तत्कारणं मुखवस्त्रिकादीति, दर्शयति श्रावकाणां रजोहरणमुखवस्त्रिकाविचारो यथा–"से किं तं लोउत्तरिअं"
इत्यादि प्रागुक्तं, तत्र तदप्पिअकरणेत्ति–'तदर्पितकरणः' करणानि–रजोहरणमुखवस्त्रिकादीनि तस्मिन्–आवश्यके यथोचितव्यापार-
नियोगेनार्पितानि करणानि येन स तथाविधो, द्रव्यतः स्वस्थानन्यस्तोपकरण इत्यर्थः इतिश्रीअनुयोगद्वारवृत्तौ श्रीवीरनिर्वा-
णात्सहस्रवर्षसंजातैः श्रीहरिभद्रसूरिभिः कृतायां,तथा "तस्साहणे जाणि सरीररओहरणमुहणंतगाइआणि दव्वाणि ताणि किरिआ-
करणत्तणओ अप्पिआणि"त्ति श्रीअनु०चूर्णौ,तथा 'तदर्पितकरणः' करणानि–तत्साधकतमानि देहरजोहरणमुखवस्त्रिकादीनि तस्मि-
न्–आवश्यके यथोचितव्यापारनियोगेनार्पितानि–नियुक्तानि येन स तथा, असूनि च तच्चित्तादिविशेषणानि लिङ्गविपरिणामतः

गच्छइ,नाममुद्दगं च उत्तरिज्जग च पुढविसिलावट्टए ठवेइ२ समणस्स भगवओ महावीरस्स अंतिअं धम्मपन्नत्ति उवसंपज्जित्ताणं वि-
हरति" श्रीउपासकदशाङ्गषष्ठाध्ययने,अत्रैव देवपरीक्षानन्तर "तेणं कालेणं सामी समोसढे,तए णं से कुंडकोलिए इमीसे कहाए
लद्धट्ठे हट्ठे जहा कामदेवो तहा निग्गच्छइ जाव पज्जुवासइ" उपास०६अध्ययने,कामदेवश्च गृहीतपौषध एवात्रैव द्वितीयाध्ययने
एवं निर्गतो यथा–"तए णं से कामदेवे इमीसे कहाए लद्धट्ठे समाणे एवं खलु समणे जाव विहरइ,तं सेअं खलु ममं समणं भगवं
महावीरं वंदित्ता नमंसित्ता तओ पडिनिअत्तस्स पोसहं पारित्तएत्तिकट्टु एवं संपेहेइ" इत्यादि, इह कुण्डकोलिकेन मुक्तोत्तरीयेन
मुखवस्त्रिकादिना गृहीतपौषधेन धर्मानुष्ठानं कृतम् ,अन्यथा कामदेवोपमानेन तत्पारणाभिप्रायो न घटते,तथाहि अवट्टि (वहद्दइ) कुसु-
मसेहर सुवयदवाहिगारमज्झंमि । ठवणायरिअं ठविउ पोसहमालाइ पुण सीहो ॥१॥ उम्मुक्कभूसणो सो इरिआइपुरस्सरं च मुहपत्तिं ।
पडिलेहंतो पच्छा चउविहं पोसहं कुणइ ॥२॥ इति व्यवहारचूलिकादौ सिंहश्रावकस्य स्थापनाचार्यस्याग्रे मुखवस्त्रिकयैव पौषधग्रहण-
विधिः प्रकटमेव भणितः,तथा श्रीआवश्यकनिर्युक्तौ वन्दनकाध्ययने "अक्खे वराडए वा कट्ठे पुत्थे अ चित्तकम्मे अ । सब्भा-
वमसब्भावं ठवणाकायं विआणिज्जा ॥१॥" (१५२९) इत्यनया गाथया गुरोरभावे स्थापनाचार्याग्रे वन्दनादिकर्त्ता मुख्यवृत्त्या
साधुरेवोक्तः, यथा "पंचमहव्वयजुत्तो अणलस माणपरिवज्जिअमईओ । संविग्गनिज्जरट्ठी किइकम्मकरो हवइ साहू ॥१॥" परं साधु-
वच्छ्रावकेणापि वन्दनकं दीयते, न च तस्य रजोहरणं क्वापि सिद्धान्ते भणितं, मुखवस्त्रिका त्वनेकेषु स्थानेषु भणिता,अञ्चलेन पु-
नर्वन्दनकं क्वापि न दृश्यते,यश्च कृष्णवासुदेवदृष्टान्तस्तैर्भण्यते तत्रापि यथा मुखवस्त्रिकया वन्दनकं न भणितं तथाऽञ्चलेनापि नोक्तं,
यत्तु 'असइ पुत्तस्स अंतेणं'ति आवश्यकचूर्ण्यक्षराणि दृष्ट्वा पुत्तशब्देन भ्रान्ताः सन्तस्तेऽञ्चलेन वन्दनकं वदन्ति तत्रापि ते मुग्धाः

प्रभाव न विशन्ति,पत तत्र सामायिकव्रतविवरणे सामायिकग्रहणानन्तरं "अह घर वो से उवगहिअ रयहरण अत्थि,तस्स असइ पोत्तस्स अंतर्ण"ति अवगाभि मन्ति, नपामयमर्थ -अथ गृहे सामायिकं करोति तदा तस्यौपग्रहिकं रजोहरणमस्ति, तेन सुवं प्र माअपति,नस्यौपग्रहिकरजोहरणस्य असइति असत्त्वेऽभाव तस्य वस्त्रस्यान्तेन-अञ्चलेन सस्तारकादिभुवं प्रमार्जयति,एतैरक्षरैः स्वा-स्थायसंस्तारकभूमिप्रमार्जनमवोक्तं,न वन्दनादि, किंच-पुरुषस्येन मुखवस्त्रिकापि भण्यते, यत आवश्यकनियुक्तावुक्त-"वा ममायसंत्रा निकारण देति कअ उपणाए। इत्यत्थगुलिसंसा पुणामरिआ य भासति॥१॥"(नि०१४२७) किंच वन्दनकभाष्येऽपि श्रावकस्य मुखवस्त्रिकामय वन्दनादिविधिरुक्त', तथाहि-"न य विच्छिन्न वामगजाणु निसिऊण तत्थ मुहपत्ति। रयहरणमज्झ मागंमि ठवत पुजपायजुग ॥१॥ एव सुमावओ विहु दुवालसावत्तदर्ण दितो। मुहपुत्तिमज्झभागंमि ठवए पुअपायजुगं ॥२॥" इति। अथ स्थानिकाः श्रावकानां मुखवस्त्रिकानिषेधवत्स्थापनाचार्यस्थापनमपि प्रतिषिद्धमतः प्रसङ्गतस्तद्व्याख्यानस्य निराकरणं (क्रियते), यथा ननु किं श्रावकस्यापि कल्याणमे स्थापनाचार्यस्थापनमस्ति ?,अस्तीति ब्रूमः-गुरुविरहंमि अ ठवणा गुरूवएसोवदंसणत्थं च। जिणविरहंमि य जिणबिंबसेवणामंतणं सहलं ॥१॥ रण्णुव्व परुक्खस्सवि जह सेवा मंतदेवयाए वा। तह चेव परुक्खस्सवि गुरुणो सेवा विणयहेऊ ॥२॥ इत्यादि (२४६५) विशेषावश्यकादिवचनप्रामाण्यात्, अथ यतिसामायिकप्रस्तावे भवन्तशब्द व्याख्या नयता 'गुरुविरहंमी'त्यादि भाष्यकृता साधुमाश्रित्योक्तं न श्रावकमितियेत्तर्हि प्रष्टव्योऽत्र भवान्-किं श्रावकः सामायिकमुच्चरन् भदन्तशब्द भणति न वा ?, यदि भणति तर्हि साधुवत्साक्षाद्गुरोरभावे सोऽपि स्थापनाचार्य स्थापयति, उभयत्रापि न्यायस्य समान त्वात्, द्वितीयस्तु पक्षो न क्षम एव, भदन्तशब्दमन्तरेण सामायिकस्याहंतेवोमरर्णीयत्वादिति, किंच-यदि सकलसिद्धान्तसम्राम

सम्यक् चतुरेणापि साधुना गुरोरभावे स्थापनाचार्यस्य पुरत एव यथोदितकृत्यं क्रियते यथा ''भरुअच्छंमि
विज्ञेन समग्रसामाचारीसमाचरणचतुरेणापि माधुना गुरोरभावे स्थापनाचार्यस्य पुरत एव यथोदितकृत्यं क्रियते यथा ''भरुअच्छंमि
अ विजए नडपिडए वासनाग नागहरे। ठवणा आयरिस्सा सामायरी पउजणया ॥१॥ (आव० नि० १४१३) तर्हि तथाविधविश-
दसमयसारविचारचतुरचेतस्केन सदाऽन्योऽन्यकार्यैकदम्बकप्रवणमनस्केनोपासकेन सुतरामेतद्विधेयमित्यागमप्रमाणमुपदर्श्य युक्ति-
मपि दर्शयामः, तथाहि-यदि स्थापनाचार्यमन्तरेणापि वन्दनाद्यनुष्ठानं विधीयते तदा यद्वन्दनकनिर्युक्तौ ''आयप्पमाणमित्तो चउ-
द्दिसि होइ उग्गहो गुरुणो'' (१२३३ वृत्तौ) इत्याद्यक्षरैरवग्रहणप्रमाणमुक्तं तत्कथं घटामियर्त्ति?, नहि गुर्वभावे गुरुगतावग्रहप्रमाणं
घटमानकं स्यात्, ग्रामाभावे तत्सीम्नो व्यवस्थानत्, तथा तत्रैव यदपरमुक्तं 'चउस्सिरं तिगुत्तं च दुपवेसं एगनिक्खमणं''
(१२१४) इत्यादि, तदपि न युक्तं भवेत्, यतश्चतुःशीर्षत्वं वन्दनकदातृतत्प्रतीच्छकयोः सद्भावे सति संभवति, तच्च स्तनिका-
भिप्रायेण कथं युज्यते?, साक्षाद्गुर्वभावे स्थापनाचार्यस्यानभ्युपगमात्, द्विप्रवेशैकनिष्क्रमणविचारणा तु गुरोरभावेऽत्रविभूतस्था-
पनाचार्यस्थापनान्निर्गमप्रवेशाभावेन दूरापास्तैव, अथैतद्दोषपरिजिहीर्षुः परः प्रेरयति-ननु वयमपि हृदयमध्ये गुरुं स्थापयामस्त-
तश्च सर्वं सुस्थं, हंहो तदपि खरविषाणे लावण्यवर्णनमिव केवलप्रयासहेतुरेव, हृदयमध्यवर्त्तित्वाद् गुरोर्वन्दनकदात्रा सहैव संचरणात्
न कथंचिदपि तद्दातुर्निर्गमप्रवेशौ स्यातां, तदसत्त्वे च न पञ्चविंशत्यावश्यकसंपूर्तिः, तदसंपूर्तौ च वन्दनकाशुद्धिः, एवमपाकृतः
सन् भूयोऽपि मुखरतया परो ब्रवीति-ननु न केवलं वयं हृदयमध्ये एव गुरुं व्यवस्थापयामः, किं तर्हि निकटतरवर्त्तिकटकुड्या-
दावपि स्थापयित्वा तद्विधापयामः, हन्तैवं ब्रुवता भवताऽपि शून्यहृदयतया 'अक्खे वराडए वा कट्ठे पुत्थे अ चित्तकम्मे अ। स-
ब्भावमसब्भावं ठवणायरिअं विआणाहि ॥१॥ इत्यागमवचनात् स्वमुखेनैव स्थापनाचार्यस्थापनाऽस्मदभीष्टाऽमन्यत, तस्माच्छ्रा-

स्यादित्यर्थ इतिगाथार्थः, ॥४२॥ अथ सिद्धान्तैकवचनारुचिकस्य बहुभिरपि किमपि न स्यादित्यत्र दृष्टान्तमाह—

**इक्कंमि पईवंमि अ दीवंते नेव पासई किंची । लोअणसत्तिविमुक्को पईवकोडीहिं किं तस्स? ॥४३॥**

न्धोऽप्यर्थं, एकस्मिन्नपि प्रदीपे दीप्यमाने किञ्चिन्न पश्यति, तत्र हेतुमाह—यतः सः 'लोचनशक्तिविमुक्तः' लोचनयोः—अक्ष्णो-
र्या शक्तिः—वस्तुरूपविषयकज्ञानजनकशक्तिस्तया विमुक्तो—विशेषेण मुक्तः—सर्वथा दृक्तेजोरहितस्तस्य पुरुषस्य प्रदीपकोटिभिरपि
किं?, न किमपीत्यर्थः, इतिगाथार्थः ॥४३॥ अथ दार्ष्टान्तिकमाह—

**एवमणुओगवयणं पुत्तिरयहरणपयासयं पयडं । इक्कंपि दीवकप्पं उम्मीलिअनयणसंणीणं ॥४४॥**

एवमनुयोगवचनं—'से किं तं लोउत्तरिअं भावावस्सयं?' इत्यादि प्रागुक्तं श्रीअनुयोगद्वारसूत्रवाक्यं, कीदृशं?—मुखवस्त्रिकारजो-
हरणप्रकाशकं—श्रावकधर्मेऽपि रजोहरणमुखवस्त्रिकाद्युपकरणं प्रतिक्रमणक्रियोपयोगि भणितं, कथं?—'प्रकटं' स्पष्टं, न पुनरव्यक्तम्,
एतद्वचनमेकमपि 'दीपकल्पं' प्रदीपकल्पं—प्रदीपतुल्यं, केषाम्?—उन्मीलिते—उद्घाटिते नयने—लोचने येषां ते उन्मीलितनयनास्ते
च ते संज्ञिनश्चेति समासः, उद्घाटितलोचनोऽपि यद्यसंज्ञी स्यात्तदा न किंचिदभीष्टार्थसिद्धिः, संज्ञ्यपि यदि निमीलतिलोचनो
लोचनरहितो वा स्यात्तथाप्यकिञ्चित्कर इति द्वयोरपि विशेषणयोः प्रयोजनमिति गाथार्थः ॥ ४४ ॥ अथ स्तनिकस्य विंशत्या
दिनैः पर्युषणाकरणे प्रयोजनमाह—

**जं पुण वीसदिणेहिं पज्जोसवणाऽभिवड्ढिए वरिसे । तं तित्थबज्झबज्झो सयंति पच्चायणट्ठाए ॥४५॥**

यत्पुनः अभिवर्धिते वर्षे विंशत्या दिनैः पर्युषणा तत्स्वयमहं तीर्थबाह्यबाह्य इति प्रत्यायनार्थं बोध्यं, तीर्थबाह्यो राकारक्तस्त-

गोऽप्यहं माघ इति जनानां प्रत्यायनार्थं विंशत्या दिनैः पर्युषणातिभाव, यथा सर्वेऽपि कुपाक्षिका अप्रवचनपाशास्ते च परस्परं कथ-
ञ्चिद्विप्रतिपन्ना अपि पञ्चाशता दिनैरेव पर्युषणां कुर्वन्ति, अयं तु तेभ्योऽपि वैलक्षण्यसूचकं विंशत्या दिनैरेव पर्युषणाकरणेन सर्व-
कुपाक्षिकम्य' स्वात्मानं माघ ज्ञापयतीति माघ इतिगाथार्थः ॥४५॥ अथ विंशत्या दिनैयत्कृणितं तदाह—

णं न सामिग्गहिअ पंचगहणाइ जाव पचासा । अभिवड्ढिए उ वीसा निअमा भावेण मुणिवयणं ॥४६॥

यत्—यस्मात् स्वामिग्रहिकं पञ्चकान्या तावत् क्रियते यावत्पञ्चाशद्दिना भवन्ति अभिवर्द्धित तु—अभिवर्द्धितवर्षे तु विंशतिर्दिना
स्वामिग्रहिकं भवति, तत्र नियमाभावेन मुनिवचनं स्यात्, पृच्छतां गृहस्थानां पुरस्तात्तिष्ठामो नवेति संदिग्धमेव साधवो वदन्ती
ति, स्वयं नियम पि गृहस्थसाक्षिकनियमाभावात्स्वामिग्रहिकं भण्यते इति गाथार्थ ॥४६॥ कथमभिवर्द्धित विंशतिदिनेभ्योऽन्यथा
पञ्चाशद्दिनेभ्यश्च गृहिज्ञातमेव भवतीति दर्शयति—

तत्तोवि पर निगमं भासतो नाहिगरणदोसमुणी । इअ मासगाइअत्थो जुत्तीए भणिओ पयडो ॥४७॥

तत'—तागुक्तात् स्वामिगृहीतकालात् परं नियमं—गृहस्थानां पृच्छतां पुरो वयमत्र स्थिताः स्म इति निश्चयं भाषमाणो नाधि
करणदोषमुनि' स्यात्—अधिकरणदोषभाग् साधुन भवेत् इति—अमुना प्रकारेण भाष्यगाथार्थो भणित , क ?—चूर्णौ—निशीथचूर्णा
प्रस्ता'—स्फुट ,तथाहि—"इत्थ उ अणभिग्गहिअं वीसइराइं सवीसइमासो। तेण परमभिग्गहिअं गिहिणायं कत्तिअ जाव॥१॥ असिवाइ
कारणहिं अहवा वासं न सुट्ठु आरद्धं। अभिवड्ढिअंमि वीसा इअरेसु सवीसईमासो॥२॥ इति श्रीनिशीथभाष्ये उद्दे०१०। एत-
च्चूर्णिपया "इत्थ उ"गाहा,इत्यपि—आसाढपुण्णिमाए,सावणबहुलपंचमीए पज्जोसविज्जति अप्पणा अणभिग्गहीअं,अहवा जइ गिह

स्था पुच्छंति-अज्जो! तुम्हे इत्थ वरिसाकालं ठिआ अह न ठिआ?, एवं पुच्छिएहिं 'अणभिग्गहिअं ति संदिग्धं वक्तव्यम्, इहा-
न्यत्र वा नाद्यापि निश्चयो भवतीत्यर्थः, एवं संदिग्धं कियत्कालं वक्तव्यम्?, उच्यते-'वीसइरायं'ति जइ अभिवड्ढिए वरिसे तो
वीसतिरातं जाव अणभिग्गहिअं, अह चंदवरिसे तो सवीसतिरातं मासं जाव अणभिग्गहितं भवति. तेणं-तत्कालात्परतः अप्पणो
आभिमुख्येन गृहीतमिह व्यवस्थिता इति, गिहीण य पुच्छंताण कहेति-ठिआ मो वरिसाकालंति, किं पुण कारणं वीसतिराते स-
वीसतिराए मासे वा गए अप्पणो अभिग्गहिअं गिहिणायं करेंति आरतो न करेंति?, उच्यते, 'असिवा' गाहा, कदाचि असिवं भवे,
आदिग्गहणातो रायदुट्ठादी, वासं वा न सुट्ठु आरद्धं वासिउं, एवमाइएहिं कारणेहिं जइ अच्छंति तो अहिगरणादिदोसा, अह
न अच्छंति तो गिहत्था भणंति-एते सव्वण्णुपुत्तगा न किंचि जाणंति, लोगो घरादीणि छादेति, हलादिकम्माणि वा संठवेति, अ-
भिग्गहिए गिहिणाए अ आरओ कए जम्हा एवमाइआ अहिगरणादिदोसा तम्हा अभिवड्ढिअंमि वरिसे वीसतिराते गते गिहि-
णातं करेंति, तिसु चंदवरिसेसु सवीसतिराते मासे गते गिहिणातं करेंती'ति निशीथचू० १०३०, अयमभिप्रायः-श्रावणे-
ऽप्यष्टमतपश्चैत्यपरिपाटिसांवत्सरिकप्रतिक्रमणादिकृत्यविशिष्टं पर्युषणापर्व न कर्त्तव्यमिति गाथार्थः ॥४७॥ अथाष्टमतपःप्रभृति-
कृत्यविशिष्टा पर्युषणा कदा कर्त्तव्येत्याह—

जं पुण पज्जोसवणा पव्वं सव्वेसिं सम्मयं समए। तं भद्दवए मासे चउत्थिदिणे नन्नहा मेरा ॥४८॥

यत्पुनः सर्वेषामाबालगोपाङ्गनानामपि समये-प्रवचने पर्युषणापर्व सम्मतं-प्रतीतं तद्भाद्रपदे मासे चतुर्थीदिनेऽर्थाच्छ्रीकालका-
चार्यादारभ्य दुष्षमहं यावत्संप्रतिकाले भवतीति, अन्यथा मेरा-मर्यादा न स्यात्, किंच-क्वाप्यागमे श्रावणमासविशिष्टं पर्युषणा-

परेतुक्त नास्तीति गाथार्थ ॥४८॥ अथ सम्प्रति पञ्चकल्पान्या कृप न क्रियते इत्याह—

संपइ पमगहाणीपमुहविही सघवयणओ छिन्नो। सामिग्गहगिहिणाय उभयपि अ भद्दवइ मइ ॥४९॥

संप्रति-वर्तमानकाल पञ्चकानिग्रमुत्तविधि' समवमनत'-तीर्थाग्रहाद् व्युच्छिन्न', अत एव क्वचिदिय गाथापि—"वीसहिं दि यहिं कप्पो पंचगहाणीइ कप्पठवणा य। नवमयतेणउणीइ वुच्छिन्न संघआणाए ॥१॥"त्ति, तस्मात्स्वामिग्रहगृहिज्ञातमुभयमपि-स्वामिगृहीतं गृहिज्ञात चेति द्वितयमपि भाद्रपद—भाद्रपदचतुर्थ्यां भद्र—भद्रकं तीर्थाभ्युपगतत्वादिति गाथार्थ'॥४९॥ अथ स्वनि-र्मल्य प्रचिरसूत्रक यथाछन्दस्तमाह—

कि भागममडणुत्त तित्थाणुमयपि मत्थ अहछदो। गअ सुदरमेवं नेवत्ति मई महापाव ॥५०॥

मनिकम्य श्रीहरिभद्रसूरिप्रभृतीनां पूर्वाचार्याणामसनशीकाराद् वृत्तिप्रकरणपरित्रायनशीकाराच लुम्पाकवत् सिद्धान्तोऽपि केव लमत्र रूप यम, तत्र—"सुत्तं गणहररइअं तहेव पत्तेअबुद्धरइअं च२। सुअकेवलिणा रइअं२ अभिन्नदसपुव्विणा रइअं४ ॥१॥"ति गाथा न सिद्धान्तोक्ता, किन्तु शास्त्रसंप्रदिष्टीगता, संप्रदिष्टी च पूर्वापर्यरचित प्रकरणमिति माता मे वन्ध्येति न्यायमापन्न मन्त तरीयामथ तां गाथां पुरस्कर्वाणोऽपि न लज्जत, तथा कमलसंयमवादी मिथ्यादृष्टिरेव भवति, यदागमः—"अपरिच्छिअसुअनिहसस्स कयनममियमुपमासिम्म। मच्छुऊमपावि कय अच्याणतव बहुं पडइ ॥१॥ जह दाइअमिवि पहे तस्स विसेसे पहस्सऽयाणतो। प हिओ किलिस्सइ बत्र तह लिंगायारसुअमित्त ॥२॥ (४१५-६) श्रीउपदेशमालायाम्, यत्र दिग्मात्रमार्गवर्त्तको यथा पथिकं एवमयति तथा कलमग्रवादी धर्मश्रोतारं संसार शातयतीति दृष्टान्तः, अत्र युक्तिस्तु पर्युषणादशकाशतकटीकातो ज्ञेया, एवं

मत्यपि 'किचे'ति दूषणाभ्युच्चये, आगमेऽनुक्तं—स्तनिकाभिमतागमे क्वापि नोक्तं तीर्थानुमतं—तीर्थस्य सम्मतं तत्र यथाच्छन्दः—स्वे-
च्छाचारी यत एवं तदेव सुन्दरमेवं च नेति मतिः, सा च मतिर्महापापं, केवलिनामपि वाचामगोचरगतिकम्, अयं भावः—तीर्थाभिमतं
तदभिमतसिद्धान्तानुक्तं चेति ज्ञात्वाऽपि सिद्धान्तोक्तकारित्वमात्मनो मन्यमानः किंचित्स्वीकरोति किंचिच्च नेति यथाच्छंदत्वं
शैथिल्यसूचकं, तथाहि—चैत्यवन्दनकायोत्सर्गेऽष्टोच्छ्वासमानं ललितविस्तरावृत्तौ श्रीहरिभद्रसूरिभिरेवोक्तं, न पुनः क्वापि तदभि-
मतसिद्धान्ते १ श्राद्धानामालोचनायां प्रायश्चित्तदानविधिः प्रकरणेष्वेवोक्तः २ श्राद्धानामीर्यापथिकादिसूत्रपठनं साधुसदृशं न सि-
द्धान्तोक्तं ३ श्राद्धाना वन्दनके द्वादशावर्त्तविधिर्न सिद्धान्तोक्तः 'किइकम्मकरो हवइ साहु'त्ति वचनात् ४ पौषधग्रहणविधिः पारण-
कविधिश्च नागमोक्तः ५ तथा पौषधोच्चारदण्डकविधिर्ग्रन्थिकसामायिकविधिश्च न सिद्धान्तोक्तः ५ सामायिकदण्डकोऽपि चूर्ण्याद्युक्तो-
ऽपि 'दुविहं तिविहेण'मित्येवास्ति, न पुनर्मणेणमित्यादि व्यक्तिः ६ साधुसाध्वीनां मुखपोतिकाप्रतिलेखनविधिर्भिन्नः क्वाप्युक्तो ना-
स्ति ७ योगविधिराचार्यपदवाचकपदप्रतिष्ठाविधिः सूरिमन्त्रसाधनविधिश्चेति न सिद्धान्तोक्तः ८ श्राद्धादिसमक्षं पर्युषणाकल्पकर्षण-
लौकिकटिप्पनकोपरि दीक्षादानपर्युषणादिकरणं चेत्यादिकं तीर्थाभिमतमेव क्रियते, न पुनः सिद्धान्तोक्तं ९, तथा प्रतिक्रमणसूत्रं १
पुक्खरवरदी २ सिद्धाणं बुद्धाणं ३ तृतीयादिसामायिक ४ पर्वान्यदिनपौषधः ५ सिद्धान्तवृत्ति ६ तीर्थकरादिचरित्र ७ श्रीहरिभद्रसूरिप्रमु-
खरचितप्रकरण ८ श्रीहरिभद्रसूरिप्रमुखगीतार्थ ९ यतिप्रतिष्ठा १० आरात्रिक ११ कुसुमाञ्जलि १२ जिनाग्रप्रदीप १३ चतुर्विंशतिजिनपट्टक-
१४ नवग्रहसंयुक्तजिनप्रतिमा १५ पञ्चकल्याणीप्रतिमा १६, क्षामणदण्डकादीनां तीर्थाभिमतानामपि सिद्धान्तानुक्तत्वेन हेतुना परित्या-
गवचनानि स्वपरिमितानि लिखितुमशक्यानि स्वधिया बोध्यानीति गाथार्थः॥५०॥ अथोक्तप्रकारेण स्तनिकस्योपलक्षणादन्येषामपि
तीर्थमन्तरेण नान्यत्किमपि शरणमिति केन प्रकारेण तीर्थान्तर्वर्त्ती स्यात् केन च तीर्थबाह्य इति विभणिषुः प्रथमप्रकारमाह—

रकृष्टं वा श्रेयो-मङ्गलं, कुपाक्षिकमार्गाश्रयणापेक्षयाऽन्यतीर्थिकमार्गाश्रयणं सुन्दरमेवेतिगाथार्थः॥५३॥ अथ तत्र दृष्टान्तमाह—

**जह नाम कोइ दुहगो चिच्चाऽमियभायणं तु महुरंपि। विसमवि चइउं चउरो भक्खंतो मिच्छकंदाइ ॥५४॥**

यथा नामेति कोमलामन्त्रणे दुर्भगोऽमृतभाजनं-पीयूषपात्रं तु त्यक्त्वा मधुरमपि विषं त्यक्त्वा म्लेच्छकन्दादि-लशुनादि भक्षयन् चतुरो भवति,यद्यपि लशुनादिभक्षणं कुलीनानां निन्द्यं दुर्गन्धदुःस्वाद्यं भक्षितुमनुचितं, विषं तु किंचिन्नालिकेरकर्पूरादिसंयोगजन्यं सुस्वाद्यं सुगन्धि सुवर्णं च भवति, तथापि तथाविधमपि विषं त्यक्त्वा, अपिरेवार्थे व्यवहितः संबध्यते, त्यक्त्वैव तुच्छभक्षणीयमपि तथाविधं लशुनं भक्षयन् न जीवितव्यान्मुच्यते,तथा 'जीवन्नरो भद्रशतानि पश्यती'ति न्यायात् पुनरपि स सुभोजनं लभते, तथा-ऽन्यतीर्थिकः कश्चित्तथाविधोऽपि इह परत्र वा बोधिं लभते, अभिनिवेशी तु नियमादुर्लभबोध्येव, यदागमः—"पंचहिं ठाणेहिं जीवा दुल्लहबोहिअत्ताए कम्मं,पकरेंति, तं०—अरहंताणं अवण्णं वयमाणे१ अरहंतपण्णत्तस्स धम्मस्स अव०२ आयरिअउवज्झायाणं अ०३ चाउवण्णस्स संघस्स अ०४ विविक्कतवबंभचेराणं देवाणं अ०५" इति श्रीस्थानाङ्गे, अत्र त्वेकस्याप्यवर्णवादेन दुर्लभ-बोधिता भणिता,उत्सूत्रभाषी तु युगपत्सर्वेषामप्यवर्णवादीति प्रागुक्तमिति गाथार्थः ॥५४॥ अथोत्सूत्रमार्गाश्रयणापेक्षया श्रेयोऽन्यतीर्थिकतीर्थाश्रयणमित्यत्रापि दृष्टान्तमाह—

**तेणेव जिणवरेणं जइलिंगधरो अकज्जकज्जकरो। तम्हा चइउं लिंगं सुसावगो सुंदरो भणिओ ॥५५॥**

येन कारणेन प्रागुक्तं तेनैव कारणेन यदि यतिलिङ्गधरो अकार्यकार्यकरः-अब्रह्मसेवाद्यासक्तः, तस्मात्कारणाद्यतिलिङ्गं त्यक्त्वा सुश्रावकः शोभन इति जिनवरेण भणितः,अयं भावः शोभनः, यतः-"नय पवयणुड्डाहकरे कंठग्गयपाणसेसेऽवि"त्ति प्रवचनवचः, तथा यदि मिथ्यात्वं तूभयोरप्यावश्यकं तर्ह्युत्सूत्रभाषणं हि तीर्थस्य महाशातना, तत्परित्यागेनैव तच्छोभनमिति गाथार्थः ॥५५॥

